[1]प्रपञ्चमूलो हि शिवः कालाभ्रसन्निभा वदेत्।
द्वितीयवाक्येऽपि तथा घोरदंष्ट्रेति संवदेत् ॥ २९ ॥

तृतीयवाक्ये देवेशि द्वितीयां सुन्दरीं प्रति।
त्रैलोक्यसुन्दरी प्राणप्रिये मम स्वरूपिणी ॥ ३० ॥

इत्युक्ता[2] दक्षिणा देवी ब्रह्मरूपाद्यचण्डिका।
आदिशक्तिः पूर्णरूपा क्रोधाविष्टा बभूव च ॥ ३१ ॥

तदा तु सुन्दरं[3] रूपं सौभाग्यार्णवकं परम्।
राजराजेश्वरीरूपं बिभ्रती[4] परमेश्वरी ॥ ३२ ॥

तदा परशिवः शम्भुर्विस्मयाविष्टलोचनः।
प्रकर्षेण तु पञ्चानां संयोगो युगपद्भवेत् ॥ ३३ ॥

प्रपञ्चातीतशीलेन[5] गदिता परमेश्वरि।
महाप्रपञ्चरूपा वै कोटिब्रह्माण्डनायिका ॥ ३४ ॥

षोडशी वै तदा जाता महाश्रीचक्रनायिका।
आद्या श्रीदक्षिणाकाली द्वितीया काल[6]भैरवी ॥ ३५ ॥

तृतीया राजराजेशी विद्या या[7] परिकीर्तिता।
तस्याः कृपाकटाक्षेण राजराजेश्वरो[8] ह्यभूत् ॥ ३६ ॥

न्यासजालादिकं सर्वं[9] पूजामंत्राण्यनेकधा।
तदैव च षडाम्नाया ऊर्ध्वाम्नायादिकाः प्रिये ॥ ३७ ॥

पूर्वा[10] प्रकृतिरूपा स्यान्मूलविद्या प्रियंवदे।
तदाम्नायप्रपञ्चोऽयं[11] निर्मितः परमेश्वरि ॥ ३८ ॥

काद्यं मतं कादिमतं हाद्यं हादिमतं[12] प्रिये।
ककारो ह्यादिभूतस्तु हकारस्त्यन्तगो[13] मतः ॥ ३९ ॥

क्षकारो मेरुसंज्ञस्तु स्वराः षोडश कीर्तिताः।
कहेत्येवं महा[14]मंत्रस्तूत्तराम्नायगोचरः ॥ ४० ॥

उत्तराम्नायराज्ञी च श्रीमहातारिणी तु सा[15]।
सुन्दरी कालिकारूपा श्रीमहाब्रह्मतारिणी ॥ ४१ ॥

[16]तारिणीद्वितयं देवि[17] सर्वदा तिष्ठति प्रिये।
एवं युग्मात्मको मन्त्रः कादिहादिमतात्मकः ॥ ४२ ॥

प्रथमः कादिवर्णो[18] वा हादिकः प्रथमोऽस्य वा।
कादिः प्रथमवर्णः स्यात् हादिश्चरम ईरितः ॥ ४३ ॥

[1] D omits two lines. [2] D °क्ते। [3] U °री°। [4] D °ता। [5] AU प्रपंचशीलेन। [6] U °म°। [7] U श्रीविद्या। [8] B °री। [9] D देवि। [10] A °र्वं। [11] U [12] D महेशानि तथा कादिमतं। [13] U °स्तूत्तमो; D को। [14] U ह्यादि°। [15] U [16] A omits this line. [17] D द्वितीयं देवदेवेशि। [18] U °र्गो।

वीरेश्वराणां गणना नास्त्येव प्रियवादिनि ।
मातृकेति तथेत्युक्ता तदक्षरसमन्विता ॥ ४४ ॥

सम्पूर्णमातृका[1] देवि विद्यात्वेन[2] न संशयः ।
तस्मात्कादिमतं चाद्यं कीर्तितं प्रियवादिनि ॥ ४५ ॥

कादिहादिश्चादिवर्णैर्गृ[3]ह्यते यदि भाविनि ।
कादिहादिस्तु सर्वत्र मंत्रः प्रोक्तो महेश्वरि ॥ ४६ ॥

ककाराद्ब्र[4]ह्मरूपत्वं सुन्दरी परशिवात्मिका ।
कलौ कादिमतं पुण्यं पूर्वमेकं स्थितं प्रिये ॥ ४७ ॥

एवं संसारसिध्य[5]र्थं प्रपञ्चो निर्मितः पुरा ।
आगमे बहवो भेदाः[6] षड्दर्शनप्रकारजाः ॥ ४८ ॥

अन्येऽपि कोटिशो भेदाः सन्त्येव प्रियवादिनि ।
धर्म[7]शास्त्रं चतुर्वेदाः पुराण व्याकृति[8]स्तथा ॥ ४९ ॥

न्यायमीमांसावेदान्तसांख्यपातञ्जलं तथा ।
काव्यदि[9]बहवो भेदाः[10] प्रपञ्चा एव कीर्तिताः ॥ ५० ॥

यदारभ्य धृतं रूपं सुन्दरं परमेश्वरि ।
तदारभ्य प्रपञ्चोऽयं सर्वत्र परिवर्तते ॥ ५१ ॥

यदि[11] कादि[12]मतं चैकं वर्तते सत्यवादिनि ।
तदा पुमांसो देवेशि महाकालस्वरूपिणः ॥ ५२ ॥

स्त्रियः श्रीकालिकारूपा भवन्त्येव न संशयः ।
इत्येवं हि प्रपञ्चार्थं शाक्तं वैष्णवशाम्भवम् ॥ ५३ ॥

गाणपं सौरबौद्धं च षड्दर्शनमितीरितम् ।
मतानि बहुसंख्यानि संजातानि सुरेश्वरि ॥ ५४ ॥

वैदिके शास्त्रनिन्दा स्याच्छाक्ते वैष्णवनिन्दितम् ।
वैष्णवे शैवनिन्दा स्यात्सौरे[13] गणपतेस्तथा ॥ ५५ ॥

गाणपत्ये सौरनिन्दा सौरे वीरस्य निन्दनम् ।
चीने जैनस्य निन्दा स्यात् जैने कापालिकस्य च ॥ ५६ ॥

कापालिके बौद्धनिन्दा बौद्धा नानाविधा मताः[14] ।
एवं भिन्नमतान्याहुः पुराणाद्येषु शाम्भवि ॥ ५७ ॥

वेदानां चैव शाखा वै बहवः परिकीर्तिताः ।
एवं निन्दा समापन्ने भेदे जाते महेश्वरि ॥ ५८ ॥

1 D सा सम्पूर्णात्मिका । 2 A ये चान्ये च । 3 ABD °र्णो गृ° । 4 D °रो ब्र° । 5 D °द्धा° । 6 D भोगाः । 7 U सर्व° । 8 D °हृ° । 9 A ° द्या° । 10 D भोगाः । 11 A हादि ; D कादि । 12 D हादि° । 13 B °च्छैवे । 14 U बौद्धे नानामतानि च ।

नैकत्र तु मनो[1] लग्नं न कस्य प्रियवादिनि ।
सर्वत्रान्योन्यनिन्दा तु प्रपञ्चेन[2] प्रकाशिता ॥ ५९ ॥

भिन्नं भिन्नं प्रशंसन्ति निन्दन्ति च परस्परम् ।
न विद्या सिद्धिमाप्नोति संभ्रमन्ति पिशाचवत् ॥ ६० ॥

अन्योन्यं यदि निन्दा न तदैवैक्यं प्रजायते ।
तस्मादैक्यसुसिध्यर्थं कालिका भवतारिणी ॥ ६१ ॥

पुनर्वै दैत्य[3]नाशार्थं रूपं सुन्दरमेवतु ।
संबिभ्रती महादेवी शुम्भाद्याखिलनाशिनी ॥ ६२ ॥

सप्तप्रेतैकपर्यङ्कराजिते[4] शवहृच्छिवा ।
श्वेतरूपमहाकालहृदयाम्भोज[5]वासिनी ॥ ६३ ॥

कोटिकालानलज्वाला सेवनीया[6] विधानतः ।
सर्वं सर्वादिभूतेयं कोटिसिद्धिप्रदायि[7]नी ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ६४ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यतारासंवादे ब्रह्मवीरायोगो [8] नाम पञ्चमः[9] पटलः ॥

[1] BA नैक उत्तमतो ; D नैकोभयमनो° । [2] A °ञ्चोऽयं । [3] D °न्य° । [4] B एतत्ते । [5] U °योपरि । [6] BD रोचनीया । [7] D °य° । [8] D °विद्या । [9] MSS तृतीयः ।

# षष्ठः पटलः ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि शक्तिकोणवि[1]निर्णयम् ।

श्रीशिव उवाच ।

त्रयोऽग्नय[2]स्त्रयो ग्रामाः देवाश्चापि त्रयो गुणाः ॥ १ ॥

भावत्रयं तथा शक्तित्रयी नाडी त्रयात्मिका ।
त्रिधा सिद्धि[3]स्त्रितत्त्वाख्यं पात्रत्रयमथा[4]द्भुतम् ॥ २ ॥

त्रिकोणवासिनी काली वीरसिद्धा वरप्रदा ।
ध्येया ज्ञेया[5] कलौ देवि नान्यविद्या कदाचन ॥ ३ ॥

सुन्दरी शिथिला[6] देवि राजसी गुप्तदर्शना ।
दशकोटिप्रजापाद्यै[7] कदाचिद्वरदा भवेत् ॥ ४ ॥

कलौ काली कलौ काली कलौ काली च केवला ।
श्रीमत्कादिमताधी[8]शा कलौ शीघ्रफलप्रदा ॥ ५ ॥

सदा पञ्चमकारैश्च पूजयेत्कालिकाम्बिकाम् ।
शक्तिं विना न हि जपेत् न शक्तिः कारणं विना ॥ ६ ॥

सदा पञ्चमरूपोऽहमित्येवं परिभावयेत् ।
एवं भावसमायुक्तः षोढान्यासपरो भवेत् ॥ ७ ॥

दशविद्याविधौ देवि दशधा भिन्नभिन्नतः[9] ।
श्रीविद्यायां महेशानि षोढापञ्चकमीरितम् ॥ ८ ॥

लघुषोढा पूर्व[10]षोढा महाषोढा तृतीयका ।
चतुर्थी मंत्रषोढा च पञ्चमी गुह्यषोढ[11]का ॥ ९ ॥

षोढाषट्कं कालिकायां भेदभेदान्तरेण च ।
लघुषोढा महाषोढा गुह्यषोढा तृतीयका ॥ १० ॥

मंत्रषोढा शक्तिहंसी दिव्यषोढा रसाभिधा ।
षोढाद्यचक्रकं क्रोधे[12] छिन्ना या वह्निसंज्ञिका ॥ ११ ॥

श्यामलायां[13] तथा देवि चान्यासु द्वितय शिवे ।
लघुषोढा महाषोढा द्वितयं परमेश्वरि ॥ १२ ॥

प्रत्येकं षड्‌षित्वं च सध्यानं च समाचरेत् ।
ऋषिच्छन्दादिकं यत्र कीर्तितं परमेश्वरि ॥ १३ ॥

[1] U °स्य । [2] B त्रियोनय° । [3] A शक्ति° । [4] U समु° । [5] AB सेव्या । [6] D °खिना । [7] U °द्यैः । [8] D °स्वा° । [9] U °ता । [10] D पंच° । [11] B °ढि° । [12] B °धो । [13] U चपलायां ; A कालिकायां ।

तदेव तत्र गदितमनुक्ते मूलदेवता[1] ।
ध्यानं छन्दादिकं स्तोत्रं देवीवत्सर्वमेव तु ॥ १४ ॥
अयुतं च पुरश्चर्या न्यसन[2]क्रममार्गतः ।
इति संक्षेपतः प्रोक्तं सर्वमेतत्किमिच्छसि ॥ १९ ॥

**श्रीदेव्युवाच ।**

क्रमेण दशविद्यायां कुल्लुकार्चाविधिं वद ।

**श्रीशिव उवाच ।**

काली तारा तथा छिन्ना सुन्दरी बगलामुखी ॥ १६ ॥
मातङ्गी श्यामला लक्ष्मीः सिद्धविद्या च भैरवी ।
धूमावती क्रमेणैव महाविद्या दशैव तु ॥ १७ ॥
काली कूर्चं वधू माया फडंता कुल्लुका मता ।
अघोराख्यो ऋषिः प्रोक्तो विराट् छन्दः प्रकीर्तितम् ॥ १८ ॥
देवता कुल्लुका काली बीजं मायाभिधं मतम् ।
कामशक्तिस्त[3]था कूर्चं कीलकं परिकीर्तितम् ॥ १९ ॥
षड्दीर्घाढ्येन कामेन षडंगन्यासमीरितम् ।
ध्यानपूजादिकं सर्वं कालिकावत्समाचरेत् ॥ २० ॥
माया रमा तथा कूर्चं तारिणी कुल्लुका मता ।
तारिणीकुल्लुकायाश्च विरूपाक्षो ऋषिः स्मृतः ॥ २१ ॥
उष्णिक् छन्दः समाख्यातं देवता नीलता[4]रिणी ।
कूर्चबीजं तथा माया शक्तिर्वधू च कीलकम् ॥ २२ ॥
मायाया तु षडङ्गानि सर्वनीला सरस्वती ।
वज्रवैरोचनी प्रोच्य संबुद्धयन्ते सवर्म च ॥ २३ ॥
अतिकालो ऋषिः प्रोक्तो गायत्र्यं छन्द ईरितम् ।
हँ[5]बीजं मूँ[6] तथा शक्तिः कीलकं रोचिनी मता ॥ २४ ॥
शिवं षड्[7]दीर्घयुक्तेन[8] षडङ्गं न्यासमाचरेत् ।
ध्यानपूजादिकं सर्वं छिन्नावत्समुपाचरेत् ॥ २९ ॥
संपत्प्रदायाः प्रथमं बीजं श्री भैरवीमनौ ।
विकरालो ऋषिः प्रोक्तः पंक्तिश्छन्दः प्रकीर्तितम्[9] ॥ २६ ॥
देवता भैरवीनाम्ना कुल्लुका परिकीर्तिता ।
हँबीजं सौँ[10]महाशक्तिरमन्त्रं कीलकं मतम् ॥ २७ ॥
षड्दीर्घाढ्येन बीजेन षडङ्गन्यासमाचरेत् ।
ध्यानपूजादिकं सर्वं बालावत्समुपाचरेत् ॥ २८ ॥

[1] U ०वत् । [2] D °नं ; U न्यासानु° । [3] U °क्ति त° । [4] D °धा° । [5] D जं । [6] D सूँ । [7] D षट्क° । [8] U °योगेन । [9] D उदाहृतं । [10] B सं ।

सुन्दर्याः कुल्लुका देवि सम्प्रोक्ता द्वादशाक्षरी ।
वाग्भवं कामराजं च लज्जा च त्रिपुरे पदम् ॥ २९ ॥

शी च[1] भगवती प्रोच्य[2] तदन्ते ठद्वयं वदेत् ।
सुन्दरी कुल्लुकायास्तु ऋषिरानन्दभैरवः ॥ ३० ॥

गायत्री छन्द आदिष्टं वाग्भवं बीजमीरितम् ।
लज्जा शक्तिर्महेशानि कामबीजं च कीलकम् ॥ ३१ ॥

देवता त्रिपुरेशी च षडङ्गेति[3] द्वयेन च ।
ध्यानपूजादिकं सर्वं सुन्दरीवत्समाचरेत् ॥ ३२ ॥

मातङ्गी बगला लक्ष्मीर्धूम्रोच्छिष्टाक्रमे शृणु ।
तारं कूर्चं नारसिंहैः पञ्चानां[4] कुल्लुका मता ॥ ३३ ॥

ऋषिर्भैरवनामा च यावच्छन्दांसि पार्वति ।
देवता सै[5]व बीजादि[6] स्वस्व[7]देवक्रमेण वै ॥ ३४ ॥

ध्यानपूजादिकं सर्वं स्वस्वदेववदाचरेत् ।
इति संक्षेपतः प्रोक्तं कहरूपं[8] शृणु प्रिये ॥ ३५ ॥

[9]कहेश्वरी महाविद्या द्रुतं[10] सिद्धिफलप्रदा ।
कहेति द्व्यक्षरो मन्त्रो यस्य वक्त्रे[11] विराजते ॥ ३६ ॥

स एव कालीरूपः स्यात्तारादेहमवाप्नुयात् ।
[12]कहेति पुष्पिणी मुख्या तत्सर्वं सर्वदा चरेत् ॥ ३७ ॥

ऋतुस्नातां[13] समादाय तस्या * * प्रपूजयेत् ।
* *पूजनमात्रेण त्रैलोक्यविजयी शिवः ॥ ३८ ॥

त्रिकोणसंज्ञा * * स्यात्तत्रस्थो विन्दुरुच्यते ।
त्रिकोणमध्ये साङ्गां वै तथा सावरणां प्रिये ॥ ३९ ॥

सरहस्यां प्रपूज्याथ तत्र यन्त्रं विभावयेत् ।
कृत्वाऽवरणपूजां च यत्किञ्चित् जपति प्रिये ॥ ४० ॥

तत्सर्वं सिद्धिदं देवि[14] नात्र कार्या विचारणा ।
तया यदुच्यते देवि शुभं वा यदि वाऽशुभम् ॥ ४१ ॥

तत्सर्वं यत्नतो देवि कर्तव्यं हितमिच्छता ।
* * * *मृतैर्देवि तर्पणं सर्वदा चरेत् ॥ ४२ ॥

ब्रह्मरूपा सिद्ध[15]रूपा प्रसन्ना कालिका भवेत् ।
[16]उत्तमा * *पूजा स्याद्यन्त्र[17]पूजा च मध्यमा ॥ ४३ ॥

[1] DU श्री च ; B ततो । [2] A शक्ति । [3] D °ज्ञात्र । [4] U पंचमी । [5] A शै° । [6] U °नि । [7] D तत्तद्° । [8] U °केयं । [9] B कान्हे° । [10] A °द्रुत° । [11] AD चित्ते । [12] B omits two lines । [13] A अत्युन्नतां । [14] D omits नात्र...देवि in the next line । [15] D °द्धि° । [16] U omits two lines । [17] D °न्मन्त्र° ।

अधमा मूर्तिपूजा च पादपूजा वृथा भवेत् ।
* * पूजा नाभिपूजा कोणाभावे प्रकीर्तिता ॥ ४४ ॥

कोणे तदीये विद्यन्ते नाड्यस्तिस्रः प्रधानिकाः ।
अम्बु स्रवति चान्द्रीया पुष्पं स्रवति भानवी ॥ ४५ ॥

बीजं स्रवति चाग्नेयी त्रिकोण[1]मध्यगा[2] स्मृता ।
आग्नेयीनाडिकां वीक्ष्य पूज्य जाप्य प्रतर्पयेत् ॥ ४६ ॥

* * * *मृतैः कुण्डगोलोत्थैः स्वस्त्र[3]पुष्पकैः ।
स्वयम्भूकुसुमैर्देवि पूजयेत्कालिकां सदा ॥ ४७ ॥

मुण्डमाला गले धार्या महाशङ्खं कराम्बुजे ।
ध्यायेत् * * मुखे हाला[4] कामबाला तवाग्रतः ॥ ४८ ॥

न[5]रमाला दन्त[6]माला स्मशानं[7] योनि[8]मण्डलम् ।
एवं यः कुरुते देवि त्रिशक्तिसिद्धिमाप्नुयात् ॥ ४९ ॥

अन्यथानन्तजापैश्च वीरसाधनकोटिभिः ।
त्रिशक्तयो न सिध्यन्ति किमन्यच्छ्रोतुमिच्छसि ॥ ५० ॥

इति श्रीशक्तिसंगममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यतारासंवादे शक्तिकोणविनिर्णयो नाम षष्ठः[9] पटलः ।

[1] A विकारो । [2] A °मा । [3] D °श्च सु° । [4] U हस्त । [5] B क° । [6] D °ण्ड° [7] B स्वासनं । [8] A ज्योति° । [9] MSS चतुर्थः ।

# सप्तमः पटलः ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि यक्षिणीमण्डलं शुभम् ।

श्रीशिव उवाच ।

गन्धर्वाप्सरसो यक्षकिन्नरा गुह्यकादयः ॥ १ ॥

एतेषां देवदेवेशि मण्डलानि बहूनि च ।
यक्षिणीमण्डलं चादौ ततो गन्धर्वमण्डलम् ॥ २ ॥

अप्सराकिन्नरीयुग्मे ततो गुह्यकयुग्मकम्[1] ।
भूतिनीनागिनीयुग्मे कूष्माण्डमण्डलं ततः ॥ ३ ॥

महाक्रोधेन क्रोधेन श्रीपार्षन्मण्डलेन वा ।
अन्यथा नैव सिध्यन्ति लक्षकोटियुगैरपि ॥ ४ ॥

महाविद्यामहायक्ष्या मण्डलं सिद्धमण्डलम् ।
महायक्षश्च यक्षिण्यो महायक्षश्च यक्षकः ॥ ५ ॥

कस्मिन्को वा भवेद्यक्षो महायक्षश्च को भवेत् ।
[2]यक्षिणी का च कस्यां च महायक्षी तु का भवेत् ॥ ६ ॥

एतदज्ञानतो देवि नहि सिध्यन्ति कुत्रचित्[3] ।
पूर्वोक्तमण्डलान्यत्र सिध्यन्ति विद्यया ध्रुवम् ॥ ७ ॥

आदौ काली च तद्यक्षी महामधुमती परा ।
द्वितीया भ्रामरी या च सुन्दर्याः सुरसुन्दरी ॥ ८ ॥

भैरव्याश्चन्द्ररेखा च भार्या च भगिनी सुता ।
मता [4]शाली केलिकुञ्ची[5] श्वश्रूश्च[6] शालभञ्जिका[7] ॥ ९ ॥

यक्षिणीरूपमाख्यातं महायक्षी च[8] मातृका ।
तारायास्तारिणी यक्षी किंकटा पद्मनायिका[9] ॥ १० ॥

छिन्नाया लम्पटा यक्षी बगलाया[10] बिडालिका ।
कमलायास्तु धनदा भुवनेश्याः शृणु प्रिये ॥ ११ ॥
[11]त्रैलोक्यमोहिनी यक्षी मातंग्याः शृणु यत्नतः ।
श्रीमनोहारिणी प्रोक्ता धूमावत्याः शृणु प्रिये ॥ १२ ॥
भीषणी यक्षिणी प्रोक्ता दशमण्डलमीरितम् ।
दशविद्याविधौ देवि महायक्ष्यः प्रकीर्तिताः ॥ १३ ॥

[1] AB ह्यकं ; D मण्डलं । [2] U omits this line । [3] B मन्त्राः सिध्यन्ति न कंचित् । [4] B माता ; D मातंग्या । [5] D केशिकुण्डी ; A °ण्ठी । [6] D स्वस्रा च । [7] D पंजिका ; A भञ्जिका । [8] U यक्षिणी चैव । [9] B °जापिका । [10] U बालाया च । [11] B omits two lines.

यद्विद्यायाश्च या यक्षी सा तस्याः सेवका मता[1] ।
तस्याश्चोपासको यो हि तस्य सा सिध्यति ध्रुवम् ॥ १४ ॥
अन्यमन्त्रं जपन्मर्त्यो[2] यां काञ्चिद्यक्षिणीं जपेत् ।
न तस्य फलसिद्धिः स्याद्यक्षिणीकोपमाप्नुयात् ॥ १५ ॥
दशमण्डलयक्षिण्या भेदा वै कोटिशः स्मृताः ।
तेऽपि[3] वै दशविद्यानां भेदाः सिध्यन्ति नान्यथा ॥ १६ ॥
भूतमण्डलमप्यत्र सिद्धं भ[4]वति निश्चितम् ।
एतद्यो वै न जानाति तस्य यक्षी[5] कथं भवेत् ॥ १७ ॥
अथाष्टनायिका यक्ष्यः सिध्यन्त्यत्र महेश्वरि ।
षट्त्रिंशद[6]त्र यक्षिण्यो यक्षिण्यः षोडश प्रिये ।
विद्यासिद्धौ प्र[7]सिध्यन्ति ना[8]न्यथा नाशमाप्नुयात् ॥ १८ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यतारासंवादे
यक्षिणीमण्डलं नाम सप्तमः[9] पटलः ।

[1] DU परा । [2] ADU जप्यमानो । [3] D तथा । [4] D °द्विर्भ° । [5] U रक्षां ।
[6] D °ध° । [7] D °विधौ न । [8] D अ° । [9] MSS पञ्चमः ।

# अष्टमः पटलः ।

श्रीदेव्युवाच ।

विद्यासिद्धिं विना देव सिध्यति न हि वा वद[1] ।
यक्षिण्यादिमहासिद्धिस्तस्य हस्ते कथं भवेत् ॥ १ ॥

श्रीशिव उवाच ।

एतज्ज्ञानवशाद्देवि सर्वं सिध्यति नान्यथा ।
अप्सरोमण्डलं देवि [2]किन्नरीमण्डलं तथा ॥ २ ॥

गन्धर्वमण्डलं देवि सिद्धगुह्यकमण्डलम् ।
पिशाचमण्डलं चैव[3] भूतिनीमण्डलं तथा ॥ ३ ॥

नागि[4]नीमण्डलं देवि डाकिनीमण्डलं तथा ।
कुष्माण्डमण्डलं देवि तथा शाबर[5]मण्डलम् ॥ ४ ॥

दशविद्याक्रमेणैव श्रीक्रोधमण्डलेन वा ।
पार्षन्मण्डलयोगेन सर्वाः सिध्यन्ति सिद्धयः ॥ ५ ॥

मण्डलत्रितये देवि अप्सराद्याः सुसिद्धिदाः ।
मन्त्रसिद्धिविधानेन सर्वाः सिध्यन्ति केवलम् ॥ ६ ॥

काली तारा सुन्दरी च त्रियोगात्सिध्यति ध्रुवम् ।
अन्यथा नैव सिध्यन्ति नात्र कार्या विचारणा ॥ ७ ॥

इति संक्षेपतः प्रोक्तं दीक्षां तत्र[6] शृणु प्रिये[7] ।
कादितन्त्रोक्तमार्गेण पूर्णदीक्षा प्रकीर्तिता ॥ ८ ॥

बृहत्–श्रीक्रमतंत्रोक्ता ऊर्ध्वाम्नायस्वरूपिणी ।
सुधाशांभवतंत्रोक्ता [8]शान्तिनिर्वाणरूपिणी ॥ ९ ॥

पराताण्डवतंत्रोक्ता शाम्भवाख्या प्रकीर्तिता ।
शक्तिसङ्गमतंत्रोक्ता शाम्भवाख्या प्रकीर्तिता ॥ १० ॥

ऊर्ध्वाम्नायपरिज्ञानं पराप्रासादचिन्तनम् ।
महाषोढापरिज्ञानं[9] नाल्पस्य तपसः फलम् ॥ ११ ॥

पर्यायनित्याविज्ञानं नित्यानित्यप्रपूजनम् ।
षष्टिजपप्रकारश्च नाल्पस्य तपसः फलम् ॥ १२ ॥

[10]पञ्चषोढापरिज्ञानं शक्तिन्यासस्य चिन्तनम् ।
नामपारायणं नाम मंत्रपारायणं तथा ॥ १३ ॥

[1] A हि वरप्रद । [2] A omits किन्नरी...देवि in the next line । [3] U देवि । [4] D गालि° । [5] D °रद° । [6] B °तन्त्रं ; D तच्च । [7] B adds शिव उवाच । [8] BD निर्वाणरूपिणी परा । [9] U °स्कारो । [10] A omits five lines.

युगनित्यापरिज्ञानं नाल्पस्य तपसः फलम् ।
[1]पूर्णाभिषेकषट्कं च[2] कालिकामंत्रचिन्तने ॥ १४ ॥

नीलसाधनकं कर्म नाल्पस्य तपसः फलम् ।
चरण[3]त्रयचिन्ता[4] च शाम्भवादौ परिक्रिया[5] ॥ १५ ॥

काली तारा नामधर्मौ[6] नाल्पस्य तपसः फलम् ।
अनिरुद्धसरस्वत्याः समा विद्या न चास्ति वै ॥ १६ ॥

एतस्या ज्ञानमात्रेण किन्न सिध्यति भूतले ।
श्रीविद्यायां महेशानि वीरसाधनमाचरेत्[7] ॥ १७ ॥

अहोरात्रे कलौ तारा सुन्दरी सुप्रसीदति ।
सुन्दर्यां नीलगान्धर्वौ कर्तव्यौ सिद्धिमिच्छता ॥ १८ ॥

महादिव्यक्रमेणैव महावीर[8]क्रमेण च ।
महानील[9]क्रमेणैव [10]कादिहादिकहात्मिका ॥ १९ ॥

सिध्यन्त्येत्र महेशानि ए ह्रीं श्रीं च[11] पशुक्रमात् ।
अन्या दिव्यक्रमेणव एता अपि महेश्वरि ॥ २० ॥

स्वयम्भूपुष्पक्रमतः कालिका सिद्धिदा भवेत् ।
स्वजातपुष्पक्रमतः साधना भैरवीमनौ ॥ २१ ॥

स्वयम्भूक्रमयोगेन किन्न सिध्यति भूतले ।
वाचा सर्वं तु भवति वाग्भवं तेन कीर्तितम् ॥ २२ ॥

वाग्भवं ब्रह्मरूपं च ह्यर्धनारीश्वरः स्वयम् ।
शिवशक्त्यात्मकं बीजं यो जानाति स साधकः ॥ २३ ॥

वाग्भवं सर्वमूलं तु शक्तिच[12]क्रात्मकं प्रिये ।
शक्तेः समरसानन्दसंयोगे यत्सुखं प्रिये ॥ २४ ॥

तत्सौख्यरूपं देवेशि वाग्भवं बीजमीरितम् ।
निर्गुणं तु निराकारं सच्चिदानन्दविग्रहम् ॥ २५ ॥

निर्द्वन्द्वं निरहङ्कारं तद्ब्रह्म[13] परिकीर्तितम् ।
ईदृशं[14] तु परं ब्रह्म मुखादुच्चार्यते कथम् ॥ २६ ॥

मुखादुच्चार्यते सर्वं वाग्भवं मुखमुच्यते ।
वाचा सर्वं संभवति जगत्स्थावरजङ्गमम् ॥ २७ ॥

शिवशक्त्यात्मकं देवि वाग्भवं बीजमुत्तमम् ।
शक्तिः सचेतना प्रोक्ता जडः परशिवो मतः ॥ २८ ॥

[1] U omits two lines. [2] D षट् पंच । [3] AU वर्ण° । [4] AU °चिन्तना । [5] U °षिक्रया । [6] U °मौं । [7] D °रन् । [8] D °विद्या° । [9] °काली । [10] D omits कादि...क्रमेणैव in the third line. [11] A शृङ्गीवद्ध° । [12] B °श्व° । [13] D °द्धर्म । [14] A रहस्यं ।

विना शक्त्या निर्गुणस्य मुखादुच्चारणं कुतः ।
तस्माच्छक्तिं विहायाथ सर्वत्र जडता मता ॥ २९ ॥
मुखे[1] शक्तिसमा[2]योगाद्ब्रह्मसंज्ञाऽभिधीयते ।
मुखे शक्तिः स्थिता नित्या वाक्शक्तिरिति कीर्तिता ॥ ३० ॥
अर्धनारीश्वरं रूपं वाग्भवं कीर्तितं प्रिये ।
[3]सर्वादिभूतं तु मुखं परब्रह्म प्रकीर्तितम् ॥ ३१ ॥
मुखादुच्चारणं देवि सर्वेषां जायते प्रिये ।
वाग्भवं तेन सम्प्रोक्तं ब्रह्मरूपं सनातनम् ।
वाग्भवं मुखमित्युक्तं मुखं ब्रह्म प्रकीर्तितम् ॥ ३२ ॥

इति श्रीशक्तिसंगममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यतारासंवादे यक्षिण्यादिमहासिद्धिविनिर्णयो नामाष्टमः[4] पटलः ।

[1] D °खेन । [2] D सं° । [3] D omits two lines. [4] MSS षष्ठः ।

## नवमः पटलः ।

श्रीशिव उवाच ।

अथासनानि वक्ष्यामि सर्वकार्यार्थसिद्धये ।
मृद्वा[1]सनं समारूढं[2] कोमलं चूडकं तथा ॥ १ ॥

योनित्वग्विष्टरमप्यस्थि[3]भूम्यासनं तथा ।
कूर्चा[4]सनं तथा देवि तथैव सुरतासनम् ॥ २ ॥

मुण्डासनं तथा देवि पञ्चमुण्डासनं तथा ।
त्रिमुण्डमेकमुण्डं वा आसनार्थं प्रकीर्तितम् ॥ ३ ॥

चिताऽपि[5] आसने शस्ता श्मशानं सर्वयोत्तमम् ।
चूडकं च तथा प्रोक्तं तथैव च शवासनम् ॥ ४ ॥

मृतासनं तथा प्रोक्तं महाशवमथासनम् ।
वीरासनं महेशानि महावीरासनं तथा ॥ ५ ॥

योनिपुष्पासनं देवि कीर्तितान्यासनानि च ।
तत्रादौ सम्प्रवक्ष्यामि मुण्डानां लक्षणं शुभम् ॥ ६ ॥

यस्य साधनमात्रेण साक्षाच्छिवमयो भवेत् ।
ब्रह्मक्षत्रियविट्शूद्राश्चतुर्धा चास्थि[6]जातयः ॥ ७ ॥

श्वेता रक्ता तथा पीता कृष्णा वैडूर्यका मता ।
इत्येतन्मुण्डरहस्ये[7] प्रोक्तं देवि महेश्वरि ॥ ८ ॥

सद्यःकृतं त्रिरात्रस्थं सप्तरात्रस्थगं तथा[8] ।
त्रिसप्तरात्रमध्यस्थमुत्तमादिक्रमाच्छृणु ॥ ९ ॥

उत्तमं मध्यमं चैव ह्यधमं ह्यधमाधमम् ।
[9]सद्यःकृतं तु यन्मुण्डमुत्तमं परिकीर्तितम् ॥ १० ॥

त्रिरात्रमध्यगं मुण्डं मध्यगं परिकीर्तितम् ।
षड्रात्रोत्तरगं मुण्डमधमं परिकीर्तितम् ॥ ११ ॥

त्रिसप्तरात्रमध्यस्थं कीर्तितं ह्यधमाधमम् ।
सद्यःकृतं तु यन्मुण्डं सर्वकार्ये[10] प्रकीर्तितम् ॥ १२ ॥

त्रिरात्रमध्यगं मुण्डं मालायन्त्रे प्रकीर्तितम् ।
षड्रात्रोत्तरगं मुण्डं पात्रकार्ये विनिर्दिशेत् ॥ १३ ॥

त्रिसप्तरात्रमध्यस्थं मालायन्त्रादिके मतम् ।
षण्मासमध्यगं मुण्डं सामान्यं तदुदीरितम् ॥ १४ ॥

[1] A पद्मा° ।  [2] B °ढो ; D °ढा ।  [3] A स्वस्ति ।  [4] D कुशा° ।  [5] U विनापि ।
[6] D °श्चापि ; B चासि° ।  [7] DU °सि ।  [8] D शिवे ।  [9] DU omit three lines.
[10] A द्रव्यकार्ये ; B द्रवाकार्ये ।

श्रीदेव्युवाच ।

कालिकापरिशिष्टे तु ह्यन्यथा परिकीर्तितम् ।
[1]त्रिरात्रमध्यगं मुण्डं मालार्थं परिकीर्तितम् ॥ १५ ॥

षड्रात्रोत्तरगं मुण्डं सामान्यं तदुदीरितम् ।[2]
[3]सद्यःकृतं तु यन्मुण्डं सामान्यं तदुदीरितम् ॥ १६ ॥

श्रीशिव उवाच ।

सद्यःकृतं तु यन्मुण्डं मालायन्त्रे प्रशस्यते ।
पात्रार्थसाधने शस्तं ह्यभावात् सप्तरात्रिकम्[4] ॥ १७ ॥

सद्यःकृतं तु यन्मुण्डं साधनार्थं प्रकीर्तितम् ।
उत्तमं मुण्डमादाय हस्तमात्रं खनेद्धधः ॥ १८ ॥
बु

कुल[5]वृक्षस्य मूले वा स्मशाने वा चतुष्पथे ।
निर्जने शून्यगेहे वा तस्योपरि जपं चरेत् ॥ १९ ॥

बलिं दत्त्वा प्रयत्नेन दिक्पालेभ्यो विशेषतः ।
दिग्बन्धभूतशुद्धयादीन् कृत्वा वै जपमाचरेत् ॥ २० ॥

यावत्संख्यं मनुं जप्त्वा तद्दशांशेन होमयेत् ।
सिद्ध[6]मुण्डं पुरा कृत्वा मालादीन्कारयेत्प्रिये ॥ २१ ॥

स्वेच्छामृतं द्विवर्षं च वृद्धं[7] स्त्रियं द्विजं तथा ।
अन्नाभावे मृतं कुष्ठं सप्तरात्रोर्ध्वगं तथा ॥ २२ ॥

एवं चाष्टशवं त्यक्ता वीरसाधनमाचरेत् ।
व
वीरासनमिदं प्रोक्तं कालिकाप्रीतिकारकम् ॥ २३ ॥

सप्तरात्रोत्तरं प्राप्तं चान्तरिक्षे स्थितं शवम् ।
शूले निपातितं वाऽपि पात्रार्थे शस्यते प्रिये ॥ २४ ॥

अन्तरिक्षे स्थितं देवि षण्मासोत्तरगं तथा ।
मालिकायां[8] प्रशस्तं च त्वधःस्थं सप्तरात्रजम् ॥ २५ ॥

शनिभौमदिने वापि शरीरे मृतसंभवे ।
चतुर्दश्यां पौर्णमास्याममायां दीपकोत्सवे ॥ २६ ॥
संक्रान्त्यां चाष्टमीयुक्ते[9] तथा दुर्गोत्सवे प्रिये ।
एवं वीरदिने देवि[10] तथा वीररणागमे ॥ २७ ॥
जाते मुण्डं शुभं शस्तमथ शूलादिके स्थितम् ।
खड्गेन हननं कृत्वा गृहीत्वा जपमाचरेत् ॥ २८ ॥
ग

[1] A omits this line. [2] This line seems to be redundant. [3] A omits this line. [4] B °त्रजं । [5] B कृत्स्नं । [6] D °द्धि° । [7] D विद्धं । [8] B मालाकार । [9] D °योगे । [10] B विद्यादिभेदेन; A वीरादिभेदेऽपि ।

सहस्त्रमणिभिर्माला धार्या सर्वाङ्गके प्रिये ।
रुद्राक्षवद्धारणं स्यात्[1] कालीमन्त्रेण शुध्यति ॥ २९ ॥
माला तु त्रिविधा प्रोक्ता उत्तमा मध्यमाऽधमा[2] ।
दन्ताक्षमालया चैव राजदन्तेन मेरुणा ॥ ३० ॥
उत्तमा मालिका प्रोक्ता कालिकाकर्षिणी परा ।
कर्णनेत्रान्तरस्थो यो[3] महाशङ्खेति कीर्तितः ॥ ३१ ॥
महाशङ्खमयी माला पञ्चाशन्मणिनिर्मिता ।
मध्यमा मालिका प्रोक्ता ताराजापे[4] प्रकीर्तिता ॥ ३२ ॥
अस्थिभिर्वा नृ[5]मुण्डैर्वा किञ्च वा नृ[6]ललाटजाम् ।
देहे देहान्तरस्था वा माला प्रोक्ता कनिष्ठिका ॥ ३३ ॥
छिन्नादेव्या विधौ देवि एवं हि त्रिविधा मता ।
सम्मुखौ यौ उभौ दन्तौ राजदन्तौ प्रकीर्तितौ ॥ ३४ ॥
करालास्यमहाकाल्या दानवा भक्षिताः पुरा ।
त्रैलोक्यग्रासिनौ[7] दन्तौ राजदन्ताविति स्मृतौ ॥ ३५ ॥
राजदन्तेति संज्ञा वै देव्या पूर्वं कृता प्रिये[8] ।
यौ दैत्यचर्वकौ दन्तौ मम कार्यकरावुभौ ॥ ३६ ॥
तस्मात्प्रीतेन मनसा मेरुकार्ये नियोजितौ ।
कालिकासंहितायां च मतमन्यत्प्रकीर्तितम् ॥ ३७ ॥
मुखं देव्या महेशानि येन दन्तेन राजते ।
तेन कारणतो देवि राजदन्तेति कीर्तितम् ॥ ३८ ॥
अन्यत् शृणुष्व दन्तेषु राजते राजदन्तकः ।
सूर्याग्निसोमसूत्रैश्च माला कार्या प्रयत्नतः ॥ ३९ ॥
वसया मज्जया वाऽपि नाडिभिर्वा शुभा मता ।
स्वयम्भुवाक्ता या नाडी सा नाडी सर्वतोत्तमा ॥ ४० ॥
स्वयम्भुवाक्तं यत्सूत्रं[9] तत्सूत्रं[10] सर्वतोत्तमम् ।
पण्यस्त्रीनिर्मितं सूत्रं कुमारीनिर्मितं तथा ॥ ४१ ॥
ततो द्विजेन्द्रपुण्यस्त्रीनिर्मितं ग्रन्थिवर्जितम् ।
कुण्डाक्तं चैव गोलाक्तं[11] स्वयम्भुवाक्तं तथैव च ॥ ४२ ॥
ततो मातङ्गिनीहस्तात् प्राप्तं तु सर्वतोत्तमम् ।
नाड्या संग्रथनं कार्यं रक्तेन वाससा प्रिये ॥ ४३ ॥
इयं तु सिद्धिदा माला कालिकाकृष्टिकारिणी ।
या काली सैव तारा स्यात् [12]या तारा सैव कालिका ॥ ४४ ॥

[1] D °णीया । [2] D °धममध्यमा । [3] D °रालास्थिः । [4] A राज्ये । [5] B त्रि° । [6] B त्रि° । [7] B °गामिनौ । [8] D परा । [9] A शृंगं । [10] A चोत्कृष्टं । [11] A वैष्णवेनोक्तं । [12] B omits या......छिन्ना in the next line.

या काली सैव छिन्ना स्यात् या छिन्ना सैव तारिणी ।
या सुन्दरी सैव काली सर्वसिद्धिप्रदा मता[1] ॥ ४५ ॥
चतसृणां[2] न[3] भेदोऽस्ति भेदभाक् नरकं व्रजेत् ।
माला[4]पात्रासनं चैव चतसृणां शुभं मतम् ॥ ४६ ॥
मन्त्रध्याने विशेषोऽस्ति तथा नाम्नि विरोधता ।
प्रयोगादिविशेषोऽस्ति सुन्दर्यामेव पार्वती ॥ ४७ ॥
तिसृणां न विशेषोऽस्ति त्रिशक्तिरिति कीर्तिता ।
श्मशानेषु च बाह्ये[5]षु कालिका तिष्ठते सदा ॥ ४८ ॥
तस्माद्वीरासनं शस्तं तथैव वीरसाधनम् ।
वीरासनादिकं कर्म तथैव वीरसाधनम् ॥ ४९ ॥
समन्त्रं सबलिं चैव सदिग्बन्धादि चोच्यते ।
अ[6]खण्डाङ्गं शवं शस्तं सखण्डं मुण्डमुच्यते ॥ ५० ॥
रक्ताक्तं यदि देवेशि तदा त्याज्यं प्रयत्नतः ।
प्रमादाद्यदि देवेशि नहि त्यजति साधकः ॥ ५१ ॥
तदैव मरणं तस्य ह्यन्यथा शुभमेव हि ।
इत्येतत्कथितं देवि संक्षेपेण तवाज्ञया ।
वीरसिद्ध्या[7]दिकं कर्म शृणु यत्नेन साम्प्रतम् ॥ ५२ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यतारासंवादे आसनकथनं नाम नवमः[8] पटलः ।

[1] A यिनी । [2] U चतुःसूत्रं; D चतुर्षु । [3] D नामे° । [4] D मुद्रा° । [5] A चाष्टे° ।
[6] B स° । [7] B साध्या° । [8] MSS सप्तमः ।

# दशमः पटलः ।

श्रीशिव उवाच ।

अथातः[1] संप्रवक्ष्यामि वीरसिद्धेश्वरीं पराम् ।
यस्या विज्ञानमात्रेण महाकालसमो भवेत् ॥ १ ॥

पादुकाखड्गवेतालधातुवादश्च यक्षिणी[2] ।
गुटिकाञ्जनसिद्धिश्च गुप्तिश्च[3] तिलकः शिवे ॥ २ ॥

सर्वं संभवति क्षिप्रं नान्यथा शाङ्करं वचः ।
कालिका तारिणी छिन्ना त्रिशक्तिरिति ईरिता ॥ ३ ॥

त्रिशक्तिविषये देवि साधनेयं प्रकीर्तिता ।
मुण्डकोपासनं नाम सर्वसिद्धिप्रदायिका ॥ ४ ॥

साधना कालिकारूपा मुण्डदुर्गाऽभिधातु सा ।
रण[4]वीरं महावीरं तथा [5]पाशगलानपि ॥ ५ ॥

शूलप्रोतान् यष्टिविद्धान् षट्त्रिं[6]शदस्त्रविद्धकान् ।
[7]सर्पादिजीवनष्टान् वै गजव्याघ्र[8]विदारितान् ॥ ६ ॥

अपमृत्युमृतान्देवि शवानाहृत्य पार्वति[9] ।
महावीरैर्महामुण्डैर्दुर्गं कृत्वा प्रयत्नतः ॥ ७ ॥

रणवीरं समार[10]भ्य महावीरान्तकं शिवे ।
आसनार्थं प्रकर्तव्यं परितो[11] मुण्डदु[12]र्गकम्[13] ॥ ८ ॥
[14]दिननन्दाष्टाद्रिरसैः[15] सहस्रैः पञ्चभिश्च वा ।
अभावे त्रिसहस्रेण मुण्डदुर्गं समाचरेत् ॥ ९ ॥
तारासारूप्यचक्रं तु स्वाग्रे संलिख्य पार्वति ।
पात्रार्थं च तथात्मार्थं[16] देवार्थमपि पार्वति ॥ १० ॥
स्थानं त्यक्त्वा प्रयत्नेन साधयेद्दुर्गसाधनम् ।
दुर्गेऽरण्ये[17] नदीगर्भे[18] तडागे शून्यवेश्मनि ॥ ११ ॥
रणे श्मशाने देवेशि त्रिपथे वा चतुष्पथे ।
कुलवृक्षे चैक[19]वृक्षे शिवदेवगृहेऽथ वा ॥ १२ ॥
एकलिङ्गे प्रयत्नेन मुण्डदुर्गं प्रसाधयेत् ।
एके सं[20]साधिते देवि त्रैलोक्यसाधितं भवेत् ॥ १३ ॥

[1] B अथ तत्र । [2] D दक्षिणां । [3] A तुडि° । [4] A °स° । [5] A सशृङ्खलानपि । [6] D निर्त्रिं° । [7] U omits three lines. [8] B °ध° [9] Arrangement of the text is confused in B after this line. [10] A °ल° । [11] D पवित्रे । [12] A °व° । [13] D °के । [14] A omits this line. [15] D दिननन्दाष्टदिवसकैः; U दिनं दृष्ट्वाद्रिरसकैः । [16] B स्वार्थं । [17] A °णे । [18] U °र्त्ते । [19] B °व; D चैत्र° । [20] B एकस्मिन् ।

वीरसाधनसामग्रीं पुरतः स्थाप्य पार्वति ।
वीरवेषो दयायुक्तो खादिरान्दशकीलकान् ॥ १४ ॥

अन्तर्बन्धबहिर्बन्धौ कृत्वा यत्नेन पार्वति ।
[1]वीरसाधनवत्कृत्वा सर्वं यत्नेन पार्वति ॥ १५ ॥

यावदग्रे समायान्ति मुण्डानि परमेश्वरि ।
तावदिष्टा भवन्त्यत्र दशविद्याक्रमेण च ॥ १६ ॥

काली तारा तथा छिन्ना[2] सुन्दरी बगलामुखी ।
इष्टाः पञ्च[3] विशेषेण भविष्यन्ति क्षणेन च ॥ १७ ॥

या या बलिर्याच्यते तैः सा सा देया प्रयत्नतः ।
वरो ग्राह्यः प्रयत्नेन वीरयन्त्रप्रपूजकैः ॥ १८ ॥

वीरजापी वीरपात्री वीरमालासनी[4] शिवे ।
मुण्ड[5]दुर्गे नरः स्थित्वा क्षणात् त्रैलोक्यसिद्धिभाक् ॥ १९ ॥

भीतिं तु[6] तृणवत्कृत्वा महावीरो दिगम्बरः ।
शिवरूपो नरो भूयान्नात्र कार्या विचारणा ॥ २० ॥

घटी[7]पञ्चकयोगेन सर्वसाम्राज्ययोगके ।
इष्टाः पञ्च भविष्यन्ति महाविद्यास्वरूपिणः ॥ २१ ॥

इष्टसिद्धिं सर्वसिद्धिं प्रदास्यन्ति क्षणे क्षणे ।
गोपनीयाः कलौ देवि साधकेन हितेच्छुना ॥ २२ ॥

गोपनीया साधनेयं[8] स्वयोनिरिव तारिणि ।
त्रैलोक्यराज्यं सत्काव्यं[9] महाश्रुतिधरी कला ॥ २३ ॥

शापानुग्रहसामर्थ्यं मुण्डदुर्गभवं फलम् ।
बिन्दुं त्रिकोणं सूर्यं[10] च ततोऽष्टदलभूषितम् ॥ २४ ॥

[11]वृत्तं भूपुरसंयुक्तं वज्राष्टकविभूषितम् ।
बिन्दुं सिन्दूर[12]वर्णं च त्रिकोणं दिव्यवर्णकम्[13] ॥ २५ ॥

सूर्यं घुसृणवर्णं च दले वर्णाष्टकं शिवे ।
वृत्तं च कालिकावर्णं भूपुरं श्वेतवर्णकम् ॥ २६ ॥

चतुर्वर्णं चतुर्द्वारं तारास्वा[14]राज्यचक्रकम् ।
शूलाष्टकविभूषाढ्यं तत्रिकोणे त्रिशक्तयः[15] ॥ २७ ॥

तत्तद्वर्णानि बीजानि कामेशी दिक्सुरेश्वरी ।
प्रचण्डेति महेशानि महाकाली ततो दले ॥ २८ ॥

[1] B omits this line. [2] U छिन्नमस्ता । [3] U °र्थं च । [4] A °ना । [5] A °ण्डे । [6] U° तस्तु । [7] A यक्षी । [8] D °केन । [9] B त्यक्त्वा वा । [10] ABD रूपं । [11] D omits this line. [12] U सिंधूर° । [13] D गर्भकं । [14] DU स्व° । [15] D °क्तिजः ।

रुद्राणी च तथोग्रा च घोरा भीमा तथा[1]म्बिका ।
महारात्रिर्भैरवीति ततो वैरोचनाष्टकः ॥ २९ ॥

पद्मान्तकादयः पूज्याः कुल्लुकां[2] मूर्ध्नि पूजयेत्[3] ।
अक्षोभ्यं पूजयेत्तत्र सर्वमन्यच्च[4] पूर्ववत्[5] ॥ ३० ॥

एवं कालीमयं चक्रं कृत्वा वा साधनं चरेत् ।
चतुरान् साधकान्दूरे स्वगुरून्दू[6]रदेशकान्[7] ॥ ३१ ॥

कृत्वा संसाधयेद्देवि किं तद्यन्न करे स्थितम् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ३२ ॥

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।

**श्रीशिव उवाच ।**

काली तारा तथा छिन्ना चतुर्थी सुन्दरी मता[8] ॥ ३३ ॥

एवं दशसु विद्यासु वीरसाधनमाचरेत् ।
शैवे गाणपते चान्द्रे बौद्धे स्वायम्भुवे तथा ॥ ३४ ॥

वैष्णवे सौरमन्त्रेषु[9] गारुडे केरलेषु च ।
एतेषु देवदेवेशि वीरसाधनमाचरेत् ॥ ३५ ॥

वीरसाधनकं कर्म वैदिके[10] नाचरेत् शिवे ।
केरलेष्वपि देवेशि[11] वीरसाधनकं न च ॥ ३६ ॥

वैदिकेऽप्याचरेद्देवि यदि वै तादृशो मनुः ।
केरलेऽप्याचरेद्देवि यदि क्रूरो मनुर्भवेत् ॥ ३७ ॥

मुख्या तु साधना काल्यां तारायामपि कीर्तिता ।
या काली सैव तारा स्यात् छिन्नायामपि संमता ॥ ३८ ॥

एवं पाशुपताद्येषु वीरसाधनमाचरेत् ।
[12]बगलाद्यासु विद्यासु वीरसाधनमाचरेत् ॥ ३९ ॥

वीरसाधनकं कर्म विहाय सिद्धिकामुकः[13] ।
स चक्षुषा विना रूपं दर्पणे द्रष्टुमिच्छति ॥ ४० ॥

तस्मात्तु साधना मुख्या दशविद्यासु पार्वति ।
तारिणी ब्रह्मरूपा[14] स्यात् कालिका ब्रह्मसुन्दरी ॥ ४१ ॥

छिन्नाद्या[15] ब्रह्मसिद्धिः स्यात् सुन्दरी ब्रह्मचिद्घना[16] ।
एवं सर्वत्र देवेशि ब्रह्मत्वं व्याप्य[17] तिष्ठति ॥ ४२ ॥

[1] AU °धमा° । [2] B °कं; A °कीं । [3] D संयजेत् । [4] U °त्र; B °त्तु । [5] U पूजयेत् । [6] U °र्दू° । [7] AU °कः । [8] D तथा । [9] B °त्तु । [10] B °कं । [11] A क्षेत्रे च । [12] A omits this line. [13] D °मिच्छति । [14] D °विद्या । [15] D °या । [16] U °चिन्तना । [17] A स्थाप्य ।

मुख्यत्वं सर्वविद्यासु तत्रापि कालिका कलौ[1] ।
एकद्वित्रिविधा देवि दशधा शतधा शिवे ॥ ४३ ॥

लक्षधा कोटिधा देवि तथा चा[2]नन्त[3]रूपिणी ।
अङ्गाङ्गकैर्नामभेदैः कालिकेति प्रगीयते ॥ ४४ ॥

सर्वाद्या कालिकाशक्तिः सैव तारा च कुल्लुका ।
सुन्दरी छिन्नमस्ता च कालिकैव प्रकीर्तिता ॥ ४५ ॥

यावद्धि[4] वर्णितुं शक्या तावत्सगुणतां गता ।
[5]वाच्यातीता यदा जाता तदा निर्गुणतां गता ॥ ४६ ॥
जिह्वाकोटिसहस्रैस्तु वक्त्रकोटिशतैरपि ।

महिमां वर्णितुं चास्या न शक्नोमि महेश्वरि ॥ ४७ ॥
अशक्यत्वं यदा जातं तदैव ब्रह्म कीर्तितम् ।
निर्गुणत्वं तु किन्नाम वर्णनाशक्तिगोचरम् ॥ ४८ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे वीरसिद्धेश्वरीकथनं नाम दशमः[6] पटलः ।

[1] BU मनौ । [2] U वा° । [3] D °न्द° । [4] A °द्वि° । [5] B omits this line.
[6] MSS अष्टमः ।

## एकादशः पटलः ।

**श्रीशिव उवाच ।**

निर्गुणत्वं मया प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ।

**श्री काल्युवाच ।**

आदिनाथ महाकाल सर्वभूतहितां वर ॥ १ ॥

[1]त्वत्तः श्रुता महाविद्या दश[2]संख्यासमन्विताः ।
लघुपूर्वा[3] महाविद्या दशसंख्यैव कीर्तिताः ॥ २ ॥

त्रयोदश महाविद्या विरूपाक्षेण कीर्तिताः ।
तथा षोडश वै विद्या[4] भैरवेण प्रदर्शिताः[5] ॥ ३ ॥

देवीमते महाविद्या सिद्धविद्याऽपि देवते ।
त्रिशक्तिः कथिता देव त्रिशक्तिस्त्रिविधा मता ॥ ४ ॥

काली तारा छिन्नमस्ता त्रिशक्तिः परिकीर्तिता ।
बाला पञ्चदशी देव षोडशी त्रिरिति स्मृता ॥ ५ ॥

त्रिशक्तिलक्ष्मीः छिन्नायां त्रिशक्तित्वं च कीर्तितम् ।
सर्वं त्वया निगदितं पूर्वोक्तं तत्र कीर्तितम् ॥ ६ ॥

य[6]त्किमप्यतिगोप्यं हि प्रायशः[7] परमेश्वर ।
गोप्याद्गोप्यतरं देव तदद्य कथयस्व मे[8] ॥ ७ ॥

**ईश्वर उवाच ।**

सहस्रनामस्तोत्रेषु कवचेष्वपि पार्वति ।
तत्कवचादिकं प्रोक्तं[9] सा वै कार्या पुरश्क्रिया ॥ ८ ॥

यत्र[10] नोक्ता पुरश्चर्या तत्र किं वा वि[11]धीयते ।
अयुतं तु पुरश्चर्या स्तोत्रमात्रे प्रकीर्तिता ॥ ९ ॥

सहस्रनामकवचे पुरश्चर्या त्वियं मता ।
एवं पुरश्क्रियां[12] कृत्वा दशांशहवना[13]दिकम् ॥ १० ॥
तर्पणं मार्जनं देवि कुत्रचित्परिकीर्तितम् ।
महाकालमतेनोक्तं तत्रस्थं चेत् समाचरेत् ॥ ११ ॥
ब्राह्मणभोजनं चान्ते[14] सर्वथा कारयेत् प्रिये ।
विप्रसन्तोषणेनैव सर्वं सिध्यति पार्वति ॥ १२ ॥
हवनं तु कथं कार्यं पुरश्चर्या कथं भवेत् ।
सहस्रनामरूपं च कीदृशं परमेश्वरि ॥ १३ ॥

1 A omits this line. 2 B रुद्र° । 3 D °र्वं । 4 B देवि । 5 U प्रकाशिताः ।
6 B त° । 7 B प्रयोगः । 8 B °यामि ते । 9 U देवि । 10 A तत्र । 11 U चाभि° ।
12 B °श्चर्यां । 13 A वन्दना° । 14 D °मेवात्र ।

तथा कवचकं[1] देवि किं रूपं परिकीर्तितम् ।
शिवदेव्या[2]स्तु संवादो ब्रह्मरन्ध्रेति[3] कीर्तितम् ॥ १४ ॥
अन्ये श्लोकाः केशतुल्या ऋषिः शिव इतीरितः ।
छन्दो मुखं भवेद्देवि देवता हृदयं भवेत् ॥ १५ ॥
बीजं गुह्यमिति प्रोक्तं शक्तिस्तु परगा[4] मता ।
सर्वांगकल्पनं देवि ह्यर्थवादः प्रकीर्तितः ॥ १६ ॥
स्तोत्रमध्ये स्थितं यद्यत्तत्सर्वं स्तोत्ररूपकम् ।
[5]एवं च देवदेवेशि स्तोत्ररूपं प्रकीर्तितम् ॥ १७ ॥
तदेव कवचं देवि त्वाद्योपान्तं पठेत्प्रिये[6] ।
अङ्गहीने भवेन्नाशं सर्वथा परमेश्वरि ॥ १८ ॥
फलं स्तुत्यादिके देवि गतिरित्यभिधीयते ।
आद्योपान्तं विना देवि फलमर्धं[7] प्रकीर्तितम् ॥ १९ ॥
अत्रार्थे प्रत्ययो देवि पञ्चाङ्गाद्या[8] यथा स्मृताः ।
होमं कार्यं कथं देवि श्लोकान्ते हवनं च वा ॥ २० ॥
हवनं कवचादीनां शृणु यत्नेन साम्प्रतम् ।
आद्योपान्तं पठित्वा तु पश्चात्तु हवनं मतम् ॥ २१ ॥
अथवा देवदेवेशि नामान्ते हवनं मतम् ।

**श्रीदेव्युवाच ।**

[9]नामान्ते हवनं चेत्स्यात् उपोद्घाते कथं भवेत् ॥ २२ ॥
कवचादौ कथं कार्यं कवचं मन्त्ररूपकम् ।
तत्र नामान्तकं[10] वापि श्लोकान्तं परमेश्वर ॥ २३ ॥
सम्पूर्णं वापि कर्तव्यं होमकर्मणि शंकर ।

**ईश्वर उवाच ।**

साङ्ख्यायनमते देवि गौडपाठविधिर्मता ॥ २४ ॥
पठनीयानि नामानि मध्यस्थानि महेश्वरि ।
श्लोकार्धं पादमात्रं वा पादार्धं नाममात्रकम् ॥ २५ ॥
मध्यस्थं नामसाहस्रं पठेद्यत्नेन सुव्रते ।
साङ्ख्यायनमतं प्रोक्तं उपोद्घातं शृणु प्रिये ॥ २६ ॥
उपोद्घातोपसंहारो श्लोकान्ते हवनं मतम् ।
तदन्ते हवनं कुर्यात् इति साङ्ख्यायनोऽब्रवीत् ॥ २७ ॥

1 D कवचं कीदृशं । 2 B दैव° । 3 D प्र° । 4 U वधुगे । 5 D omits this line. 6 D पुनः । 7 U मध्यं । 8 A षडङ्गाद्या; D षड्गागाद्या । 9 D omits this line. 10 U °न्तरं ।

कवचादावपि प्रिये मन्त्रान्ते हवनं भवेत्।
उपक्रमोपसंहारे[1] श्लोकान्ते हवनं मतम्[2] ॥ २८ ॥
आदौ पूर्णं तु सम्पठ्य तथैवान्ते महेश्वरि।
मध्ये नामानि पाठ्या[3]नि पुरश्चर्या प्रकीर्तिता ॥ २९ ॥
काश्मीराख्यक्रमे देवि शृणु यत्नेन साम्प्रतम्।
स्तोत्रमावर्त्य संपूर्णं तदन्ते गणनां चरेत् ॥ ३० ॥
सम्पूर्णक्रम[4]योगस्तु काश्मीराख्यः प्रकीर्तितः।
सम्पूर्णहोमयोगस्तु कथितस्तु प्रियंवदे ॥ ३१ ॥
मार्जनाभिषेचनं कर्म कुर्यादत्र महेश्वरि।
काश्मीरकेरलाख्ये तु क्वचिद्भेदोऽस्ति पार्वति ॥ ३२ ॥
अनेनैव क्रमेणैव कवचे होम ईरितः।
कवचे तर्पणाद्यं वा कार्यं यत्नेन धीमता ॥ ३३ ॥
सारूप्यं कवचाख्यं तु सायुज्यं स्तोत्रमीरितम्।
सान्निध्यं नामसाहस्रं त्रितयं परिकीर्तितम् ॥ ३४ ॥
सालोका वाक् स्तुतिर्देवि तस्मात्पूर्णं पठेत्सुधीः।
अयमेव महा[5]देवि केरलेऽपि प्रकीर्तितः ॥ ३५ ॥
पाठमात्रे त्विदं प्रोक्तं होमादौ परि[6]कीर्तितम्।
[7]कामरूपागमे होमाः श्लोकान्ते कवचं पठेत्[8] ॥ ३६ ॥
कामरूपागमे नाम्नि मते चाक्षोभ्यनिर्मिते।
श्लोकान्ते हवनं प्रोक्तं श्लोकान्ते मार्जनादिकम् ॥ ३७ ॥
ततस्तं[9]त्रोक्तविधिना पुरश्चर्यादिकं चरेत्।
कवचं कवचरूपं स्यात् स्तोत्रं सहचरो भवेत् ॥ ३८ ॥
सहस्रनामस्तोत्रं तु सेना[10]स्थाने प्रकीर्तितम।
पूजा दुर्गस्वरूपः स्यात् बलिदानं तु मारणम् ॥ ३९ ॥
मन्त्रो राज[11]पुरश्चर्या राज्यसम्पत्तिरीरिता।
सम्पत्त्या तु विना राजा न शोभते महेश्वरि ॥ ४० ॥
सम्पत्तिमूलमेतद्धि सर्वमेव प्रकीर्तितम्।
होमोऽग्न्यस्त्रमिति प्रोक्तं[12] पर्जन्यास्त्रं तु तर्पणम् ॥ ४१ ॥
जले दुर्ग[13]स्वरूपं च त्वभिषेकः प्रकीर्तितः।
ब्राह्मणानां भोजनं तु दुष्टसैन्यप्रभक्षणम् ॥ ४२ ॥
देवतागुरुविद्यैक्यं[14] त्वात्मैक्यं परिभाव्य च।

[1] D °रैः। [2] D भवेत्। [3] B पद्या°। [4] U °होम°। [5] U क्रमो। [6] D °ममादौ प्रकी°। [7] B omits this line। [8] AU चरेत्। [9] D °स्तो°। [10] ABU पूजा°। [11] A मन्त्रेण या। [12] A होममस्त्रमिति प्रोक्तं; D होममन्त्रमिति प्रोक्तं; U होमप्रयोगमित्युक्तं। [13] U जपदुर्गा°। [14] D °रित्यैक्यं।

सर्वसिद्धीश्वरो भूत्वा त्रैलोक्याधिपतिर्भवेत् ॥ ४३ ॥
यथा च राजराज्यादौ[1] शत्रुसैन्यभयं भवेत् ।
सिद्धिराज्यं[2] महादेवि तथैव परिकीर्तितम् ॥ ४४ ॥

दुर्गाद्यस्त्रा[3]दिकं देवि देवराज्ये यथा मतम् ।
तथैव सिद्धिराज्यस्य पुरश्चर्यादिकं मतम् ॥ ४५ ॥

मन्त्रो राजा गुरुर्मन्त्री गणेशो द्वारपालकः ।
साधना शव[4]मुण्डस्य सिंहासनमितीरितम् ॥ ४६ ॥

साधकेन तथा कार्यं येन सर्वं सुसिध्यति ।
नैमित्तिकं च काम्यं च हयद्विरदिनौ मतौ ॥ ४७ ॥

होमधूमः पताका स्यात् तन्त्रस्तु[5] सिद्धिभूमिका ।
सिद्धिराज्याधिपे देवि किं न सिध्यति भूतले ॥ ४८ ॥

षोढान्यासादिकं सेना देवताराज्यदायिका[6] ।
य[7]न्त्रं तु वज्रदुर्गं[8] तु बीजयंत्रं त्वभेद्यकम् ।
कवचादिपुरश्चर्या प्रोक्ता किं श्रोतुमिच्छसि ॥ ४९ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे कवचादिपुरश्चर्या नामैकादशः पटलः[9] ।

[1] D चराचराद्यादौ । [2] B °ज्यं । [3] A °स्त्रा°; D तन्त्रा° । [4] D शाव° । [5] U तत्तु । [6] B °दीपिका । [7] D मं° । [8] U चात्र दुर्गा । [9] The colophon is ours.

# द्वादशः पटलः ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि भूतशुद्धिविनिर्णयम् ।

श्रीशिव उवाच ।

त्रिविधा भूतशुद्धिर्हि केरलादिक्रमेण च ॥ १ ॥
पञ्चधा तत्त्वशुद्ध्या[1] तु देहशुद्धिं समाचरेत् ।
इत्थं तु केरले प्रोक्ता भूतशुद्धिर्मया तव ॥ २ ॥
काश्मीरे भूतशुद्धिस्तु शोषणादिक्रमेण तु ।
तत्त्वव्याप्तिं[2] कृते देवि पापं क्वास्ति[3] महीतले ॥ ३ ॥
संहारक्रमयोगेन तत्त्वव्याप्ति[4]र्महेश्वरि ।
एवं क्रमे कृते देवि[5] पापं तस्य क्व वर्तते ॥ ४ ॥
भूतसंशोधनाद्देवि पापं तस्याऽपि गच्छति ।
देहनिष्ठं भवेत्पापं तत्पापं कुत्र विद्यते ॥ ५ ॥
तत्त्वव्याप्तौ महेशानि ब्रह्मैवाहं विभावना ।
पुनर्वै मातृकाव्याप्त्यै देहशुद्धिं[6] समाश्रयेत्[7] ॥ ६ ॥
शोषणादिक्रमे देवि पापं भूताश्रयं शिवे ।
भूते[8] संशोधने जाते पापं क्वास्ति महेश्वरि[9] ॥ ७ ॥
काश्मीराख्यः क्रमः प्रोक्तो गौडः काश्मीरवद्भवेत् ।
चैतन्याख्यक्रमे देवि भूतशुद्धिं शृणु प्रिये ॥ ८ ॥
तत्त्वसंख्यापनं कृत्वा संहारक्रमयोगतः ।
पापशोधनकं कर्म कुर्याद्यत्नेन पार्वति ॥ ९ ॥
संहारक्रमयोगेन शोषणादि समाचरेत् ।
पापरूपस्य देवेशि सृष्टिमार्गेण व स्थितिः ॥ १० ॥
सृष्टिमागण देवेशि पुनः सृष्ट्यादिकं चरेत् ।
यथा युगादिके देवि सृष्टिस्थित्यादिकं भवेत् ॥ ११ ॥
तथैव परमेशानि भूतशुद्धिः प्रकीर्तिता ।
चराचरो हि संसारः कुत्र गच्छति पार्वति ॥ १२ ॥
तथैव भूतशुद्धौ तु भावना योग एव च ।
अनादिसिद्धा देवेशि सृष्टिभेदास्तथैव च ॥ १३ ॥
आगमाश्च महेशानि नव वैकृतिमादृता ।
पुराणान्युपसंज्ञानि सर्वसिद्धिर्भवेच्छिवे ॥ १४ ॥

[1] D शुद्ध्या° । [2] A तत्रत्येष्टिः । [3] D पापाक्रान्त° । [4] A °प्ति° । [5] D क्रमेण देवेशि । [6] B °सिद्धिं । [7] D °चरेत् । [8] B °त° । [9] D महीतले ।

एकस्य द्वारमाश्रित्य सा परा कालिका कला[1] ।
[2]प्रकाशयति देवेशि जगदेतच्चराचरम् ॥ १५ ॥
मायापाशेन संबद्धान् क्षतान् कृत्वा महेश्वरि ।
संसारचक्रे देवेशि भ्रामयामास या[3] कला ॥ १६ ॥
श्रीविद्यायां तथा काल्या[4]मूर्द्धाम्नाये महेश्वरि ।
व
तस्य दर्शनमात्रेण पापमन्यस्य गच्छति ॥ १७ ॥
स देशो धन्यतां[5] याति समन्तात् कोटियोजनम् ।
तस्य पुण्यफलं देवि मया वक्तुं न शक्यते ॥ १८ ॥
इति संक्षेपतः प्रोक्तं कुतः[6] पापं महेश्वरि ।
पारायणेन षोडश्याः कालिकायास्तथापि च[7] ॥ १९ ॥
मन्त्रपारायणं देवि नाम[8]पारायणं तथा ।
[9]चक्रपारायणं देवि यन्त्रपारायणं तथा ॥ २० ॥
नाडीपारायणं देवि पञ्च पारायणं विदुः ।
श्रीविद्यायां कालिकायां पञ्चपारायणक्रमात् । ॥ २१ ॥
पारायणं नाम सन्ध्या तेन पापं न चास्ति वै ।
निर्वाणे न पाप[10]वार्त्ता परात् पूर्वं वदेत् शिवे ॥ २२ ॥
[11]षट्शाम्भवे महेशानि षट्चक्रक्रमयोगतः ।
[12]पापं दूरतरं देवि केवलानां तु[13] शोधनम् ॥ २३ ॥
अन्येषां भूतिशुद्धिस्तु त्रिविधा परिकल्पयेत[14] ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २४ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे भूत[15]शुद्धिनिरूपणं नाम द्वादशः[16] पटलः ।

[1] A परा । [2] BU omit three lines । [3] D श्रीमायानाशका । [4] B °ली° । [5] D पुण्यतां । [6] A तया । [7] ADU °मथापि वा । [8] B °थ° । [9] A omits this line. । [10] BD या च । [11] A omits this line. । [12] D omits two lines. । [13] U °नीति । [14] U °कीर्त्तिता; B °ल्यतां । [15] B शूल° । [16] B नवमः ।

## त्रयोदशः पटलः ।

**ईश्वर उवाच ।**

कौलावधूतमार्गेषु तीर्थयात्रां न च व्रजेत् ।
तीर्थाट[1]नं च संन्यासं व्रतधारणमेव च ॥ १ ॥
उपवासं मुण्डनं[2] च सर्वथा परिवर्जयेत् ।
पूर्णाभिषेकः शिरसि तेन तत्र न मुण्डनम् ॥ २ ॥
कौलतीर्थानि भिन्नानि तत्र कौलो वसे[3]त् सदा ।
एकस्यामेव देवेशि सन्ति पीठानि कृत्स्नशः ॥ ३ ॥
तत्पीठमधि[4]पीठं स्यात् * * यामधिराजता ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि कौलतीर्थानि सर्वशः ॥ ४ ॥

**ईश्वर उवाच ।**

ब्राह्मणी तु गया प्रोक्ता राजा[5]ऽयोध्या प्रकीर्तिता ।
वैश्या चावन्तिका प्रोक्ता शूद्रा तु मथुरा स्मृता ॥ ५ ॥
दासी मायापुरं[6] देवि नटी गोदावरी मता[7] ।
मालाकारिणिका देवि चित्रकूटं प्रकीर्तितम् ॥ ६ ॥
[8]कुम्भकारिणिका देवि श्रीपुरं[9] परिकीर्तितम् ।
उड्डयानं तु महादेवि(?) सौचिकी[10] पौण्ड्रवर्धनम् ॥ ७ ॥
जालन्धरं कुविंदा च तन्तुवायी तु काञ्चिका ।
असिमार्जनिका देवि कामरूपमिति स्मृतम् ॥ ८ ॥
रजकी पुष्करं प्रोक्तं चर्मकारी तु काशिका ।
अयस्कारीगृहं[11] देवि कोलापुरमिति स्मृतम् ॥ ९ ॥
शौण्डिक्यास्तु गृहं देवि नेपालमिति कीर्तितम् ।
केदारपीठं देवेशि नापिती परिकीर्तितम् ॥ १० ॥
गोकर्णपीठं देवेशि त्वाष्ट्री वै परिकीर्तितम् ।
उज्जयिनी भवेत्पीठं कलादिकमितीरितम् ॥ ११ ॥
कालेश्वरी त्वञ्चुकी स्यात् कैवर्त्ती हस्तिनापुरम् ।
शौल्किकी राजगेहन्तु जयन्ती तैलकारिणी ॥ १२ ॥
कान्यकुब्जं मागधी स्यात्सर्वत्र गृहयोजनम् ।
वेश्यागृहं प्रयागः[12] स्याच्छ्रीशैलं तु कुमारिका ॥ १३ ॥
कैलासपीठमाभीरी क्षीरिका पुंश्चली[13] भवेत् ।

[1] B °स° । [2] B °ण्डितं । [3] A जपे । [4] U मध्य° । [5] BD बाहुजा°; A राज्य° । [6] D °री । [7] U स्मृता । [8] D omits this line. [9] A °पदं । [10] D शौण्डिकी । [11] AD महा° । [12] A मागधी । [13] D पुक्कशी ।

हिरण्याख्यपुरं देवि स्वैरिणी परिकीर्तितम् ॥ १४ ॥
अट्टहासं च सैरन्ध्री दूतिका मरुतेश्वरम् ।
ओंकारपीठं देवेशि रण्डागृहमितीरितम् ॥ १५ ॥
प्रतिवेशिनिकागेहं मलयं पीठमीरितम् ।
स्वजायाया गृहं देवि विरजापीठमीरितम् ॥ १६ ॥
कुट्टन्यास्तु गृहं देवि पूर्णचन्द्रमितीरितम् ।
श्रीगारुडीगृहं देवि पीठं वै देवमातृकम्[1] ॥ १७ ॥
आम्रातकेश्वरं पीठं चाण्डालीगृहमीरितम् ।
पौत्री[2]गृहं कामकोटं[3] प्रपौत्र्यैकाम्बरं[4] मतम् ॥ १८ ॥
मातुलानी अनन्तः स्यात् संविधिन्याश्वरस्थिरम् ।
राजकन्यागृहं देवि माहेन्द्रमिति कीर्तितम् ॥ १९ ॥
कन्यागृहं महादेवि जलेश्वरमितीरितम् ।
[5]स्नुषागृहं महेशानि विचित्रमिति कीर्तितम् ॥ २० ॥
भगिन्यास्तु गृहं देवि भृगुपीठमितीरितम् ।
श्यालि[6]काया गृहं देवि महापथ इतीरितः ॥ २१ ॥
यवनी गदिता देवि मेरुकागिरिरेव च ।
या स्यात् त्रिवाहिता कन्या तद्गृहं वामनं स्मृतम् ॥ २२ ॥
श्रीकेलिकुञ्चिकागेहं हिंगुलायाभिधं भवेत् ।
पर[7]स्त्री बिंदुतीर्थं स्यात् सर्वतीर्थं रजस्वला ॥ २३ ॥
तानि सर्वाणि तीर्थानि मातङ्गीसंगमे[8] सकृत्[9] ।
एतत्प्रोक्तं महादेवि किमन्यच्छ्रोतुमिच्छसि ॥ २४ ॥[10]

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि चतुष्पीठस्य लक्षणम् ।

श्रीशिव उवाच ।

रहस्यं च प्रवक्ष्यामि यज्ज्ञानादमरो भवेत् ॥ २५ ॥
श्यालकस्य तु या पत्नी कुरुक्षेत्रं च तद्गृहम् ।
तत्कन्याया गृहं देवि श्रीगौरीमुखसंज्ञकम् ॥ २६ ॥
तरुणी सुन्दरी रामा स्वभार्याभगिनी च[11] या ।
तज्ज्येष्ठा च महेशानि कनिष्ठादिक्रमेण च ॥ २७ ॥
ज्येष्ठा तु केलिकुञ्ची स्यात् कनिष्ठा केलिगेहिनी ।

[1] U °तागृहं [2] A योगी । [3] A कूटं; D को । [4] D °कारवं । [5] B omits two lines. [6] U सालि° ; B शाली । [7] B वर° । [8] B गमने । [9] A क्वचित् । [10] After this U adds तंत्रान्तरे । वेश्यागृहं प्रयागं स्यात् रजक्या पुष्करं स्मृतम् । चर्मकार्य्या भवेत् काशी सर्वतीर्थं रजस्वला । यं कंचित् संगमं तीर्थं विद्यते भुवि मण्डले । तत्सर्वं कोटिगुणितं मातंगीसंगमे सकृत् ।
[1] B °ति ।

चतुष्पीठानि देवेशि क्रमादुच्चरितं श्रुणु ॥ २८ ॥
कुरुक्षेत्रं महेशानि गौरीमुखमथापरम् ।
पञ्चभद्रं केलिकुञ्जी[1] मोहिनी[2] पञ्चभद्रकम् ॥ २९ ॥
तद्गोष्ठी स्तोत्रपाठो हि तत्संगप्रणतिस्तथा ।
* * स्पर्शो महेशानि श्रीघटस्थापनं मतम् ॥ ३० ॥
तत्संयोगः पूजनञ्च तद्वाचस्तु प्रसन्नता ।
पुष्पाञ्जल्यादिकं चैव * * नाद्यं प्रकीर्तितम् ॥ ३१ ॥
कामस्थं काममध्यं च[3] कामेन च पुटीकृतम् ।
कामेन योजयेत्कामं कामं कामेन योजयेत् ॥ ३२ ॥
वारं वारं तु * * * [4] पूजनावरणक्रमः ।
तदालापस्तत्समाजः पूजा साऽत्र प्रकीर्त्तिता ॥ ३३ ॥
यन्त्रं त्रिकोणमित्युक्तं तत्रस्थं परमेश्वरि ।
विसर्जनं वीजपातस्तद्धस्ता * * पूजनम् ॥ ३४ ॥
सदा तत्संयोगस्तद्ब्रह्म तद्धस्त[5]परिचुम्बनम् ।
उपर्यधस्तात्तत्कृत्वा तत्संयोगी नरो भवेत् ॥ ३५ ॥
चतुष्पीठसमायोगं यः करोति महेश्वरि ।
तस्य देवि प्रसन्नाऽस्ति नात्र कार्या विचारणा ॥ ३६ ॥
तत्पीठे तन्मुखे * * दत्त्वा यत्नेन पार्वति ।
लिहन् जपं प्रकुर्वीत सर्वसिद्धीश्वरो भवेत् ॥ ३७ ॥
त्रिकोणामृतयोगेन कालिकां तर्पयेत्सदा ।
वाग्मिता कविता चैव तद्धस्ते सर्वदा वसेत्[6] ॥ ३८ ॥
तच्चक्रं पुष्पसंयुक्तं वीक्ष्य यत्नेन पार्वति ।
दिक्सहस्रं जपेद्देवि सर्वसिद्धीश्वरो भवेत् ॥ ३९ ॥
संयोगीभूय जप्तव्यं चतुःप्रहरयोगतः ।
यथालाभं च वा कुर्या[7]द्भगिनी श्यालिका च या ॥ ४० ॥
केलिकुञ्जी विशेषेण सा शुद्धा स्त्री विशेषतः ।
एवं क्रमेण यः कुर्यात् सर्वसिद्धिं स विन्दति ॥ ४१ ॥
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ।

श्रीदेव्युवाच ।

चतुष्पीठानि प्रोक्तानि संक्षेपेण महेश्वर ॥ ४२ ॥
पीठशक्तेः स्वरूपं तु ह्यनुकल्पं च मे वद ।

1 AD °कंच। 2 D omits मोहिनी......पूजनं च in the fourth line. 3 B °ध्यस्थं। 4 B °सम्पर्कः। 5 Omitted in BD. 6 D भवेत्। 7 D omits भगिनी......कुर्यात् in the 3rd line.

श्रीशिव उवाच ।

नारी त्रैलोक्यजननी नारी त्रैलोक्यरूपिणी ॥ ४३ ॥

नारी त्रिभुवनाधारा नारी देहस्वरूपिणी ।
पुंरूपं[1] च स्त्रियो रूपं यत्किञ्चिद्रूपमुत्तमम् ॥ ४४ ॥

नारीचक्रे सर्वरूपं यत्किंचिज्जगतीगतम् ।
न च नारीसमं सौख्यं न च नारीसमा गतिः ॥ ४५ ॥

न नारीसदृशं भाग्यं न भूतं न भविष्यति ।
न नारीसदृशं राज्यं न नारीसदृशं तपः ॥ ४६ ॥

न नारीसदृशं तीर्थं न भूतं न भविष्यति ।
न नारीसदृशो योगो न नारीसदृशो जपः ॥ ४७ ॥

न नारीसदृशो योगो न भूतो न भविष्यति ।
न नारीसदृशं मंत्रं[2] न नारीसदृशो तपः[3] ॥ ४८ ॥

न नारीसदृशं वित्तं न भूतं न भविष्यति ।
तरुणीं सुन्दरीं[4] रम्यां[5] यौवनोद्धतमानसाम् ॥ ४९ ॥

मदोन्मत्तां खञ्जनेत्रीं[6] सदा * * भिलाषिणीम् ।
* * मोद्युक्तहृदयां प्रार्थयेद्विधिपूर्वकम् ॥ ५० ॥

सर्वाभरणभूषाढ्यां षोडशाब्दां[7] * * प्रियाम् ।
ईदृक्विधां समानीय पूर्ववत्सर्वमाचरेत् ॥ ५१ ॥

प्रसूनतूलि[8]कायां तु संस्थाप्य परमेश्वरि ।
सर्वोपचारैः सम्पूज्य * * * * * नादिकम् ॥ ५२ ॥

साङ्गां सावरणां कालीं सम्पूज्य च प्रयत्नतः ।
स्वयमक्षोभितो भूत्वा तस्याः क्षोभं समाचरेत् ॥ ५३ ॥

तया यदुच्यते वाक्यं तत्तथैव भविष्यति ।
तग्देहदेहस्पर्शेन[9] पूतमेतच्चराचरम् ॥ ५४ ॥

तस्या गेहे[10] महेशानि तद्भावं[11] च समाचरत् ।
नारीरूपं तु संचिन्त्य योगो जातेति भावयेत् ॥ ५५ ॥

योगवद्भावयेत्सर्वं तेन सिद्धीश्वरो भवेत् ।
विपरीतं भाव्य जपेत्तेन सिद्धीश्वरो भवेत् ॥ ५६ ॥

स्त्रीस्वरूपः स्वयं भूत्वा स्वस्वरूपा तु कामिनी ।
कुचकज्जलसीमन्त[12]कङ्कणाभरणानि च ॥ ५७ ॥

[1] B पुरुषं । [2] B मित्रं । [3] A जपः; B पयः । [4] B सदृशीं । [5] A चासौ । [6] U °त्रां । [7] D °ब्दीं । [8] A °लति° । [9] A तत्तदेहकृतस्पर्शे; D यद् गृगे देहसंस्पर्शे । [10] B °भावे । [11] A °द्भेदं । [12] D कुलसीमन्तकादीनि ।

कृत्वा स्वदेहे सर्वं तु तस्यां पुंरूप[1]माचरेत् ।
यथा पुरूष[2]संयोगः क्रीड्यते[3] स्त्रीत्रिकोणके ॥ ५८ ॥

तथा स्त्रिया च कर्तव्यं * * [4]धारणपूर्वकम् ।
* * * तथा सर्वान्कुर्याद्यत्नेन पार्वति ॥ ५९ ॥
एवंविधे[5] योगवरे दीक्षायोगं समाचरेत् ।
सर्वं सफलतां याति कालीविद्याप्रसादतः ॥ ६० ॥

गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ६१ ॥

**श्रीदेव्युवाच ।**

सहस्र * * सन्दर्शान्मुक्तो भवति मानवः ।
सहस्र * * सन्दर्शाद्देवतादर्शनं ध्रुवम् ।
चतुष्पीठानि प्रोक्तानि साधनं चिन्तनं वद ॥ ६२ ॥

**श्रीशिव उवाच ।**

श्यालकस्य च या भार्या[6] कुरुक्षेत्रं प्रकीर्तितम् ।
तत्कन्या[7]यास्त्रि * * च गौरीमुखमितीरितम् ॥ ६३ ॥
शालिकायास्त्रि * * यत्पञ्चभद्रा[8]भिधं च तत्[9] ।
भार्या ज्येष्ठा तु या प्रोक्ता सा चात्र केलिकुञ्जिका[10] ॥ ६४ ॥
तस्या * * विश्वभद्रं सर्वपीठोत्तमोत्तमम् ।
एतासां व्यभिचारेण[11] नामान्यन्यानि सं[12]श्रृणु ॥ ६५ ॥
स्वर्गद्वारं काम[13]बिलं महापथाभिधं परम् ।
वाञ्छामणि[14]श्चतुर्थः स्याश्चतुष्पीठानि पार्वति ॥ ६६ ॥
वर्षषोडशपर्यन्तं पूर्वा पुण्योद्भवा[15] मता ।
द्वात्रिंशद्वर्षपर्यन्तममृतान्दोलिका[16] मता ॥ ६७ ॥
ततोऽष्टवर्षपर्यन्तं सुधासागरनामकम् ।
ततो दिग्वर्षपर्यन्तमानन्दव्रत[17]नामकम् ॥ ६८ ॥
पूर्वाषोडशपर्यन्तं महासिद्धिमुखाभिधम् ।
पञ्चपीठानि पूर्वं स्याद[18]धिराजक्रमेण च ॥ ६९ ॥
तत्कन्याया महेशानि श्रृणु यत्नेन साम्प्रतम् ।
अथाषोडशपर्यन्तं योगवीणा प्रकीर्तिता ॥ ७० ॥
पुष्पिता चेद्धि ब्रह्माण्डं कीर्तितं वै चतुष्ककम् ।
द्वात्रिंशद्वर्षपर्यन्तं साम्राज्यगुटिकाभिधा ॥ ७१ ॥

1 U पुरुष° । 2 B °षण । 3 BD क्रियते । 4 B कूर्चं° । 5 D °वीरे । 6 B तु भार्याया । 7 B °त्कामा° । 8 D द्रव्या° । 9 D मतं । 10 A कालिकाम्बिका । 11 B एतत् संख्याभिचारेण । 12 A वा । 13 A °मा° । 14 AD वीक्ष्यमाण° । 15 U पुण्याद्रवा । 16 D °मम्रतीकरणी । 17 U °वन°; D °मन° । 18 B पूर्वस्या ।

ततोऽष्टवर्षपर्यन्तमानन्दतूलिका मता ।
ततो दिग्वर्षपर्यन्तं सौभाग्यकमलं भवेत् ॥ ७२ ॥
अथ श्रीशक्तिकागेहलक्षणं शृणु पार्वति ।
अथाषोडशपर्यन्तं महासाम्राज्यमण्डपम् ॥ ७३ ॥
स्वाराज्यमण्डलं देवि तदनन्तरगं भवेत् ।
वैराज्यमण्डलं देवि ततः सर्वज्ञपीठकम् ॥ ७४ ॥
पूर्वाषोडशपर्यन्तं द्वे प्रोक्ते ऋद्धिकामुकम्[1] ।
सर्वसिद्धिप्रदा देव्याः केलिकुञ्ज्याः प्रकीर्तिता ॥ ७५ ॥
पूर्वाषोडशपर्यन्तं विश्वरूपाभिधं भवेत् ।
षोडशोत्तरगं देवि षष्टिसिध्द्यभिधं भवेत् ॥ ७६ ॥
द्वात्रिंशदुत्तरं देवि सुन्दरीमोहनाभिधम् ।
श्रीकालीमोहनाख्यं तु तदनन्तरमीरितम् ॥ ७७ ॥
चतुर्णामपि पुष्पे चेत्पुष्पिणीयोगमाहरेत् ।
रूढिजातिक्रिया चेत्स्यादधिराजाधिपं जपेत् ॥ ७८ ॥
पीठानि कथितान्यत्र रूपगन्धननाम च ।
प्रदद्याद्यत्नतो देवि परादिक्रमतो[2]ऽपि वा ॥ ७९ ॥
स्त्रीमात्रे परमेशानि योगोऽयं विनिवेद्यताम् ।
साधको देवदेवेशि निर्विकल्पो जितेन्द्रियः ॥ ८० ॥
कामक्रोधादिरहितो घृणालज्जाविवर्जितः ।
[3]* * * * ॥ ८१ ॥
* * * * ।
[4]दृष्टदोषेऽपि देवेशि मनःक्षोभं न कारयेत् ॥ ८२ ॥
कृतमन्येन * * * * * * स्वस्य[5] पार्वति ।
निरन्तरं कृतं द्वित्रैर्दश[6]पञ्चभिरेव वा ॥ ८३ ॥
एवं ज्ञात्वाऽपि देवेशि विकाररहितो यदि ।
ईदृग्विधो निर्विकल्पः साधनार्हो न[7] चान्यथा ॥ ८४ ॥
यदि दैववशाद्देवि * * चेद्व्यभिचारिणी ।
तथापि तस्याः सन्तोषं कारयेद्यत्नतः शिवे[8] ॥ ८५ ॥
अन्यथा ना[9]रकी भूयान्नात्र कार्या विचारणा ।
सैव सृष्टिर्जगद्धात्री सैव कारणमीश्वरी ॥ ८६ ॥
तस्या निवारणं[10] देवि कर्तुं केनात्र शक्यते ।
तया यत्क्रियते देवि सर्वं[11] सन्तोषरूपकम्[12] ॥ ८७ ॥

[1] AU °के । [2] A °णो° । [3] Omitted. [4] B दु° । [5] B स्वस्व° । [6] D °त्रिदश° । [7] U °दीनि° । [8] U प्रिये । [9] B न° । [10] B °णां । [11] U तत्तो° । [12] D °कारकं ।

मन्यमानो[1] महेशानि साधको भवति ध्रुवम् ।
केलिकुञ्जीं महा[2]दिव्यां सर्वलक्षणसंयुताम् ॥ ८८ ॥

तारुण्यामृतसंयुक्तां भावयेत् पूजयेत्सदा ।
कादिहादिक्रमेणैव सर्वं सम्पादये[3]द्ध्रुवम् ॥ ८९ ॥

* * * सा चेत्तदा काली प्रकीर्तिता ।
गन्धरूपयुता स्यात् चेत्सिद्धविद्यादिरूपिणी ॥ ९० ॥

श[4]यने सुन्दरी प्रोक्ता रतिगोष्ठीषु तारिणी ।
छिन्ना * *तु[5] देवेशि माने हि बगला मता ॥ ९१ ॥

शृङ्गारकरणे देवि महालक्ष्मीः प्रकीर्तिता ।
तस्याः समाकारणञ्च मातङ्गी परिकीर्तिता ॥ ९२ ॥

संयोगवार्ता भुवना निद्रार्ता[6] भैरवी मता ।
सर्वान्तरायो देवेशि दूरात्सन्दृश्यते यदि ॥ ९३ ॥

हस्तेनायाति चेत् सा[7] वै तदा धूमावती भवेत् ।
स्वेच्छा * * स्पर्शकाली स्वेच्छया तु विपर्यये ॥ ९४ ॥

श्रीमहादक्षिणाकाली महासाम्राज्यना[8]यिका ।
स्वेच्छादौ चेत्पुष्पयुक्ता श्रीमहाकामकालिका ॥ ९५ ॥

बला * * सिद्धिकाली संक्षेपादिदमीरितम् ।
स्त्रीमात्रे योजनीयं हि केलिकुञ्ज्यां विशेषतः ॥ ९६ ॥

आमूलान्तं च संवीक्ष्य सप्त * * * योगतः ।
ओष्ठं * * नेत्रयुग्मं कपोले भालदेशके ॥ ९७ ॥

* * सप्तममादिष्टं तेन सिद्धीश्वरो भवेत् ।
हस्ताह[9]स्तितया धृत्वा दिक्सहस्रं जपेन्मनुम् ॥ ९८ ॥

कालिका वरदा तस्य नात्र कार्या विचारणा ।
* * * समाचर्य सहस्रं त्रिदिनं जपेत् ॥ ९९ ॥

त्रिकालज्ञो भवेद्देवि नात्र कार्या विचारणा ।
[10] * * * * * * दशसाहस्रकं जपेत् ॥ १०० ॥

साधकः साधनासक्तः[11] कल्पद्रुमसमो भवेत् ।
[12]* * * * * * ॥ १०१ ॥

दश साहस्रकं जप्त्वा दशविद्याधिपो भवेत् ।
मुखे * * तु संदत्त्वा सहस्रदशकं जपेत् ॥ १०२ ॥

1 D अन्यथा नो । 2 D यदा; । U यथा । 3 D °दापये° । 4 D अ । 5 D रतीतो; B रता त्वं । 6 AB °द्रान्ता; D °न्दार्था । 7 U वेश्या । 8 U °दा° । 9 U °द्ध° ।
10 Omitted. 11 D °युक्तः । 12 Omitted.

महाकविवरो भूत्वा वादिराजो भवेद्ध्रुवम् ।
चामरं रविबिम्बञ्च त्रिसूत्र[1]ञ्च सरोरुहम् ॥ १०३ ॥

तिलपुष्पं चन्द्रबिम्बं खञ्जरीटं च पार्वति ।
पृथ्वीं विकसितां * * दश स्थानानि पार्वति ॥ १०४ ॥

प्रत्येकं दिक्सहस्रं च प्रजपेत्कालिकामनुम् ।
कालिका वरदा तस्य क्षणमात्रेण जायते ॥ १०५ ॥

सर्वाभावे स्वस्त्रियां च कर्तव्यं साधनं वरम् ।
चतुष्कपीठाभावे तु तत्तन्ना[2]मानि कल्पयेत् ॥ १०६ ॥

गन्धर्वोद्वाहयोगेन मौल्ये[3]नापि महेश्वरि ।
द्रव्यदानेन देवेशि मननं कारयेत्प्रिये[4] ॥ १०७ ॥

मननाज्जायते माता वरदात्री न संशयः ।
प्रसूनतूलिकां कृत्वा उच्चस्थाने निधापयेत् ॥ १०८ ॥

पात्रासादनकं कृत्वा पूजाद्रव्याणि चानयेत् ।
पञ्चषोढापरो भूत्वा तस्यां न्यासादिकं चरेत् ॥ १०९ ॥

साऽपि चेत्स्यात्[5] मतङ्गोत्था[6] साऽपि प्रथम * * * ।
[7]अथवा केलिकुञ्जादि प्रतिमासादि * * * ॥ ११० ॥

यदि भाग्यवशाद्देवि लभ्यते वा न लभ्यते ।
दीक्षितां देवताभक्तां घृणालज्जाविवर्जिताम् ॥ १११ ॥

जपासक्तां समासाद्य सर्वं संसाधयेच्छिवे[8] ।
तस्यां न्यासादिकं कृत्वा कामसोमकलादिकान् ॥ ११२ ॥

केशसंमार्जनं कृत्वा उपचारान् प्रकल्पयेत् ।
स्पर्शं कृत्वा जपं कुर्याद् * * * पूजनाद्भवेत् ॥ ११३ ॥

साङ्गां सावरणां कालीं सम्पूज्य परिभाव्य च ।
पूजासमाप्तौ देवेशि * * * * * * *[9] ॥ ११४ ॥

यथासंख्यं जपेत्तत्र * * * * विकाशयेत् ।
[10]* * * * * * ॥ ११५ ॥

* * * * सहस्रं तत्र संजपेत् ।
[11]* * * * * * ॥ ११६ ॥

तया यदुक्तं देवेशि तदेव कारयेद्ध्रुवम् ।
पूजां जानीहि[12] देवेशि तयोक्तं योगमाचरेत् ॥ ११७ ॥

[1] D °शूल° । [2] D ततो ना°; AU तत्र ना° । [3] D °ल्ये° । [4] B °स्त्रिये । [5] B वेश्या । [6] B °ङ्गास्या । [7] B omits. [8] DU °त्प्रिये । [9] Omitted [10] Omitted. [11] Omitted. [12] BDU °जा न जाता ।

योगं कृत्वा * * * तु तत्र यन्त्रं विलिख्य च ।
तत्सर्वं प्रलिहन् देवि जपं कुर्यादनन्यधीः ॥ ११८ ॥
पूजाजपो होमकर्म तर्पणं मार्जनं तथा ।
द्विजानां भोजनं चैव[1] सर्वदा यत्र तिष्ठति ॥ ११९ ॥
शय्याभंगो भवेत्पूजा जपो जल्पः प्रकीर्तितः ।
प्रवेशनं होमकर्म तर्पणं *** भवेत् ॥ १२० ॥
तत्क्षालनं मार्जनं स्याद् दर्शनं[2] द्विज[3]भोजनम् ।
ईदृग्विधं महापीठं स्वयम्भूसंज्ञकं परम ॥ १२१ ॥
यस्य दर्शनमात्रेण यावन्त्यः सन्ति सिद्धयः ।
स्वयमागत्य दासत्वं कुर्वन्त्येव न संशयः ॥ १२२ ॥
अनन्तयुगपर्यन्तं वीरसाधनकोटयः ।
कृता येन महेशानि तत्तुल्यं[4] निमिषाद्भवेत् ॥ १२३ ॥
इति प्रोक्तं षष्टिसिद्धिदातृ[5]साधनमुत्तमम् ।
त्रिसहस्रं वेदशतं षट्पञ्चाशत्तु[6] कीर्तितम् ॥ १२४ ॥
सूर्य[7]साहस्रकं देवि तथा कलाशतं शिवे ।
द्वि[8]शतं पंच[9]सङ्ख्यं तु नायि[10]काकुलमीरितम् ॥ १२५ ॥
रहस्यातिरहस्यं च गोपनीयं स्वयोनिवत् ।
वर्षाद्भूपो[11] भवेत्सोहि नात्र कार्या विचारणा ॥१२६॥
स एव कालीरूपः स्यान्नात्र कार्या विचारणा ।
अथ वक्ष्ये महेशानि यौवनाङ्कुरमादितः ॥ १२७ ॥
सहस्रं च शतं नेत्रपञ्चाशदधिकं शिवे ।
दिव्यादिव्ये च तद्द्वये चि[12]त्रिण्यादिक्रमेण च॥ १२८ ॥
त्रैलोक्यभुवनान्येव तीर्थानि पीठपर्वताः ।
पुरी वनानि ग्रामाश्च द्वीपाश्चैव क्रमेण च ॥ १२९ ॥
सागराश्च महापुर्यः समुद्राश्च प्रकीर्तिताः ।
तथा नद्यादि देवेशि देशपर्यायतीर्थकम् ॥ १३० ॥
क्रमेण योज्यतां देवि नात्र कार्या विचारणा ।
सुन्दरीपीठभेदं च वनानि बाटिकास्तया ॥ १३१ ॥
प्राकाराश्चैव सोपानं नायिकाभेदतश्चरेत् ।
चत्वारो नायिका देवि व्यत्ययात्प्रतवाच[13]काः ॥ १३२ ॥
ब्रह्माण्डमेतद्देवेशि स्त्रीदेहे[14] तिष्ठति प्रिये ।
ब्रह्माण्डानामनन्तं च स्त्रीदेहे स्फुटमेव च ॥ १३३ ॥

1 U देवि । 2 D दंशनं । 3 D विप्र° । 4 A °त्फलं । 5 U °वीर° । 6 U पटलं संप्र° । 7 D कुर्यात् । 8 U त्रि° । 9 U चैव । 10 B °य° । 11 U वर्षद्रूपो । 12 BA द्वि° । 13 D °द्वि° । 14 B °शे ।

स्त्रीरूपं च जगत्सर्वं यत्किञ्चिज्जगतीगतम् ।
तद्रू[1]पपू[2]जनाद्देवि पूजिताः सर्वयोषितः ॥ १३४ ॥

महाविद्याश्च योगिन्यो मातृकाः सर्वदेवताः ।
यथायोग्यस्थानपीठे निवसंत्येव पार्वति ॥ १३५ ॥

शास्त्रात्सर्वं तु विज्ञाय यथायोगेन योजयेत् ।
पूर्वोक्तमत्र पशूनां दिव्यानामेतदेव तु ॥ १३६ ॥

वीराणामपि च तथा दिव्ये वीरे न भेदता ।
समस्तज्ञानसंयोगाद् ब्रह्माण्डाख्यप्रदक्षिणा ॥ १३७ ॥

पृथ्वीप्रदक्षिणा देवि पशूनां परिकीर्तिता ।
सा पृथ्वी शक्तियोनिः स्यात्त्रैलोक्यं योनिमध्यगम् ॥ १३८ ॥

* * प्रदक्षिणा देवि वीराणां परिकीर्तिता ।
गुप्ता व्यक्ता द्विधा देवि पृथिवी परिकीर्तिता ॥ १३९ ॥

व्यक्ता गुप्ता महापुण्या तत्प्रदक्षिणमाचरेत् ।
सर्वश्रेष्ठा महादेवि ब्रह्माण्डाख्यप्रदक्षिणा ॥ १४० ॥

पादमात्रकृते देवि परशम्भुः सदाशिवः ।
शिव एव विजानाति फलबाहुल्यमत्र तु ॥ १४१ ॥

स्मरणाद्भाषणाद्देवि त्रैलोक्यं पूजितं भवेत् ।
शक्ति*** संप्रोक्तः शैवे तु विरहो भवेत् ॥ १४२ ॥

एतस्य लोपनाल्लोपा वृद्धावस्था प्रकीर्तिता ।
शक्तिस्तारुण्यवाटी स्यान्नाभिकूपः[3] प्रकीर्तितः ॥ १४३ ॥

* * घटौ महेशानि हास्यं पुष्पं प्रकीर्तितम् ।
कामो द्वारं महेशानि तथा दशरसा शिवे ॥ १४४ ॥

नेत्रस्थानपञ्चकेन तिष्ठति परमेश्वरि ।
सामरस्यरसो ब्रह्म स एवात्मा प्रकीर्तितः ॥ १४५ ॥

तद्वा[4]दनं ध्वनिः प्रोक्तस्तद्रसस्त्वमृ[5]तार्णवः ।
उद्दीपना***स्तु[6] सुगन्धः परिकीर्तितः ॥ १४६ ॥

मानसं भ्रामरं प्रोक्तं गतयः पक्षिणः स्मृताः ।
मृगपश्वादिभेदानां गतयः परकीर्तिताः ॥ १४७ ॥

रागतालाश्च रागिण्यस्तद्वार्तालापनं भवेत् ।
सर्वे हावाश्च देवेशि उ[7]त्खा[8]तारोपणं मतम् ॥ १४८ ॥

स्थायीभावाः सेचने[9] स्याद्विभावाश्चावलोकनम्[10] ।
स्थानात्स्थानान्तरे यानमनुभावाः प्रकीर्तिताः ॥ १४९ ॥

[1] B °स्यो° । [2] U °य° । [3] A °च्छिन्नः । [4] D °ञ्ज्ञा° । [5] A सम° ।
[6] BDU °लेपनं तु । [7] D त° । [8] A °त्पा° । [9] A सेवनं; U °नी । [10] U °श्चलचाल्कं ।

मालाका[1]रो वसन्तः स्यात्कटाक्षाः कामनिर्मिताः ।
नवोढप्रौढ˜ध्यादि एकद्वित्र्यावलि[2]र्मता ॥ १५० ॥

मालात्रुटिर्भवेन्मानो तन्नतिर्हा[3]नायकः ।
मालत्या[4]दीनि पुष्पाणि रतिहासी भवन्ति च ॥ १५१ ॥

**न्तहासे देवेशि सौगन्धे केशरादिकम् ।
एवं सर्वं तु विज्ञाय पञ्चगन्धाद्यकं शिवे ॥ १५२ ॥

तद्धर्मस्तु[5] महेशानि मयाऽत्र परिकीर्तितः ।
[6]तद्वार्ताऽनुग्रहः क्रोधः[7] शापश्च परिकीर्तितः ॥ १५३ ॥

तुष्टिः प्रसन्नता प्रोक्ता निन्दा क्षोभः प्रकीर्तितः ।
ताटस्थ्यं चैव वैमुख्यं शक्तिरूपं प्रकीर्तितम् ॥ १५४ ॥

आग्नेयी[8] स्वर्ग इत्युक्तः सौरीया नरलोकता[9] ॥ १५५ ॥
चान्द्री पाताललोकत्वं त्रैलोक्यं कोण[10]मध्यके ।
बिन्दुधर्मे[11]स्तु पर्जन्यः सर्वं संक्षेपतो मतम् ॥ १५६ ॥

शयनं क्रीडनं नाट्यं काव्यं तद्रूपचिन्तनम् ।
काव्यालापाश्च ये केचिद्गीतकाव्या[12]खिलानि च ॥ १५७ ॥

शब्दमूर्तिधरस्यैते विष्णोरंशा महात्मनः ।
पुनः पुनः किं वक्तव्यं[13] त्रैलोक्यं तन्मयं भवेत् ॥ १५८ ॥

चतुर्विंशतिवाद्यानि[14] संयोगध्वनिरेव च ।
कराकृष्टिर्मूर्छना स्यात् * * * मोचनं[15] शिवे ॥ १५९ ॥

प्रोक्तः स्वर्गो महेशानि प्रवेशो मोक्ष एव च ।
अन्यत्र निर्गमो मोक्षो मूढानां दुःखभागिनाम् ॥ १६० ॥

एतदज्ञानतो देवि फलं संसारजं शिवे ।
अज्ञानादपि देवेशि फलमेवं प्रयच्छति ॥ १६१ ॥

ज्ञानादेव महेशानि किंतद्यन्न करे स्थितम् ।
त्रिंशदर्बुदषट्पद्मपञ्चवृन्दा[16]र्बुदानि च ॥ १६२ ॥

मेधादीक्षादिभिर्युक्तस्तस्य ज्ञानं प्रकाशते ।
ज्ञानात् कीटोऽपि निर्मुक्तस्तद्योगं शृणु पार्वति ॥ १६३ ॥

जीवः कीटः पुरा भूत्वा भ्रमरं पश्यति प्रिये ।
तदालोकनसद्भावाद् भ्रमरत्वं प्रजायते ॥ १६४ ॥

पुनः कीटो न हि भवेत्तारुण्यस्वरूपतां गतः ।
शून्य[17]स्य भावना देवि शून्य[18]रूपो हि नीरसः ॥ १६५ ॥

1 U °भा° । 2 B °त्र्यम्बिका; AD त्र्यादिका । 3 U तत्रेति हार° । 4 A °लिन्या°; °लाद्या° । 5 D °द्धाम° । 6 B omits two lines. 7 D प्रोक्ता । 8 A °यां; °ध्यां । 9 U मानावलोकना । 10 B कर° । 11 B °वर्ष° । 12 B °न्य° । 13 D कर्तव्यं । D राज्यानि । 15 D चलनं; U °ने । 16 A °पंचा° । 17 A पूर्ण° । 18 A पूर्ण° ।

[1]यथा भवति देवेशि भाव[2]योगोऽत्र कारणम्[3] ।
ब्रह्माण्डरूपा या[4] शक्तिः परब्रह्मस्वरूपिणी ॥ १६६ ॥
चि[5]च्छक्तिरिति विज्ञाता शून्यं तस्यास्तु कोणगम् ।
अनन्तकोटिसंख्याता भ्रमरा यन्मुखोद्भवाः[6] ॥ १६७ ॥
तस्याः परस्वरूपिण्याः सद्भावं तु समभ्यसेत् ।
सुगमोऽयं परो भावश्चेतनापुरुषोऽपि वा ॥ १६८ ॥
शिवरूपः स च प्रोक्तः सर्वसिद्धिर्महेश्वरि ।
भावयोगाद्भवेन्मेधादीक्षा सर्वोत्तमोत्तमा ॥ १६९ ॥
आदौ कामकला प्रोक्ता तत्र चिन्तामणिर्भवेत् ।
ततो बाला स्पर्शमणिः कामेशी सिद्ध[7]कालिका ॥ १७० ॥
विद्याराज्ञी षोडशी च पश्यन्ती कामकालिका ।
च[8]रणेशी हंसकाली चतुश्चरणरूपिणी ॥ १७१ ॥
कुब्जि[9]का गुह्यकाली च मेधादीक्षा समाचरेत्[10] ।
उभयत्र क्रमान्मेधादीक्षा प्रोक्ता महेश्वरि ॥ १७२ ॥
द्विती[11]ये दीक्षितो यस्तु महामेधाभिधो[12] भवेत् ।
जीवः कीटः पु[13]रा भूत्वा भृंगित्वमभिगच्छति[14] ॥ १७३ ॥
ततः षट्चक्रसम्भेदं कृत्वा[15] तद्रससुग्भवेत्[16] ।
तत्त्वयोगे[17] महेशानि स्थापिते यन्त्रपीठके ॥ १७४ ॥
तेन मन्त्रान्[18] लिखेद्देवि तस्योच्चा[19]रणमाचरेत् ।
मन्त्ररूपो भवेत्तेन[20] साम्राज्यमेधा प्रकीर्तिता ॥ १७५ ॥
स्वयं शक्तिस्तद्द्वयं च शक्तिस्वक्रमयोगतः ।
शैवशाक्ते शाक्तशैवे तद्द्वयक्रमयोगतः ॥ १७६ ॥
चक्राणि चैव विज्ञाय उक्तमार्गेण पार्वति ।
चक्राणि चैव निर्भिद्य स्वरूपं तत्स्वरूपकम् ॥ १७७ ॥
न कीटत्वं न भृंगित्वं स्वरूपेणैव देवता ।
देवतारूपभावेन क्षणात्तद्रूपतां व्रजेत् ॥ १७८ ॥
अर्धनारीश्वराख्यो हि स्वर्ध्व[21]योगः प्रकीर्तितः ।
ब्रह्मनारी[22]श्वराख्यो[23]ऽयं महायोगः प्रकीर्तितः ॥ १७९ ॥

[1] A omits this line. [2] B मार° । [3] A adds तदालोकनसद्भावा यथा भवति भाविनि । [4] U सा । [5] D त° । [6] U° खागताः; B° द्गताः । [7] D °द्धि° । [8] U व° । [9] B °ज्जि° । [10] AD° भवेत् । [11] U °त° । [12] U °धियो; D °जितो । [13] D प° । [14] U °धीयते । [15] U मूला । [16] D माचरेत् । [17] B तत्परायणा; D तत्पारायणा । [18] B शलाकया । [19] B °द्ध° । [20] D °वत्येव । [21] D दुर्गा° । [22] U °डी° । [23] D स्वरूपो° ।

दिव्यसाम्राज्यमेधाख्या दीक्षा प्रोक्ता ततः शिवे ।
देवरूपा दिव्यरूपा मन्त्ररूपा महत्परा[1] ॥ १८० ॥
सर्वरूपा सर्वपूर्वा महासाम्राज्यमेधया ।
युक्ता[2] दीक्षा मया प्रोक्ता बिन्दुवत् गोपयेत्[3] कलौ ॥ १८१ ॥
एतद्दीक्षोत्तरं देवि नान्यदीक्षाऽस्ति कुत्रचित् ।
अर्द्धं शिवो विजानाति काली जानाति पूर्णतः[4] ॥ १८२ ॥
गुह्यकाल्यां सर्वमेतत्कुब्जिका सुन्दरी त्वतः[5] ।
कादिहादित्वकं सर्वं देवि तत्र प्रतिष्ठितम् ॥ १८३ ॥
नव[6]तत्त्वा महाविद्या नवचक्रेश्वरी परा ।
एतद्दीक्षासमायुक्तः केरली[7] परिकीर्तितः ॥ १८४ ॥
चक्षुष्मत्याद्ये[8]तदन्तं केरली षष्टिसिद्धिभाक् ।
मेधान्ता गदिता सिद्धिः सम्राड्युक्ता मनोमयी ॥ १८५ ॥
चक्षु[9]रूपान्तसंयुक्तः काश्मिरी[10] तत्त्वसिद्धिभाक् ।
नेत्रादिपूर्णदीक्षान्तो[11] गौड इत्यभिधीयते ॥ १८६ ॥
अष्टसिद्धीश्वरः प्रोक्तः कला चन्द्रे कलानि च[12] ।
पात्राणि पूजने देवि यथायोगेन योजयेत् ॥ १८७ ॥
पंच वा परमेशानि गौडे दारिद्र्यकल्पना ।
शक्तिर्मेधामयी प्रोक्ता तद्योगं च समभ्यसेत्[13] ॥ १८८ ॥
दिव्ययोगो[14] महेशानि तवाग्रेऽयं प्रकीर्तितः ।
दिव्यचक्रे जीवचक्रे शालिग्रामे तथैव च ॥ १८९ ॥
बाणलिङ्गे महेशानि नावाहनविसर्जनम् ।
प्रत्यक्षरूपाण्ये[15]तानि देवास्तिष्ठन्ति सर्वदा ॥ १९० ॥
अग्नौ दीपशिखा[16]मध्ये जले च दर्पणेऽपि च ।
सूर्यबिम्बे चन्द्रबिम्बे शालिग्रामशिलासु च ॥ १९१ ॥
स्फाटिके देवदेवेशि सदैवावाह्य पूजयेत् ।
यन्त्रं तु गृहमित्युक्तं बिन्दुः सिंहासनं भवेत्[17] ॥ १९२ ॥
शालिग्रामो भवेद्गेह[18]श्चक्राणि पीठसंचयः ।
चक्रयुक्ते चक्रमध्ये हीने चोपरि भावयेत् ॥ १९३ ॥
बाणलिङ्गे स्फाटिकेऽपि हीरमारकते[19] तथा ।
तस्योपरि विभाव्याऽथ पूजयेद्यत्नतः शिवे[20] ॥ १९४ ॥

1 A महेश्वरि । 2 U शत्क्या; D मुक्ता । 3 A द्विचण्डगमनां; U °प्यतां । 4 U पूर्णिमां; B °तां । 5 B तता । 6 D °र° । 7 B °ले । 8 BU °ह्ये° । 9 D वधू° । 10 U °रे । 11 B °क्षितो; A वै । 12 D नव । B omits कलाचन्द्रे......मया प्रोक्ता in the fourth line. 13 समुच्छ्रयः । 14 B °गी । 15 A °ख्या° । 16 °पे शङ्ख° । 17 D मतं । 18 AU °देहं । 19 U हीरके मर्कते । 20 B °वं ।

शालिग्रामे जीवचक्रे सर्वान्देवान् प्रपूजयेत् ।
यो भावो यस्य वै प्रोक्तस्तेन भावेन तिष्ठति ॥ १९५ ॥
पुष्पमेकतमं[1] स्थाप्य पूजयेत्परमेश्वरीम् ।
बीज[2]युक्तं तु यद्यन्त्रं तद्यन्त्रं सिद्धिरूपकम् ॥ १९६ ॥
शालिग्रामोऽथवा यन्त्रं स्थाप्य चैकतमं शिवे ।
दिव्यचक्रं यदा प्राप्तं जीवचक्रं तदा न च[3] ॥ १९७ ॥
जीवचक्रं यदा प्राप्तं बाणलिङ्गं न चार्च[4]येत् ।
बाणलिङ्गं यदा प्राप्तं शालिग्रामस्तदा न वै ॥ १९८ ॥
शालिग्रामो यदाप्राप्तस्तदाऽन्यत्र न पूजयेत् ।
शालिग्रामं तथा यन्त्रं द्वयमेकत्र ना[5]र्चयेत् ॥ १९९ ॥
पञ्चायतनपक्षी[6] चेद् द्वितीयं पूजयेत्सदा ।
एकपीठे पृथक् पूजां विना यन्त्रं करोति यः ॥ २०० ॥
देवताशापमाप्नोति रौरवं नरकं व्रजेत् ।
शालिग्रामे तथा यन्त्रे विद्यमाने महेश्वरि ॥ २०१ ॥
देवः कुत्र वसेद्देवि स्थानद्वितयकं भवेत् ।
शालिग्रामो[7] भवेद्यन्त्रं शालिग्रामो गृहं भवेत् ॥ २०२ ॥
यन्त्रं तु गृहमित्युक्तं गृहस्था देवता मताः ।
प्रतिमा वा प्रकर्तव्या यथोक्ता शुभलक्षणा ॥ २०३ ॥
शालिग्रामे तथा यन्त्रे सहसैव प्रसीदति ।
जीवचक्रे महेशानि प्रसन्नाऽस्ति निरन्तरम् ॥ २०४ ॥
जीवचक्रस्य विज्ञानी कलौ दुर्लभ एव च ।
बालुकायां भवेत्तैलं वन्ध्या पुत्रं प्रसूयते ॥ २०५ ॥
खपुष्पमपि जायेत अयोनिर्मनुजोऽपि वा ।
जीवचक्रस्य विज्ञानी कलौ क्वापि न वै भवेत् ॥ २०६ ॥
अग्रस्थानं परित्यज्य भिक्षामटति दुर्मतिः ।
तथा[8] जीवं परित्यज्य परिधावति धावति ॥ २०७ ॥
अहो जीवस्य विज्ञानी शिवतुल्यो नरो भवेत् ।
[9]पश्यन् लिहन् स्पृशन् * * * भजन् ध्यायन् महेश्वरि ॥ २०८ ॥
यो जपेत्परमेशानि शिवतुल्यो नरो भवेत् ।
[10]जीवं जीवेन युञ्जीत जीवं जीवेन योजयेत् ॥ २०९ ॥
जीवं जीवेन संयोज्य जीवन्मुक्तो नरो भवेत् ।
अहो धन्या[11]त्परो देवि जीवचक्री नरोत्तमः ॥ २१० ॥

[1] D °त्र सं° । [2] D जीव° । [3] B तत्र; U नवा । [4] A °र्पं° । [5] B नो° ।
[6] D °क्षं; U °दीक्षा; A °यज्ञा । [7] B° मे । [8] D यथा । [9] D omits two lines.
[10] B omits two lines. [11] धृत्वा ।

आनन्दात्मा घनान्दात्मा[1] ज्ञानात्मा परमात्मवित् ।
विज्ञानात्मा भवेद्देवि सकृज्जीवस्य दर्शकः ॥ २११ ॥

जीवचक्रं मुखे धृत्वा लक्षं जपति वादिराट् ।
तद्रसं * * * * देवि लक्षं जपति कालिका ॥ २१२ ॥

जिह्वां दत्त्वा जपेल्लक्षं शक्तिपातकरो भवेत् ।
* * दत्त्वा जपेल्लक्षं सर्वज्ञः साधको भवेत् ॥ २१३ ॥

आलोक्य प्रजपेल्लक्षं कविराट् साधको भवेत् ।
* * दत्त्वा जीवचक्रे सप्तचुम्बनविद्रुवम् ॥ २१४ ॥

* * मुखं प्रदत्त्वा तु लक्षं जपति शङ्करः ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २१५ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारा-संवादे कौलतीर्थविनिर्णयो नाम त्रयोदशः पटलः ।

1 D महादेवि ।

## चतुर्दशः पटलः ।

श्रीदेव्युवाच ।

शक्तौ पूजाक्रमं देव कथयस्व ममाधुना ।

श्रीशिव उवाच ।

शक्तिपूजां प्रवक्ष्यामि येन देवीमयो भवेत् ॥ १ ॥
नटी कापालिका वेश्या रजकी नापिताङ्गना ।
मालाकारस्य कन्या च कुम्भकारस्य कन्यका ॥ २ ॥
कन्याष्टक[1]मिदं प्रोक्तं कुलाष्टकमथ शृणु ।
राजवेश्या गुप्त[2]वेश्या देववेश्या तथैव च ॥ ३ ॥
नृत्ययात्रातीर्थवेश्या कुट्टि[3]नी व्यभिचारिणी ।
पञ्च * * हृ[4]ता वेश्या दश * *   * * श्वरी ॥ ४ ॥
पञ्चविंशति * * च * *तुष्टा प्रकीर्तिता ।
पञ्चाश * * संयुक्ता * * सिद्धा प्रकीर्तिता ॥ ५ ॥
शत[5] * * * * नन्दा सहस्रा * * सुन्दरी ।
असंख्य * * संयुक्ता * * ब्रह्मपरा मता ॥ ६ ॥
कुलाष्टकमथेदानीं शृणु पार्वति तत्त्वतः[6] ।
मध्य * * महेशानि * * माला महोत्तमा ॥ ७ ॥
विश्व * * सर्वयोनिः सर्वस्मादपि चोत्तमा ।
[7]कुलाकुलाष्टके देवि द्विविधा[8] परिकीर्तिता[9] ॥ ८ ॥
राजवेश्यादिकायुग्मं गौडे पुष्पोपचारिकम् ।
माता पुत्री तथा पौत्री स्वसा चैव स्नुषानुजा ॥ ९ ॥
श्यालिका केलिकुञ्जी च मातृजाया तथाष्टमी ।
कुलाष्टकमिदं प्रोक्तं सर्वसिद्धिप्रदायकम् ॥ १० ॥
तरुणीं सुन्दरीं रम्यां[10] चञ्चलां[11] * * लोलुपाम् ।
गुरुभक्तां मन्त्रयुक्तां सर्वलक्षणसंयुताम् ॥ ११ ॥
ईदृग्विधां समानीय प्रसूनतूलिकोपरि ।
* * तु कलशौ प्रोक्तौ सामान्यार्घ्य[12]स्तु नाभि[13]का ॥१२ ॥
* * ध्व[14]जो विशेषार्घ्यस्त्रिकोणं यन्त्रमीरितम् ।
गमा[15]गमावृत्तिरु[16]क्ता पुष्पं प्रहसितं[17] स्मृतम् ॥ १३ ॥
आलापस्तु जपः प्रोक्तस्तवलोको वरः स्मृतः ।
क्रोधस्तु निग्रहः प्रोक्तः करग्रहो[18]ऽभयं भवेत् ॥ १४ ॥

[1] D °काष्ट° । [2] U ग्राम° । [3] D °ट्ट° । [4] D °ग° । [5] U दश° । [6] D यत्नतः । [7] U omits two lines. [8] B विविधे । [9] A °ते । [10] D विद्यां । [11] B चटुलां । [12] A °र्थां° । [13] D °सि° । [14] B °गांबु° । [15] A विना । [16] U °ग्रु° । [17] B तु प्रहतं; U °सनं । [18] D अवग्रहो ।

* * पादप्रसा[1]रस्तु पृथिव्यास्तु प्रदक्षिणा ।
* * * स्तोत्रपाठोऽत्र * * धारस्तपःक्रिया ॥ १५ ॥

गले पादस्य निक्षेपः सिंहासनमितीरितम्[2] ।
विपरीतं दोलिकाख्या पूजा प्रोक्ता महेश्वरि ॥ १६ ॥

त्रिसर्जनं वीज[3]पातो मुद्रा त्वालिङ्गनं भवेत् ।
ओष्ठ * * देवि खेचरीयोग ईरितः ॥ १७ ॥

कपोल * * देवि गुटिका परिकीर्तिता ।
ललाट * * देवि लवका[4] परिकीर्तिता ॥ १८ ॥

नेत्रसं * * देवि अञ्जनं[5] परिकीर्तितम् ।
करसं[6] * * देवि खड्गसिद्धिः प्रकीर्तिता ॥ १९ ॥

* * * * * देवि मनोरथमयी गतिः ।
* * * * देवेशि कालवञ्चनमीरितम् ॥ २० ॥

* * संलेहनं देवि ब्रह्मरूपं न संशयः ।
आलोकनं[7] पृथिव्यास्तु देवतादर्शनं भवेत् ॥ २१ ॥

तत्सङ्गिना सदा भाव्यं[8] तामालोक्य जपे[9]त्सदा ।
कोटिब्रह्माण्डदानादि एकतः परिकीर्तितः ॥ २२ ॥

तच्छायालोकनं देवि सर्वाच्छ्रेष्ठतमं[10] भवेत् ।
तपस्या कोटितीर्थेषु यागा[11]नामपि कोटयः ॥ २३ ॥

देवालयानामानन्त्यं कृतं येन निरन्तरम् ।
तेनेदं प्राप्यते देवि दर्शनं विन्दुरूपिणः ॥ २४ ॥

ब्रह्मणो दर्शनं देवि शब्दब्रह्म महत्तरम् ।
चन्द्रामृतं राहुभीत्या[12] तथा स्वर्गामृतं प्रिये ॥ २५ ॥

राक्षसानां तु संभीत्या ओष्ठे * * विराजते[13] ।
चन्द्रामृतं चाधरोष्ठे * * स्वर्गामृतं प्रिये ॥ २६ ॥

सदा तिष्ठति देवेशि ज्ञानात्[14] सिध्यति नान्यथा ।
अज्ञानाद्विष[15]रूपं स्यान्नात्र कार्या विचारणा ॥ २७ ॥

मुखे हाला करे[16] माला * * शाला तु[17] तच्छविः[18] ।
हृदये स्त्री कराला तु दीपमाला गृहाङ्गणे ॥ २८ ॥

न करोति नरो[19] यस्तु स कथं मम पूजकः ।
संयोगो ग्रहनं देवि महाकल्पान्ततो तथा[20] ॥ २९ ॥

1 D °हा° । 2 D °दं स्मृतं । 3 U वीर्य° । 4 U स्तवका । 5 D अज्ञानं । 6 D कवले । 7 B °चने । 8 D द्रव्यं । 9 D भवे° । 10 D सर्वास्तेषु करे । 11 U यज्ञा° । 12 D °व्याधभिया । 13 U °जायते । 14 B °नं । 15 A °द्धि वि°; U °बिन्दु । 16 D गले । 17 U °द्वारं; D °मग्ना । 18 ADU चक्षुषी । 19 B परं । 20 AU °न्तरोऽपि च ।

सूर्यग्रहो यथा योगो विपरीते निशाकरे ।
प्रमादान्मनसा वाऽपि मोहतोऽपि न गालयेत् ॥ ३० ॥
तया यदुच्यते वाक्यं तदेव कारयेत्प्रिये ।
तथा योगे समारब्धे पूर्णयोगो यदा न च[1] ॥ ३१ ॥
पुरुषस्य न संजातस्तेन संक्रीड्यते मुहुः ।
ग्रस्तास्तः स तु विज्ञेयः सर्वपर्वोत्तमोत्तमः ॥ ३२ ॥
स्वयं योगे समारब्धे स्वस्य[2] पूर्वं तु * * * ।
तथा[3] कार्यं समाचर्य[4] तस्य पातो न जायते ॥ ३३ ॥
ग्रस्तोदयः स विज्ञेयः सर्वसिद्धिप्रदायकः ।
[6]इदं रहस्यं परं[7] प्रोक्तं दिवायोगं शृणु प्रिये ॥ ३४ ॥
तस्याः स्वस्य क्रमेणैव तस्यास्त्वर्द्धोदयो मतः ।
महोदयः स्वयोगे स्यात् वार्ता[8] दशहरा स्मृता ॥ ३५ ॥
तद्वार्ताऽक्षय[9]रूपाख्या तृतीया परिकीर्तिता ।
इति संक्षेपतः प्रोक्तं विशेषं शृणु पार्वति ॥ ३६ ॥
मासद्वादशकं देवि क्रमेण परिकीर्तितम् ।
ऋतुयोगे महेशानि महासाम्राज्यमीरितम् ॥ ३७ ॥
दिव्यादीनामिदं प्रोक्तं पशूनां[10] शृणु पार्वति ।
सूर्यचन्द्रग्रहे देवि अङ्गुलद्वितयोर्धतः[11] ॥ ३८ ॥
सार्द्धद्वयाङ्गुलोत्तरं[12] केचिदिच्छन्ति तान्त्रिकाः ।
सूर्यग्रहे चतुर्यामं चन्द्रे यामत्रयं भवेत् ॥ ३९ ॥
वेधः प्रोक्तो महेशानि पूर्वयोर्दृष्टिवे[13]धनम् ।
न भोक्तव्यं तत्र देवि स्नानदानादिकं चरेत् ॥ ४० ॥
ग्रस्तोदयं समारभ्य ग्रस्तास्ते च[14] महेश्वरि ।
शास्त्रदृष्ट्या समालोच्य[15] स्नानदानादिकं चरेत् ॥ ४१ ॥
कदा लग्नं कदा मुक्तिः सर्वं ज्ञात्वा प्रयत्नतः ।
स्नानदानादिकं कार्यं नान्यथा शाङ्करं वचः ॥ ४२ ॥
नोपवासं प्रकुर्वीत जीवत्पुत्रो[16] हि कर्हिचित् ।
ग्रस्तास्ते पूर्वमु[17]क्तस्य नोपवासः[18] प्रकीर्तितः ॥ ४३ ॥
ग्रस्तो[19]दये पूर्ववेधे न भोक्तव्यं कदाचन ।
अत्र[20] केचिदपीच्छन्ति पशवः[21] शास्त्रमोहिताः ॥ ४४ ॥

[1] U °चैनं । [2] A सूर्य°; D यस्य । [3] B °या । [4] U °ह्यातं । [5] U तस्मात् ।
[6] D omits four lines. [7] U स्वयं मया । [8] B °द्धाता । [9] U र्त्तो क्षिप्य ।
[10] B यथा तां । [11] U तथा । [12] D °लेरन्ते । [13] D °सा° । [14] AU वा । [15] B °क्य ।
[16] D चक्रे । [17] B °यु° । [18] B °चारः । [19] AD ब्रह्मो° । [20] D तः° । [21] AB भव° ।

उपवासं प्रकुर्वीत ग्रस्तास्ते परमेश्वरि ।
शास्त्रदर्शस्तु सन्दर्शः प्रत्यक्षे पूर्णरूपता ॥ ४९ ॥
दिव्यानामपि देवेशि अङ्गुलद्वयतो भवेत् ।
उपावासस्त्रिरात्रं तु शैवानां परिकीर्तितः ॥ ४६ ॥
त्रिष्णुगाणपसौराणां[1] द्विरात्रं परिकीर्तितम् ।
[2]शाक्तानां पूर्वरात्रं तु पुरश्चर्यायुतो भवेत् ॥ ४७ ॥
पुरश्चरणहीनानां नोक्तमेतन्मया तव ।
चान्द्रे स्वायम्भुवे देवि द्विरात्रं परिकीर्तितम् ॥ ४८ ॥
नैमित्तिकं द्वयं यत्र तत्राल्पं काम्य[3]वाचकम् ।
इति संक्षेपतः प्रोक्तं सम्प्रदायफलं श्रृणु ॥ ४९ ॥
केरलश्चैव काश्मीरो गौडश्चैव तृतीयकः ।
सम्प्रदायत्रयं प्रोक्तं सर्वसिद्धिप्रवर्तकम् ५० ॥
सम्यक् प्रदीयते ज्ञानं सम्प्रदायः प्रकीर्तितः ।
कामादिदोषरहितः कादिहादिमतेश्वरः ॥ ५१ ॥
वाञ्छिता कल्पिता सिद्धिः मनोरथमयी तथा ।
सर्वैश्वर्यं भवेद्देवि लोके रत्नमिवापरः ॥ ५२ ॥
ललाटरेखां संमार्ज्य नवीनां निर्मितां चरेत् ।
विद्यारश्मिमहामन्त्रमन्त्र[4]मण्डलसंयुतः[5] ॥ ५३ ॥
महाविद्यामण्डलेशः[6] साम्राज्यमण्डलान्वितः ।
अष्टाष्टक[7]समायुक्तः पञ्चपञ्चकसंयुतः ॥ ५४ ॥
शाम्भवप्रश्नसंयुक्तो जन्मवर्षादिविद्भवेत् ।
चतुःसन्ध्यासमायुक्तः पञ्चपारायणान्वितः ॥ ५५ ॥
वाञ्छाकल्पलतायुक्तो मन्त्रमण्डलनाम च[8] ।
महाविद्यासमायुक्तः पादुकादशकान्वितः ॥ ५६ ॥
पञ्चषोढासमायुक्तः कादिहादिमतेष्वपि ।
यस्य प्राणमनो देवि मुर्तिस्फोटादिचाल[9]नम् ॥ ५७ ॥
हासनं कम्पनं वाक्यं मुखादुच्चार्यते स्फुटम् ।
षष्ठिसिद्धीश्वरो यस्तु [10]केरलः परिकीर्तितः ॥ ५८ ॥
काश्मीरं श्रृणु देवेशि सावधानमना भव ।
कार्पण्यादिविरहितः वामादिगुणसंयुतः ॥ ५९ ॥
उभयोर्ध्वाम्नाययुक्तो राज्यदातृत्वशक्तिवित् ।
चतुर्विंशतिसिद्धानामधिपो नरपुङ्गवः ॥ ६० ॥

[1] D बौद्धानां । [2] D omits three lines. [3] U तत्र काम्यपि । [4] D यन्त्र° । [5] D °मतः । [6] D यन्त्रमन्त्र° । [7] D पंचषोढा° । [8] B °तः । [9] A °ताड° । [10] U omits केरल......°युक्तः in the sixth line.

एकत्रोर्ध्वाम्नाययुक्तः स काश्मीरः प्रकीर्तितः ।
[1]उभयोर्ध्वाम्नाययुक्तो महाकाश्मीर ईरितः ॥ ६१ ॥

अथ गौडं महेशानि कथ्यते श्रृणु साम्प्रतम् ।
गीर्वाणगणसंवादी गारुडादिप्रणाशकः ॥ ६२ ॥

श्रीमद्ज्ञान[2]सरस्वत्याः पारगामी नरस्तु यः ।
भुवनानन्दकृद्वीरः[3] स्त्रीभक्तो[4] विजितेन्द्रियः ॥ ६३ ॥

डामर्यादिकलायुक्तः पूर्णदीक्षासमन्वितः ।
उक्ताधिकारसंपन्नः पूर्वमत्रापि[5] पार्वति ॥ ६४ ॥

अष्टाष्टकादिसंयुक्तः समयाचारपालकः ।
महाबलो महोत्साहो[6] गौड इत्यभिधीयते ॥ ६५ ॥

पूर्वगौ[7]ड़ो मध्यगौड़ो द्विविधः पूर्ववद्भवेत् ।
इति गौड़स्तु संप्रोक्तः सर्वसिद्धिप्रदायकः ॥ ६६ ॥

अणिमाद्यष्टसंयुक्तः श्रीगौड़ः परिकीर्तितः ।
सम्प्रदायत्रये देवि विकल्पं[8] पूर्वमीरितम् ॥ ६७ ॥

परमेशजपासक्तः सर्वसत्त्वदयान्वितः ।
त्यागी भोक्ता विनीतश्च तिथिनित्याप्रपूजकः ॥ ६८ ॥

परनिन्दा परद्रोहो परीवादो महेश्वरि ।
परस्त्रीपरवित्ते च षष्ठश्चैव प्रतिग्रहः[9] ॥ ६९ ॥

वर्जयेत्सर्वमेतद्धि सङ्ख्यामन्यां शतं[10] भवेत् ।
परद्रोहं परीवादं परवित्तं प्रतिग्रहम् ॥ ७० ॥

परवार्तां[11] विशेषेण शाक्ते पञ्च विवर्जयेत् ।
बटुकस्य मतं प्रोक्तं शङ्करस्य मतं श्रृणु ॥ ७१ ॥

परान्नं परहस्तं च सर्वथा परिवर्जयेत् ।
परहस्तः सर्वपुण्यजपपूजाहरः स्मृतः ॥ ७२ ॥

अन्यमन्त्रं जप्यमानस्त्वन्यदेवेषु[12] तत्परः ।
संप्रदायेन सम्भिन्नः सर्वदोषसमन्वितः ॥ ७३ ॥

लोलुपश्चैव पाषण्डः प्रोक्तः कलियुगे नरः ।
तेन यत्क्रियते पापं सदसद्वा महेश्वरि ॥ ७४ ॥

तद्धस्तभोजी देवेशि तदंशं लभते ध्रुवम् ।
मिताहारी[13] जपासक्तो गुरुभक्तो जितेन्द्रियः ॥ ७५ ॥

[1] A omits this line. [2] U °गान° । [3] B °द्धीरः । [4] A तिग्मांशु । [5] U पूर्णमन्त्रोऽपि; B मन्त्रोऽपि । [6] D महेशानि; U °ही । [7] D °नगौं° । [8] B संकल्पे । [9] U प्रकीर्तितः । [10] B मतं । [11] U °कान्तां । [12] AU °न्याचारेषु । [13] B °शनी; D °क्षर° ।

सत्य[1]वक्ता महेशानि नरश्चैव सदा भवेत् ।
दानादि[2]गुणसंयुक्तो हस्ताद्भोजनमाचरेत् ॥ ७६ ॥
विशेषेण महेशानि स्त्रीहस्तं परिवर्जयेत् ।
स्त्रीशूद्रालापनं देवि कर्तव्यं न कदाचन ॥ ७७ ॥
इदं पशुमते[3] प्रोक्तं दिव्यानां पूर्वमीरितम् ।
पूर्वोक्तां शक्तिमानीय सर्वलक्षणलक्षिताम्[4] ॥ ७८ ॥
घृणालज्जादिरहितां समानीय प्रयत्नतः ।
न्यासजालादिकं सर्वं पूर्ववत्[5] परमेश्वरि ॥ ७९ ॥
* * विकसितं कृत्वा सर्वसौगन्धसंयुतः ।
पूजयेद्देवताबुद्ध्या विकारपरिवर्जितः ॥ ८० ॥
* * * तु विधायादौ ततो ग्रहणमाचरेत् ।
तत्कुण्ड * * * कुर्वन् जपं कुर्यान्निरन्तरम् ॥ ८१ ॥
तत्र * * ततो दत्त्वा जपं कुर्यादनन्यधीः ।
* * * देवि जपेदकमनाः प्रिये ॥ ८२ ॥
पुनरालोच्य संजप्य सम्बुध्य[6] परमेश्वरि ।
सर्वसिद्धीश्वरो भूयाच्छिवतुल्यो नरो भवेत् ॥ ८३ ॥
तद्धस्तनिःसृतजलं दिव्यमुक्तासमं भवेत् ।
हीरकः स्फटिको भूयान्मन्त्रः[7] स्वर्णकरं भवेत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ८४ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
शक्तिपूजाकथनं नाम चतुर्दशः पटलः[8] ।

[1] B मित° । [2] B इत्यादि° । [3] B °पतेः । [4] U °संयुतां । [5] B पूर्ववत्पूजयेत् ।
[6] U °चुम्ब्य । [7] D °न्मुद्रं । [8] The colophon is ours.

# पञ्चदशः पटलः ।

ईश्वर उवाच ।

स्त्रीस्वरूपं पुंस्वरूपं गवाक्षयोगवर्णनम् ।
सिद्धेश्वर्यादिविज्ञानं वीरपत्न्यादिलक्षणम् ॥ १ ॥
चातुर्वर्ण्यकुले देवि चतुर्णां चा[1]भिचारतः ।
भिन्नतीर्थप्रकथनं तद्देशार्तीर्थनिर्णयम् ॥ २ ॥
पञ्चाशत्पीठदेवीनां वेश्यात्वाद्व्यभिचारतः ।
तीर्थानि सर्वसिद्धानि सद्यः[2] सिद्धिकराणि च ॥ ३ ॥
कथ्यते देवदेवेशि सावधानमना भव[3] ।
सुन्दरीं तरुणीं रम्यां चार्वङ्गीं चारुहासिनीम्[4] ॥ ४ ॥
गुरुभक्तां जपासक्तां महाकामकुतूहलाम् ।
दर्शनान्मोहिनीं साध्वीं कटाक्षादिप्रमोचनीम् ॥ ५ ॥
केशरञ्जनसंयुक्तां वस्त्र[5]रञ्जनसंयुताम् ।
गर्भ * * कलायुक्तां पुष्पो[6]त्पाटनतत्पराम्[7] ॥ ६ ॥
नानापाककलायुक्तां लेह्यपेयादिसत्कलाम् ।
शय्यासंरञ्जनीं दिव्यां मुखवासादिरञ्जिनीम्[8] ॥ ७ ॥
गीततालमृदङ्गादिवीणावादनतत्पराम् ।
काव्यालापसमस्या[9]दिपल्लवादिसमन्विताम् ॥ ८ ॥
नानाचित्रकलायुक्तां सौरम्य[10]* * न्विताम् ।
* * शातनसंयुक्तां सत्कुचां करुणाकुलाम् ॥ ९ ॥
* * स्थूलदीर्घकरां नानाभरणभूषिताम् ।
[11]* * * * देवेशि ह्यविकारपरायणाम् ॥ १० ॥
[11]* * * * * विकारपरिवर्जिताम् ।
नायिकाष्टतुल्ययुक्तां क्रोधमात्सर्यवर्जिताम् ॥ ११ ॥
सर्वदोषविहीना या सा शक्तिः परिकीर्तिता ।
पुंस्वरूपं महेशानि कथ्यते श्रृणु साम्प्रतम् ॥ १२ ॥
नानाविलासकुशलः सर्वशक्तिसमन्वितः ।
तरुणः सुन्दरः शूरश्चिर * * * कारकः ॥ १३ ॥
दीर्घ * * दृढाघाती * * * च तत्परः ।
कामशास्त्रकलायुक्तो मन्त्रनाड्यौषधान्वितः ॥ १४ ॥

[1] B ना° । [2] D °र्वं° । [3] D °नावधारय । [4] D °लोचनां । [5] A मुख° ।
[6] U °ण्यो° । [7] A °दन संयुतां । [8] U °तां । [9] A °मास्वा° । [10] D सबाल्य° ।
[11] Omitted.

स्तम्भज्ञानी[1] * * वृद्धिस्थूलदीर्घक्रियान्वितः ।
मकारपञ्चकासक्तो गुरु[2]भक्तो जितेन्द्रियः ॥ १५ ॥

सर्वकालं जपासक्तः सर्वतन्त्रार्थतत्त्ववित् ।
आकर्षणवशीकारस्तथोच्चाटनतत्परः ॥ १६ ॥

ज्ञान[3]विज्ञानसंयुक्तः कामा[4]दिदोषवर्जितः ।
संगीतवाद्यवीणादि काव्यनाट्यकलाग्रणीः[5] ॥ १७ ॥

पल्लवानां तु विज्ञाता कुल[6]भक्तो महोत्तमः ।
* * * चालोच्य विकारादि[7]विवर्जितः ॥ १८ ॥

स्त्रीस्वरूपस्य विज्ञानी देहज्ञानी तथापरः ।
शापानुग्रहणे दक्षः सर्वभूतदयापरः ॥ १९ ॥

सर्वचक्रस्य विज्ञानी दिव्याम्बर[8]विभूषितः ।
दिव्याभरणसंयुक्तः सर्वसौगन्ध[9]संयुतः ॥२०॥

[10]सर्वदा धूपगेहस्थस्त्रैकाल्य[11]ज्ञानवित्परः ।
स्त्रीरूपज्ञानसम्पन्नः सर्वदा तत्स्वरूपवान् ॥२१॥

समस्याकोशविज्ञानी गेहरञ्जनसंयुतः ।
ईदृग्विधो महेशानि साधनार्हो न चाऽन्यथा ॥२२॥

तत्रापि कालिकाभक्तः कलौ दुर्लभ एव च ।
एवं गुणान्समालोच्य[12] सस्मितास्यो[13] महेश्वरि ॥२३॥

साधनां कारयेद्देवि नान्यथा शाङ्करं वचः ।
त्रिधा त्रिशक्तिसंजापी गवाक्षे योगमभ्यसेत् ॥२४॥

देवालये नदीतीरे रम्ये वा यत्र कुत्रचित् ।
धूपामोदगृहं ग[14]त्वा भूतशुद्ध्यादिसंयुतः ॥२५॥

ऋषिच्छन्दादिषोढान्तं कुल्लुकान्तं महेश्वरि ।
कृत्वा ध्यात्वा महेशानि गवाक्षे दृष्टियोजनम् ॥२६॥

अङ्गुष्ठादिशिखान्तं हि समालोच्य जपं चरेत् ।
[15]भ्रामरं सूर्यबिम्बं च त्रिवेणीपुष्करं तथा ॥२७॥

तिलपुष्पं खञ्जरीटं चम्पकं[16] कामरूपकम् ।
अमृतं पुष्पितं देवि सङ्गीतं वाद्यमेव च ॥२८॥

[1] तन्त्रज्ञान° । [2] DU भक्त° । [3] B °नी । [4] B कान्ता°; D काला° । [5] U कलिग्रहः । [6] D कला° । [7] D व्यभिचारादि° । [8] U °चार° । [9] D °न्धि° । [10] U omits सर्वदा......विज्ञानी in the third line. [11] D °लोक्य° । [12] U °क्य । [13] U° स्यां; B °स्यो । [14] D कृ° । [15] D चा° । [16] U चुम्बनं; U सर्वत्तं ।

समालोच्य जपेद्देवि कामगेहे विशेषतः ।
एकद्वित्र्यादिलक्षान्तं समालोच्य जपं चरेत् ॥२९॥

तत्रेष्ट[1]पुष्पिणीं[2] दृष्ट्वा कृत्वा संयोगमादरात् ।
गवाक्षयोगसामर्थ्यात्[3] जपं कुर्यादनन्यधीः ॥३०॥

अष्टावधानी देवेशि भवत्येव न संशयः[4] ।
अथवाऽन्यप्रकारेण साधनान्तरमुच्यते ॥३१॥

कुलजां युवतीं वीक्ष्य * * * प्रदापयेत् ।
* * * कारयेद्देवि गवाक्षमभ्यसेत्तथा ॥३२॥

* * * विलिहन् देवि स्वरसं च ततः परम् ।
एवं मासाष्टकं कुर्यात्सिद्धिदाता न चान्यथा ॥३३॥

दशावधानी देवेशि भवत्येव न चाऽन्यथा ।
वीरपत्नीं समानीय शवशय्यां[5] समाचरेत् ॥३४॥

वीरसाधनवत्कृत्वा शव[6]मासाद्य[7] यत्नतः ।
* * * * * स्थाप्य सप्त * * * योगतः ॥३५॥

गवाक्षयोगमासाद्य तत्रैव परमेश्वरि ।
वर्षमात्रं जपेद्देवि कालीतुल्यो[8] नरो भवेत् ॥३६॥

शतावधानी देवेशि भवत्येव नरोत्तमः ।
अथवाऽन्यप्रकारेण साधनान्तरमुच्यते[9] ॥३७॥

महाशवमध्यभागे भूमा[10]वासाद्य यत्नतः ।
मृदुचूडकमुण्डानि[11] कोमलं च चतुर्थकम् ॥३८॥

क्रमेण दिक्षु संयोज्य तत्र शक्तिं समानयेत्[12] ।
आसनं तत्र सन्दत्वा महाव्याघ्रासनं तथा[13] ॥३९॥

तस्योपरि[14] समानीय * * * विधाय च ।
स्पर्शं[15]षट्कासनं कृत्वा जपं कुर्यादनन्यधीः ॥४०॥

वर्षमात्रं जपेद्देवि समयादिषु तत्परः ।
सहस्राद्यवधानं तु[16] कर्तुं शक्तो नरो भवेत् ॥४१॥

कुंकु[17]मं केशरं चापि समानीय प्रयत्नतः ।
वामहस्ते तु संस्थाप्य दक्षिणे यन्त्र[18]मालिखेत् ॥४२॥

1 U °त्रैव; B °त्रात्र । 2 BD °तां । 3 B °र्थ्यं । 4 D चान्यथा । 5 A शवं तस्य । 6 A सर्वं° । 7 B °दाय । 8 U °कास्यो; D °साक्षा° । 9 D °त्र प्रयुज्यते । 10 D भूमौ चावाह्य । 11 DU °नां । 12 U °चरेत् । 13 AB °या । 14 U तत्र वेश्यां । 15 AD सर्वां°; B स्पर्धां° । 16 D तत् । 17 B °कुसु° । 18 D दक्षेण मन्त्र° ।

वामेन तर्पणं कुर्यात्सहस्रमयुतञ्च वा ।
शक्तेर्मुखं समालोक्य तर्पणं सर्वदा चरेत् ॥४३॥

सर्वसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ।
सिद्धेश्वरीलक्षणं च कथ्यते शृणु साम्प्रतम्[1] ॥४४॥

यस्या विवाह्यते[2] कन्या सा चेद्वीराङ्गना यदि ।
सापि * * यदि भवेत्तदा सिद्धेश्वरी मता ॥४५॥

केलिकुञ्ची महेशानि व्यभिचार[3]परायणा ।
कुलीनस्य तु या[4] भार्या सापि * * भवेद्यदि ॥४६॥

वागीश्वरीति विख्याता महापीठेश्वरी परा ।
श्यालिका यदि चे * * * * स्वादनतत्परा ॥४७॥

विशालाक्षीति सा प्रोक्ता सर्वसिद्धिप्रदर्शिका ।
श्यालकस्य तु या कन्या सा यदा व्यभिचारिणी ॥४८॥

कामाख्येति च विज्ञेया सर्वसिद्धिकरा भुवि ।
तत्पत्न्यास्तु[5] गृहे देवि शत * * व[6]धिर्भवेत् ॥४९॥

[7]महाराजेश्वरी ख्याता त्रैलोक्यसिद्धिदायिका ।
वीरपत्नी स्वयं वीरा प्रोक्ता श्रीमन्महेश्वरी ॥५०॥

तत्सुता कुलविद्यानामाद्या श्रीत्रैपुराम्बरा ।
तत्सुता भुवनेशानि शाक्तस्य शाङ्करी कला ॥५१॥

दिव्यस्य विमला प्रोक्ता पूर्णस्य कालिका स्मृता[8] ।
ऊर्ध्वादि सर्वसाम्राज्यमेधान्तं परमेश्वरि ॥ ५२ ॥

विद्याराज्ञीं समारभ्य हंसकाल्यन्तगं[9] भवेत् ।
विलोमेन[10] महेशानि तद्भार्यानाम कीर्तितम् ॥ ५३ ॥

गुरुपत्नीति कामेशी तत्सुता बालिका स्मृता ।
लोपामुद्रा तत्स्नुषा स्याच्चातुर्वर्ण्यक्रमं शृणु ॥ ५४ ॥

द्विजस्त्री यदि चे * * सा प्रोक्ता कुलसुन्दरी ।
त्वरिता सैव सम्प्रोक्ता व्यभिचारपरायणा ॥ ५५ ॥

क्षत्रियस्य तु[11] कन्या च स्नुषा * * दियोगतः ।
कौलिनी माधवी देवि वाराही कामसुन्दरी ॥ ५६ ॥

मोहिनीति क्रमेणैव व्यभिचारक्रमेण च ।
वैश्यस्त्री यदि चे * * व्यभिचारपरायणा[12] ॥ ५७ ॥

1 DU पार्वति । 2 D विभाव्यते । 3 U नित्यमेव । 4 B सा । 5 D तत्कन्या तु । 6 U °वि° । 7 A omits seven lines. 8 B मता । 9 B °कं । 10 D विना मनुं । 11 B क्षत्रिया तस्याः । 12 BD °रोऽथवा ।

स्वप्रावती भोगवती नित्या क्लिन्ना च कुक्कुटी ।
अघोरा[1] सिद्धचामुण्डा[2] सुतास्नुषा[3]क्रमेण च ॥ ९८ ॥

शूद्रपत्नीसुता कुब्जी * * वा व्यभिचारत:[4] ।
अश्वारूढा च धनदा कुब्जिका[5] शबरेश्वरी ॥ ९९ ॥

अनङ्गमाला नीलाख्या क्रमेण परिकीर्त्तिता ।
इति संक्षेपत: प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ६० ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
गवाक्षयोगवर्णनं नाम पञ्चदशः पटलः ।

[1] D आद्या वा । [2] B वामाङ्गा । [3] D स्वषा । [4] U: °चारिणी । [5] B कुलिका ।

## षोडशः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि नवरात्रस्य निर्णयम् ।
नवरात्रे समायाते किं कर्तव्यं च तद्वद ॥ १ ॥

नवरात्रीति[1] किन्नाम कथं जातं किमात्मकम् ।

**श्रीशिव उवाच ।**

नवशक्तिभिः सयुक्तं[2] नवरात्रं तदुच्यते ॥ २ ॥

एकैव देवदेवेशि नवधा परिनिष्ठिता[3] ।
शयनं बोधनाख्यं च नवरात्रं द्विधा भवेत् ॥ ३ ॥
शयनं चैत्रमासीय[4]माश्विनस्थं तु[5] बोधनम् ।
द्वाभ्यां तु समुपोष्यैव[6] सर्वसिद्धिं लभेन्नरः ॥ ४ ॥
निराहारी फलाहारी त्वेकभक्तो दढव्रतः
नक्तभोजी हविष्याशी यथाशक्त्या समाचरेत् ॥ ५ ॥
नवरात्रव्रतासक्तो नव[7]नाथो भवेद्ध्रुवम् ।
गौडकाश्मीरद्रविडमार्गेण त्रिविधं भवेत् ॥ ६ ॥
अमायुक्ता न कर्तव्या प्रतिपत्कालिकार्चने[8] ।
अष्टम्यन्तं समाचर्य ततोऽष्टम्यान्तु होमयेत् ॥ ७ ॥
अर्धरात्रे समायाता मूलविद्याऽपि पार्वति ।
साऽष्टमी सर्वकार्याणां कर्त्री भवति निश्चितम् ॥ ८ ॥
होमपूजादिकं तत्र कुर्याद्यत्नेन पार्वति ॥
द्वितीये[9] दिवसे चेत्स्यात्तदेवोपोषणं चरेत् ॥ ९ ॥
प्रतिपद्युक्तमल्पं वा यदि न स्यात्परेऽहनि ।
अमायुक्तं तदा कुर्यात्त्यक्त्वा षोडशनाडिकाः ॥ १० ॥
घटिकाः षोडश त्याज्या आद्याः प्रतिपदस्तु याः[10] ।
कलशस्थापनं कुर्यात्कल्याणं जायते ध्रुवम्[11] ॥११॥
नवम्यां पारणं कुर्याद्दशम्यां तु विसर्जनम्[12] ।
काश्मीराख्यक्रमं देवि शृणु यत्नेन पार्वति ॥१२॥
नवरात्रं निराहारो होमोऽष्टम्यां समाचरेत् ।
नवम्यां विप्रभोज्यं स्याद्विग्वेधे पारणां चरेत् ॥१३॥
नवरात्रं निराहारो निर्विकल्पो जितेन्द्रियः ।
अष्टमी[13]नवमीसन्धौ होमोऽष्टम्यां[14] समाचरेत् ॥१४॥

1 B °त्रमिति । 2 B °न्तुष्टं । 3 D °निर्वृता । 4 U °सायं । 5 D °ने शृणु
6 D °पास्यैव । 7 D नर° । 8 B °र्चयेत् ; D °नं । 9 DU °या । 10 D °स्तथा ।
11 A वच; D भुवि । 12 B °येत् । 13 B °म्यां । 14 B °मकर्म ।

नवम्यां विप्रभोज्यं स्याद्दशम्यां पारणं[1] चरेत् ।
केरलाख्यः क्रमः प्रोक्तो निर्णयं श्रृणु पार्वति ॥ १५ ॥
तिथिक्षये तथा वृद्धौ यथोक्तेन तु वर्त्मना ।
अष्टमीनवमीप्राप्तौ पूर्ववेधे[2] न दु[3]ष्यति ॥ १६ ॥
अष्टम्यामर्धरात्रौ तु[4] यत्किञ्चित्कुरुते नरः ।
तत्तदक्षय्यमा[5]याति नवदुर्गाप्रयोगतः ॥ १७ ॥
एकोत्तरप्रवृद्धया वा स्तोत्रजापा[6]दिकं चरेत् ।
प्रथमेऽन्हि कृतं यावत्तावत्कुर्याच्च वा सुधीः ॥ १८ ॥
उदयास्तमयं जप्त्वा त्रैलोक्यविजयी भवेत् ।
नवरात्रव्रते स्त्रीणा * * योगो यदा भवेत् ॥ १९ ॥
सैव देवी न सन्देहस्ताम्पूज्य विजयी कलौ ।
ताम्बूलागु[7]रुकस्तूरीदिव्याम्बरविभूषणैः[8] ॥ २० ॥
शक्तीनां नवरात्रादौ ताम्बूलभक्षणं[9] सदा ।
सूर्योदयं समारभ्य पुनः सूर्योदयान्तरम्[10] ॥ २१ ॥
तावज्जप्त्वा निरातङ्कः सर्वसिद्धीश्वरो भवेत् ।
एकासनगतो भूत्वा नवरात्रं तु शाम्भवीम्[11] ॥ २२ ॥
मुद्रामालम्बये[12]द्देवि नवनाथाधिपो भवेत् ।
गृहारामे च कर्तव्या[13] निर्जने पर्वतेऽपि वा ॥ २३ ॥
अधोमुखं वा देवेशि नवरात्रं निरम्बुभुक् ।
स्वमाच्छाद्य मृदा देवि तत्र संस्थापयेद् घटम् ॥ २४ ॥
यवाङ्कुरान्समारोप्य शाम्भवीं मुद्रिकां चरेत् ।
दृढासनी वा शयनी यथादिष्टं समाचरेत् ॥ २५ ॥
कापालिकावधूतानां व्रतमेतन्मयोदितम् ।
आज्ञा भवति[14] देवेशि तदैवोपोषणं चरेत् ॥ २६ ॥
आज्ञा यदि न जायेत तदा ग्रामाधिपस्य च ।
देशाधिपस्य विप्रस्य पूजकस्य स्त्रियस्तथा ॥ २७ ॥
आज्ञां गृहीत्वा देवेशि वरं प्रार्थ्य सुखी भवेत् ।
भक्त[15]प्रीता महा[16]दुर्गा स्वयमाज्ञां प्रयच्छति ॥ २८ ॥
वीरशाक्त[17]विधानेन चण्डदर्प[18]व्रतं चरेत् ।
जिह्वां संप्रोथ्य[19] यत्नेन द्विवेदरसनाङ्गुलम् ॥२९ ॥

[1] B °णां । [2] B °धो । [3] A दृ° । [4] B °त्रे च । [5] B °दक्षीणतां । [6] U पाठा° ।
[7] U °ग° । [8] U °ण: । [9] D °णात् । [10] U °के । [11] D °वि; B °वी ।
[12] AU °लां जपे; D °सनं च य° । [13] B गुहायामहिकायां वा; U परिकार्यं च । [14] A भ्रमति ।
[15] U° क्ति । [16] B समा । [17] U °शक्ति° । [18] A ° न्द्रदर्श° । [19] U °त्रोज्य; A °भ्राह्य ।

[1]पुनरायाति सा जिह्वा तेन सिद्धीश्वरो भवेत् ।
नवरात्रं समासाद्य महा[2]ष्टम्यां निशामुखे ॥ ३० ॥
देवीं सम्पूज्य यत्नेन सङ्कल्पं कामनान्वितम् ।
शिरःपुष्पं कर्तयित्वा पूर्णमध्यकनिष्ठतः ॥ ३१ ॥
यन्त्रमध्ये[3] निवेद्याऽथ शिवतुल्यो भवेद्ध्रुवम् ।
पुनः शिरः समायाति महाचीनवरः[4] स तु ॥ ३२ ॥
अथवाऽन्यप्रकारेण प्रयोगः कथ्यते शृणु ।
नवरात्रं निराहारः श्रद्धाभक्तिसमन्वितः ॥ ३३ ॥
महाष्टम्यामर्धरात्रे अङ्गुष्ठात् मस्तकावधिः ।
मांसान्[5] संकर्ष्य[6] यत्नेन यथोक्तं कुण्डमारभेत् ॥ ३४ ॥
होमयेत्तत्र देवेशि देवी प्रत्यक्षतामियात् ।
देवी[7]देहो भवेत्तद्धि नात्र कार्या विचारणा ॥ ३५ ॥
[8]अथवाऽन्यप्रकारेण प्रयोगः कथ्यते शृणु ।
नवरात्रं निराहारो गुरुभक्तो महाव्रती ॥ ३६ ॥
कुण्डं पुरुषमात्रं तु कृत्वा तत्र विशेषतः ।
पञ्चपल्लवकाष्ठानां वन्हि तत्र समाचरेत् ॥ ३७ ॥
अङ्गुष्ठान्मस्तकान्तं हि स्वदेहं होमयेद्व्रती ।
अग्निशय्यां च वा कृत्वा देवीं पश्यति निश्चितम् ॥३८ ॥
न चापरक्रमेणैव[9] लतागेहप्रवेशनात् ।
भवेत्कल्पलतातुल्यः साधको नात्र संशयः ॥ ३९ ॥
अथवाऽन्यप्रकारेण प्रयोगः कथ्यते शृणु ।
नवरात्रं निराहारो निर्विकल्पो जितेन्द्रियः ॥ ४० ॥
यं कंचिद्वै जपेन्मन्त्रं पत्रं पुष्पं फलं तथा[10]।
मज्जनं दन्तकाष्ठं वा तद्देहे भोजनं च वा ॥ ४१ ॥
जगत्त्रयं वशीकुर्यान्नात्र कार्या विचारणा ।
अथवाऽन्यप्रकारेण प्रयोगः कथ्यते शृणु ॥ ४२ ॥
नवरात्रं निराहारो निर्विकल्पो दृढव्रतः ।
यमुद्दिश्य क्रियां कुर्यात्तमेव वशमानयेत् ॥ ४३ ॥
भोजनं वाऽन[11]येद्देवि यस्य वश्यं[12] समुद्दिशेत्[13]।
कामबीजं साध्यनाम वशीकुर्विति चोच्च[14]रेत् ॥ ४४ ॥

1 B न पु° । 2 B °ध्या° । 3 D °देवे; U °न्त्रे देवे । 4 D °पर: । 5 B मासं । 6 B सकल; A कर्तुं प्र° । 7 B °व° । 8 This line is often shortened in MSS to अथवान्य° । 9 B चोपक्रमणेनैव । 10 A च वा । 11 D पाल° । 12 D यस्य । 13 B समं दि° । 14 B °द्ध° ।

स्वाहामुच्चार्य देवेशि प्रदीप्ते जठरानले ।
होमयेद्यत्नतो[1] देवि तद्गृहं वशमानयेत् ॥ ४५ ॥

अथवाऽन्यप्रकारेण प्रयोगः कथ्यते श्रृणु[2] ।
नवरात्रं निराहारः सत्यवादी जितेन्द्रियः ॥ ४६ ॥

सहदेवी वनं[3] गृह्य (?) नवम्यां परमेश्वरि ।
पूर्वोक्तमनुना देवि पत्रान् वा पिण्डमाहरेत् ॥ ४७ ॥

आजन्मान्तं वशीकुर्यात्तमेव सकुटुम्बकम् ।
अथवाऽन्यप्रकारेण प्रयोगः कथ्यते श्रृणु ॥ ४८ ॥

नवरात्रं मौनयुक्तो वृक्षासनसमन्वितः ।
पारणादिवसे प्राप्ते गोमुखं कारयेत्प्रिये ॥ ४९ ॥

पूर्वोक्तमनुना देवि होमये[4]ज्जठरानले ।
स्वगेहे तत्त्वरात्रेण तद्गेहे दिवसत्रयात् ॥ ५० ॥

आजन्मान्तं वशीकुर्यान्महादेवाधिकं नरम् ।
अथवाऽन्यप्रकारेण प्रयोगः कथ्यते श्रृणु ॥ ५१ ॥

नवरात्रं निराहारो गुरुभक्तो महाव्रती ।
वामाङ्गुष्ठो[5]परि स्थित्वा वेदरात्रं महेश्वरि ॥ ५२ ॥

दक्षाङ्गुष्ठोपरि तथा वेदरात्रं महेश्वरि ।
नवम्यां पारणं[6] कुर्याद्बिल्वपिण्डं प्रदापयेत् ॥ ५३ ॥

जगत्त्रयं वशीकुर्यान्नात्र कार्या विचारणा ।
अथवाऽन्यप्रकारेण प्रयोगः कथ्यते श्रृणु ।
नवरात्रं पर्यटन् वै लोचनासनसं[7]युतः ॥ ५४ ॥

होमं कुर्यान्महाष्टम्यां नवम्यां पारणं चरेत् ।
सर्वस्वदानं कृत्वा तु त्रैलोक्यविजयी भवेत् ॥ ५५ ॥

अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
गोमुत्राशी महेशानि नवरात्रं महेश्वरि ॥ ५६ ॥

यं कञ्चिद्वै जपेन्मन्त्रं नवम्यां होममाचरेत् ।
नवम्यां पारणं कुर्याद्गोमुखेन महेश्वरि ॥ ५७ ॥

देवतादर्शनं भूयाद्रात्रौ स्वप्ने महेश्वरि ।
अथवाऽन्यप्रकारेण प्रयोगः कथ्यते श्रृणु ॥ ५८ ॥

नवरात्रं जितश्वासो मौनव्रतधरः शुचिः ।
निर्द्वन्द्वो[8] निरहङ्कारः सत्यवादी महामतिः ॥ ५९ ॥

1 B °दन्यतो° । 2 D साधनान्तरमुच्यते । 3 B रसं । 4 U °ज्जा° । 5 A वानप्रस्थो° ।
6 B °णां । 7 U मनसा° । 8 A °द्वेषो; D° गर्वो ।

राजाकर्षणकामश्चेद्राजा सप्तदिगुन्मुखः[1] ।
पारणं चेच्छया कुर्याद्रात्रजापी[2] सदा भवेत् ॥ ६० ॥
त्रैलोक्यं वशमायाति नात्र कार्या विचारणा ।
संन्यासी शङ्करः प्रोक्तः [3]कापाली कालभैरवः ॥ ६१ ॥
[4]दिगम्बरो महाकालो ब्रह्मचारी बटुर्भवेत् ।
कृष्णवर्णः स्मृतः कृष्णो गौरो ऋषिवरः स्मृतः ॥ ६२ ॥
रूपगन्धप्रभेदेन नाम प्रोक्तं महेश्वरि ।
रूप[5]जातिप्रभेदेन कुमारीनाम कीर्तयेत् ॥ ६३ ॥
गन्धभेदेन देवेशि दशविद्यादिकं भवेत् ।
एवं ज्ञात्वा[6] पारणं तु कुर्याद्यत्नेन शाम्भवि ॥ ६४ ॥
इति संक्षेपतः प्रोक्तं वाग्भेदं शृणु पार्वति ।
वाक्सिद्धिर्द्विविधा प्रोक्ता शापानुग्रहकारिका ॥ ६५ ॥
महाकवित्वरूपैका द्वितीया परिकीर्तिता ।
[7]शापानुग्रहरूपाया भेदान्सं[8]शृणु पार्वति ॥ ६६ ॥
मन्त्रद्वारा[9] महेशानि स्वप्नद्वारा द्वितीयका ।
प्रत्यक्षता तृतीया स्याच्चतुर्थी कर्णगोचरी ॥ ६७ ॥
आकाशगोचरा बाणसंख्याख्या[10] परिकीर्तिता ।
घटस्था दर्पणस्था च जलमण्डलमध्यगा ॥ ६८ ॥
एवमष्टविधा प्रोक्ता शापानुग्रहणी कला ।
कवित्वाख्या महेशानि तद्भेदान् शृणु यत्नतः ॥ ६९ ॥
अष्टदिक्शतसाहस्रं महाश्रुतिधरी तथा ।
दू[11]तकाव्यं च घटिकाशतकाख्यं[12] महेश्वरि ॥ ७० ॥
वाक्सिद्धिर्गदिता देवि लतारूपं शृणु प्रिये ।
महाचीन[13]द्रुमलतावेष्टितः साधकोत्तमः ॥ ७१ ॥
रात्रौ यदि जपेन्मन्त्रं सैव कल्पलता भवेत् ।
मुखे चन्द्रस्तु सीमन्ते रविः संकीर्तितो बुधैः ॥ ७२ ॥
नेत्रे कामः कर्णयुगे सनत्कुमार एव च ।
अधरेऽमृतवाणीशो जिह्वायां तु सरस्वती ॥ ७३ ॥
कल्पद्रुमः कलियुगे कामधेनुर्ललाटयोः ।
वाञ्छामणिः स्पर्शमणिः * * * परिकीर्तितौ ॥ ७४ ॥

[1] A च दरिद्रता; D सप्तदिङ्मुखः; U वसति दिङ्मुखा । [2] D त्रावाशी । [3] U क° । [4] A omits seven lines. [5] B तपो । [6] B पूर्वजातौ; D° जाते । [7] D omits four lines. [8] U °न् वै । [9] U °रात् । [10] U संरक्ष । [11] D द्रु° । [12] B °ताख्यं तु । [13] U वीर° ।

दक्षिणावर्तकम्बु[1]स्तु कण्ठदेशः प्रकीर्तितः ।
चिन्तामणिर्हृदम्भोजे शेषो वेण्यां प्रतिष्ठति ॥ ७५ ॥

सप्तस्वर्गा मस्तकान्ते सप्तपातालकं नसि ।
पादयोरवताराश्च जङ्घयोर्देवतागणाः ॥ ७६ ॥

नाभौ ब्रह्मा त्रिसूत्रे तु त्रिगुणात्मा सदाशिवः ।
रोमावल्यां महाविष्णु * * ब्रह्माण्डगोलकम् ॥ ७७ ॥

पृष्ठवंशे राक्षसाश्च भाग्यलक्ष्मीर्मुखाम्बुजे ।
दानलक्ष्मीः करयुगे हृदये करुणाभिधा ॥ ७८ ॥

* * युग्मे[2] वीरलक्ष्मीर्देहः सौम्याभिधो भवेत् ।
कुलशास्त्रे[3] कीर्तिलक्ष्मीर्मने खड्गाभिधा भवेत् ॥ ७९ ॥

अनेककोटिब्रह्माण्डं * * मध्ये प्रतिष्ठति ।
तत्त्वाग्निवेदभुवने द्वीपादौ लोक[4]शक्तयः ॥ ८० ॥

वार्तालापे चतुर्वेदाः सर्वशास्त्राणि वै कटौ[5] ।
ब्रह्माण्डगोलके यच्च यत्किञ्चिज्जगतीतले ॥ ८१ ॥

तत्सर्वं शक्तिदेहे तु सर्वदा व्याप्य तिष्ठति ।
[6]शक्ति * * * मारभ्य मोक्षान्तपूर्वगं शिवे ॥ ८२ ॥

सर्वं तिष्ठति देवेशि क्रोधे संहारशक्तयः ।
महामन्त्रास्तथा हासे महाविद्याः कटाक्षयोः ॥ ८३ ॥

वृक्षो[7] जीवो लता जीवप्रदात्री परिकीर्तिता ।
[8]चीनद्रुमलतायास्तु[9] माहात्म्यं परमेश्वरि ॥ ८४ ॥

विचित्रमेतद्देवेशि शृणु यत्नेन साम्प्रतम् ।
अन्य[10]वृक्षस्य मूलञ्च प्रोक्तं भूमितलं भवेत् ॥ ८५ ॥

एतद्वृक्षस्य मूलं तु मध्यभागे विराजते ।
मध्ये भूमि[11]र्महेशानि शाखाश्च परितः स्मृताः ॥ ८६ ॥

अधःशाखस्तूर्द्ध्वशाखो मूलं मध्ये च[12] भूमिका ।
जलं[13] तत्रैव देवेशि प्रयागं तत्र कीर्तिता ॥ ८७ ॥

ब्रह्माण्डगोलं[14] पुष्पं वै फलं बीजं च पार्वति ।
तत्रैव तिष्ठति प्राज्ञे वृक्षश्चलति सर्वदा ॥ ८८ ॥

वाणी वस[15]ति सानन्दा स्वेच्छाचारी निरङ्कुशः ।
परमानन्दरूपा तु लता तस्याः प्रकीर्तिता ॥ ८९ ॥

[1] U °ण्ठ° । [2] AB रम्ये; U सामरस्ये । [3] D° मन्त्रे । [4] U °स्त्रैलोक्य° [5] B करे ।
[6] A omits this line. [7] U °क्षे । [8] B वी° । [9] D °यां तु । [10] D °न्त्य°; B °ल्प° ।
[11] D जाता मध्ये । [12] U न । [13] B ततं । [14] D °लकं । [15] B °द° ।

महानन्दस्वरूपाख्या चिदानन्दस्वरूपिणी ।
[1]पूर्णानन्दस्वरूपा सा महासमरसात्मिका ॥ ९० ॥
ब्रह्मानन्दस्वरूपा सा चिद्घनानन्दरूपिणी ।
लता[2] प्रोक्ता महेशानि संयोगानन्दरूपिणी ॥ ९१ ॥
जगत्त्रयं सैव सूते पञ्चभूतानि सैव च ।
संहारकर्त्री सैव स्यान्मोक्षरूपा तु सा मता ॥ ९२ ॥
ब्रह्मरूपा तु सैव स्यान्मुक्तयस्तु चतुर्विधाः ।
यन्मूलज्ञानमात्रेण सदा तिष्ठन्ति पार्वति ॥ ९३ ॥
सालोक्य[3]श्चैव सारूप्यं सायुज्यं च तृतीयकम् ।
सान्निध्यं च चतुर्थं स्यात्सर्वं शक्तौ प्रतिष्ठति ॥ ९४ ॥
नवशक्ति[4]समायुक्तो नवरात्राभिधो भवेत्[5] ।
कलावर्षं तु चैत्रा[6]ख्यमाश्विनाख्यं तदुत्तर[7]म् ॥ ९५ ॥
द्वाविंशद्वर्षपर्यन्तं कीर्तितं परमेश्वरि ।
द्वात्रिंशद्वर्षपर्यन्तं प्रोक्ता दी[8]पा[9]वली कला ॥ ९६ ॥
तदुत्तरं दारुणा स्यात्सर्वं श्रृणु महेश्वरि ।
वर्षद्वादशपर्यन्तं मोहरात्रिः प्रकीर्तिता ॥ ९७ ॥
संयोगे योगनिद्रा स्यान्महानिद्रा विस[10]र्जने ।
आनन्ददीक्षा देवेशि विपरीता प्रकीर्तिता ॥९८॥
* * लापी[11] सदा भूयात्सिन्दुराङ्कितभालकः ।
* * साहस्रसन्दर्शान्मुक्तो भवति मानवः ॥९९॥
* * दर्शे[12] दिव्य[13]रूपः सिद्धो भवति मानवः ।
भ[14]क्तियुक्तः प्रसन्नात्मा देवतातिथिपूजकः ॥१००॥
अधोभागे वृक्षमूलमन्यवृक्षश्च[15] तिष्ठति ।
ऊर्द्धे शाखास्तत्र पुष्पं फलं तत्र तदुत्तरम् ॥१०१॥
शुष्कं बीजं भवेद्ब्रह्मा आलवालञ्च मूलके[16] ।
जलं तत्र प्रदेयं स्याद्वृक्षकः[17] पुरुषाधमः ॥१०२॥
स्वमूलञ्च न जानाति पररक्षार्थमुद्यतः ।
चीनद्रुमलतायास्तु मूलं चैवालवालकम् ॥१०३॥
पुष्पं फलं तथा बीजमेकत्रैव प्रतिष्ठति ।
स्वरक्षकः स्वयं देवि जलबिन्दु[18]र्वटस्थितः ॥१०४॥

1 D omits two lines. 2 B ततः । 3 B °क° । 4 AD °रात्रि°; U °रुद्र° ।
5 B °भिधां चरेत् । 6 D चन्दा° । 7 U °म° । 8 U द्वी° । 9 A °क्षा° । 10 BD °र्व° ।
11 B° पा । 12 A° र्शो । 13 U देव° । 14 U श° । 15 B °स्य । 16 D °कं ।
17 A °द्रक्षकः । 18 A °र्बुद् ।

ध्वजस्तस्य च नालं स्यादिति संक्षेपतो मतम् ।
सर्वमेकत्र सिद्धश्च वृक्षे भिन्नं महेश्वरि ॥१०५॥

पूर्ववृक्षस्तु निर्जीवः स[1]जीवोऽयं महेश्वरि ।
[2]सर्वसिद्धः परः प्रोक्तो वृक्षोऽप्येवं महेश्वरि ॥१०६॥

इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ॥१०७॥

यज्ज्ञानयोगतो देव त्रैलोक्यविजयी भवेत् ।

श्रीशिव उवाच ।

महाकल्पलतामूले विचिन्त्य स्वेष्टदेवताम्[3] ॥१०८॥

मनोग[4]तः समायोज्य चित्तं कोणगतं चरेत् ।
तद्रूपः सन्महादेवि ध्यानयोगं समभ्यसेत् ॥१०९॥

घटिकापञ्चकध्यानाद् वायुतुल्यो नरो भवेत् ।
घटिकादशकध्यानात्पृथिव्यां जयमाप्नुयात् ॥११०॥

घटीपञ्चदशध्यानाद्वह्निनाऽसौ न दह्यते ।
घटिकाविंशतिध्यानात्सर्वाकर्षणकारकः ॥१११॥

घटिकात्रिंशतिध्यानात्पूर्ण[5]सिद्धिमवाप्नुयात् ।
अहोरात्रेण देवेशि मूलादीन्जपति प्रिये ॥११२॥

दिवसत्रितयध्यानादणिमाद्यष्टकं लभेत्[6] ।
ध्यानयोगं समभ्यस्य कुण्डलीध्यानभाग् भवेत्[7] ॥११३॥

मार्गं विना महेशानि गतिश्चैव कथं भवेत् ।
मार्गदर्शनकार्यार्थं लता प्रोक्ता किमिच्छसि ॥११४॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्य-
महोग्रतारासंवादे नवरात्रनिर्णयो नाम षोडशः[8] पटलः ।

[1] B रा° । [2] U omits this line । [3] B °ताः । [4] B °म° । [5] U °स्वर्ण°; D स्वर्ग° । [6] A भवेत् । [7] A °मारभेत् । [8] B विंशतिः ।

## ॥ सप्तदशः पटलः ॥

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।

**श्रीशिव उवाच ।**

रहस्यमपि देवेशि यन्न कस्यापि कीर्तितम् ॥ १ ॥
तदेव कथ्यते देवि यथावदवधारय ।
ग्रहणं द्विविधं देवि बाह्याभ्यन्तरभेदतः ॥ २ ॥
चन्द्रकोटिनिका[1]याङ्गं[2] भवेदाभ्यन्तराभिधम् ।
भावयोगात् क्रियायोगाद् द्विधा तत्रापि पार्वति ॥ ३ ॥
भावयोगो भवेच्छाक्ते क्रिया योगविधौ स्मृता[3] ।
बाह्यं शृणु महेशानि सूर्यचन्द्रक्रमात् द्विधा ॥ ४ ॥
सूर्ये भेदत्रयं देवि चन्द्रे भेदत्रयं तथा ।
सूर्योपरागो ग्रस्तास्तस्तथा ग्रस्तोदयः स्मृतः ॥ ५ ॥
चन्द्रेऽपि भेदत्रितयं शाक्तावपि त्रिधा त्रिधा[4] ।
सार्धद्वयाङ्गुलोत्तरं ग्रस्तास्तत्वं प्रकीर्तितम् ॥ ६ ॥
[5]स्पर्शयुक्ते स्फुटत्वं च यस्मिन्काले प्रजायते ।
स कालोऽक्षयरूपेण पुरश्चरणकर्मणि ॥ ७ ॥
चन्द्रसूर्यग्रहे देवि ग्रस्ता[6]वधि विमुक्तितः[7]
यावत्सङ्ख्यं मनुं जप्त्वा तावद्धोमादिकं चरेत् ॥ ८ ॥
पञ्चाङ्गं तावदेवस्याज्जपहोमौ समौ स्मृतौ ।
सिद्धेश्वरीमतं प्रोक्तं सर्वसिद्धिप्रदायकम् ॥ ९ ॥
अथवाऽन्य[8]प्रकारेण पुरश्चरणमुच्यते ।
सूर्यचन्द्रोपरागे तु नाभिमात्रो[9]दके स्थितः ॥ १० ॥
ग्रासाद्विमुक्तिपर्यन्तं जपं कुर्यान्महेश्वरि ।
तद्दशांशं होमयेद्वि तद्दशांशैस्त्रयं क्रमात् ॥११॥
दृष्टस्पर्शपुरश्चर्य्यां दृष्टमुक्तौ समापनम्[10] ।
अनेन क्रमयोगेन सर्वसिद्धीश्वरो भवेत् ॥१२॥
चन्द्रसूर्योपरागे तु नाभिमात्रोदके स्थितः ।
नद्यां समुद्रगामिन्यां तडागे सङ्गमेऽपि वा ॥१३॥
एकाङ्गुष्ठोपरि स्थित्वा ग्रासावधि विमुक्तितः ।
पञ्चाङ्गां चाथ वाष्टाङ्गां दशाङ्गाख्यां[11] पुरस्क्रियाम् ॥१४॥

[1] B कुटिलिका°; U चान्द्री कुण्डलिका । [2] U °योगात् । [3] U °तः । [4] A शृणु । [5] BD omit two lines. [6] D ग्रासा° । [7] B °दः । [8] This line is shortened in MSS to अथवान्य° । [9] U° मन्त्रो° । [10] BD omit this line. [11] D °द्या ।

कुर्याद्यत्नेन देवेशि सर्वसिद्धीश्वरो भवेत् ।
शास्त्रदृष्टया समालोक्य स्नानदानादिकाः क्रियाः ॥१५॥
कर्तव्याश्च प्रयत्नेन नात्र कार्या विचारणा ।
शास्त्रदर्शस्तु सन्दर्शः[1] प्रत्यक्षे पूर्णरूपता ॥१६॥
सूर्यग्रहणकालाद्धि नान्यः कालः प्रशस्यते ।
म[2]लापकर्षणं स्नानं कृत्वा पूर्वं विशालधीः ॥१७॥
मुच्यमाने भवेद्दानं ग्रस्ते[3] स्नानं प्रकीर्तितम्[4] ।
स्नानं मन्त्रोदितं कृत्वा तर्पणं त्वधिकारतः ॥ १८ ॥
सन्ध्यां तात्कालिकीं कृत्वा विमोक्षान्तं[5] जपं चरेत् ।
तावज्जप्त्वा निरातङ्कः सर्वसिद्धीश्वरो भवेत् ॥ १९ ॥
ऋतुस्नातां स्त्रियं ज्ञात्वा सूर्यचन्द्रग्रहान्तरे ।
प्रतिपार्वणमासाद्य पिण्डं तस्यै प्रदापयेत् ॥ २० ॥
वन्ध्यापुत्रप्रदो योगः सर्वसिद्धिप्रदायकः ।
सूर्योपरागे देवेशि स्नात्वा पूजां समाचरेत् ॥ २१ ॥
साङ्गां सावरणां पूज्य सबल्यन्तं महेश्वरि ।
कुमारीपूजनं कृत्वा सर्वसिद्धीश्वरो भवेत् ॥ २२ ॥
सूर्योपरागे संप्राप्ते स्नात्वा पूज्य[6] महेश्वरि ।
तुला[7]ब्रह्माण्डदानादि यथाशक्त्या समाचरेत् ॥ २३ ॥
देवतायै तन्निवेद्य सर्वसिद्धीश्वरो भवेत् ।
चन्द्रसूर्यग्रहे देवि शतसङ्ख्यां कुमारिकाम् ॥ २४ ॥
पूज्य[8] सिद्धीश्वरो भूयान्नात्र कार्या विचारणा ।
सूर्यग्रहे महेशानि काम्यहोमं[9] चरन् शिवे ॥ २५ ॥
तर्पणं कुरुते यस्तु तस्य श्रीः सर्वतोमुखी ।
मार्जनं तु प्रकर्तव्यं सर्वदुःखप्रशान्तये ॥ २६ ॥
सूर्यग्रहे समायाते परिधिर्यदि वै भवेत् ।
पारिभद्राभिधो योगः सर्वसाम्राज्यदायकः ॥ २७ ॥
अल्प[10]दृष्टे दिशा देवि मध्यग्रासे महेश्वरि ।
[11]मेघाच्छन्ने मुक्तिकाले स्नानदानादिकं चरेत् ॥ २८ ॥
जपमा[12]त्रं विधातव्यं मध्यग्रासे तु सूर्यवत् ।
तारापिण्ड[13]ग्रहे प्राप्ते तथा सूर्यग्रहेऽपि च ॥ २९ ॥
जपादिकं विधातव्यं शक्तिपूजां ततश्चरेत् ।
सर्वसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ॥ ३० ॥

[1] U °संस्पर्शः । [2] U मा° । [3] U ग्रासे । [4] B विधीयते । [5] B °क्षो तज्° । [6] A °ज्या । [7] U °ल्य° । [8] B °जा । [9] U °मा° । [10] U °न्त्य°; A यं यं । [11] B omits two lines. [12] A पा° । [13] D तथापीन्दु° ।

तारापिण्डोपरागे तु गुरुं सम्पूज्य देववत् ।
सन्तोष्य तद्वरो ग्राह्यः सर्वसिद्धीश्वरो भवेत् ॥ ३१ ॥
तारापिण्डग्रहे प्राप्ते शवमानीय साधकः ।
शवासने[1] जपेद्देवि ग्रासानुग्रासतः शिवे ॥ ३२ ॥
सर्वसिद्धीश्वरो भूयात्त[2]दन्ते शिवतां व्रजेत् ।
सूर्योपरागे सम्प्राप्ते शुचिः पूर्वमुपोषितः ॥ ३३ ॥
ग्रासाद्विमुक्तिपर्यन्तं देहमांसानि होमयेत् ।
सर्वसिद्धीश्वरो भूयाद्देवतां पश्यति प्रिये ॥ ३४ ॥
सूर्यग्रहः शिवः प्रोक्तश्चन्द्राख्यः शक्तिरेव च ।
सूर्यग्रहे शक्तिदीक्षां पशुदीक्षां न[3] कारयेत् ॥ ३५ ॥
चन्द्रग्रहे विष्णुदीक्षां पाञ्चरात्रं न कारयेत् ।
चन्द्रसूर्यग्रहे दीक्षा सर्वदीक्षा शुभा मता ॥ ३६ ॥
चन्द्रग्रहे शक्तिदीक्षा सर्वदीक्षोत्तमोत्तमा ।
न वारतिथिऋक्षादि न मासनियमस्तथा ॥ ३७ ॥
न योगकरणं वापि न विचारं समाचरेत् ।
दमनो[4]त्सवे च श्रावण्यां ग्रहणं यदि जायते ॥ ३८ ॥
समन्त्रश्च पुरश्चर्याविहीनोऽपि प्रसिद्ध्यति ।
चन्द्रसूर्यग्रहकालात् नान्यः कालः प्रशस्यते ॥ ३९ ॥
चन्द्रग्रहे पुरश्चर्या सर्वसिद्धिकरी मता ।
घटिकार्ध[5]पूर्वमेव ग्रहणं परिवर्तते ॥ ४० ॥
तदा स्नानं विधातव्यं ग्रस्ते[6] सङ्कल्पमाचरेत् ।
विमोक्षान्तं जपं कुर्यात्सम्यग्ज्ञाते समापनम् ॥४१॥
सूर्याच्छादनमायाते[7] घटिकार्द्धं विचारयेत् ।
ततः समापनं कुर्यात्सिद्धो मन्त्रो भवेद्ध्रुवम् ॥ ४२ ॥
प्रमा[8]दात् गमि[9]ते योगे वसुविप्रान् प्रभोजयेत् ।
यद्यदङ्गं विहीयेत तत्साङ्गे द्विजभोजनम् ॥ ४३ ॥
दशांशं हवनं कुर्यात्तर्पणं तद्दशांशतः ।
मार्जनं तद्दशांशेन दशांशेनाभिषेचनम् ॥४४॥
[10]तद्दशांशं विप्रभोज्यं देवरूपो नरो भवेत् ।
यद्यदङ्गं विहीयेत तत्संख्याद्विगुणो जपः ॥४५॥
द्वित्रिवेदबाणभेदैर्विप्रादीनां क्रमेण च[11] ।
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते[12] ॥ ४६ ॥

1 U °भावे । 2 B °त्वा त° । 3 U च । 4 AD मदनो° । 5 D °र्धं । 6 D प्राप्ते ।
7 D °च्छन्ने अनाज्ञाते । 8 D °सा° । 9 D मिलि° । 10 B omits three lines.
11 U °भात् स्मृतः । 12 D °मीष्यते ।

चन्द्रसूर्योपरागे तु मेरुसाधनमाचरेत् ।
दुष्टमन्त्रोऽपि देवेशि क्रमेण सिध्यति ध्रुवम् ॥४७॥

अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
सूर्योपरागे देवेशि शुद्धान्तःकरणो यती ॥ ४८ ॥

स्नात्वा यथोक्तविधिना सम्पूज्य जगदम्बिकाम् ।
शिरःपुष्पं कर्त्तयित्वा देवतायै निवेदयेत् ॥ ४९ ॥

देवतां पश्यति शिवे वरदानपरां ध्रुवम् ।
सूर्योपरागे सम्प्राप्ते स्नात्वा प्रोक्तेन वर्त्मना ॥ ९० ॥

शक्तिमानीय तद्गात्रे न्यासजालं प्रविन्यसेत् ।

मद्यैर्मांसैस्तथा मत्स्यै[1] * * * * * मृतैरपि[2] ॥ ९१ ॥
देवतां तत्र सम्पूज्य साङ्गां सावरणां शिवे ।

तत्र जिह्वां प्रदत्त्वा तु जपा[3] त्रैकाल्य[4]विद्भवेत् ॥ ९२ ॥
अतीतानागतज्ञानं[5] वर्तमानं च पश्यति ।

सूर्यग्रहे महेशानि * * मानीय सादरम् ॥ ९३ ॥
* * * * परिस्थाप्य जपेद्यत्नेन पार्वति ।

त्रैलोक्यविजयी भूयान्नात्र कार्या विचारणा ॥ ९४ ॥
ग्रस्तोदयविधिर्देवि ग्रस्तास्तनिर्णयस्तथा ।

पूर्वमेव मया प्रोक्तः शक्तियोगक्रमे[6] शिवे ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ९९ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे ग्रहणलक्षणं नाम सप्तदशः[7] पटलः ।

[1] D होमैः । [2] U °तेन च । [3] U ° प्त्वा । [4] D °लोक्य° । [5] AB °ने ।
[6] D मात् । [7] B एकविंशतिः ।

## अष्टादशः पटलः ।

श्रीदेव्युवाच ।

पूजाचिह्नविधिं देव श्रोतुमिच्छामि साम्प्रतम् ।

श्रीशिव उवाच ।

यदाशाभिमुखो भूत्वा चक्रराजं समुद्धरेत् ॥ १ ॥

सैव प्राची महेशानि ताराछिन्नाविधौ स्मृता ।
पूज्यपूजकयोर्मध्ये प्राची काली[1]विधौ स्मृता ॥ २ ॥

पुरन्दरमुखो मन्त्री पूजयेज्जगदम्बिकाम् ।
देवीनामक्रमेणैव गौडे ताराविधौ स्मृता ॥ ३ ॥

स्ववाम[2]कालीदक्षाख्य[3]क्रमेण कालिकाविधौ ।
देवीपृष्ठदला[4]रभ्य गौडकाश्मीरयोर्विधिः[5] ॥ ४ ॥
तदै[6]वार्घ्यक्रिया देवि स्वदेवीक्रमतो द्विधा ।
अर्घ्ये[7]श्च पीठपूजा च सिद्धासु कल्पितासु च ॥ ५ ॥

दिक्षु[8] कार्या केरलाख्यकाश्मीरक्रमयोगतः ।
अङ्गक्रमो महेशानि स्वस्वदेवीक्रमेण च ॥ ६ ॥

षट्कोणेषु[9] षडङ्गानि वह्नीशादिक्रमेण वा ।
बीजानां[10] लेखनं देवि तथैव त्रिविधं म[11]तम् ॥ ७ ॥
प्रसिद्धदि[12]क्क्रमेणैव केरला[13]ख्यक्रमो भवेत् ।
[14]बीजलेखो गौडमार्गे कल्पितासु च दिक्षु च ॥ ८ ॥
प्रसिद्धदिक्षु काश्मीरे पीठ[15]पूजनमीरितम् ।
स्वसाम्मुख्यक्रमेणैव देवतां पूजयेत् सदा ॥ ९ ॥
आग्नेय्यादिक्रमेणैव गौडे बलिचतुष्टयम् ।
उग्रविद्याविधौ देवि तिर्यग्भूत्वा प्रपूजयेत् ॥ १० ॥
गोपनीयं गोपनीयं गोपनीयं पुनः पुनः ।
रहस्यातिरहस्यं च रहस्यातिरहस्यकम् ॥ ११ ॥
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ॥ १२ ॥
यन्न कस्य त्वया प्रोक्तं तदेव कथ्यतां शिव ।

[1] B omits °विधौ......°दक्षाख्य° in the 4th line. [2] D °मे । [3] U °ख्यं । [4] D प्रसूरणा° । [5] D °धौ । [6] B °दे° । [7] B °र्घ्या° । [8] D दीक्षा । [9] D °केन च । [10] B °नि । [11] B स्मृ° । [12] AU °द्धादि° । [13] AB कोला° । [14] B omits three lines. [15] U पूज्य° ।

श्रीशिव उवाच ।

रहस्यातिरहस्यं च रहस्यातिरहस्यकम् ॥ १३ ॥

कथ्यते देवदेवेशि तत्र सावहिता भव ।
अन्तरालं भवेत्प्राची पूज्यपूजकयोरपि ॥ १४ ॥

इयं छिन्नाविधौ प्राची विरूपाक्षस्य सम्मतम् ।
देवपूजकयोरन्तः प्राची[1] दिक् भैरवे[2] मता ॥ १५ ॥
पूज्यपूजकयोर्मध्ये प्राची सैव[3] तु केरले[4] ।
तद्दक्षिणं दक्षिणं स्यात् देवसाम्मुख्य[5]मार्गतः ॥ १६ ॥

स्वदक्षिणक्रमेणैव भैरवे प्राग्विनिर्णयः ।

यदाशाभिमुखो भूत्वा चक्रराजं समालिखेत् ॥ १७ ॥

सैव प्राची गौड़मार्गे चीनमार्गक्रमे भवेत् ।
पुरन्दरमुखो मन्त्री त्रिपुरा मु[6]क्तमालिनी ॥ १८ ॥

देवीपृष्ठे तदा प्राची प्रतीची त्रिपुरा मता[7] ।
भानुर्यत्र[8] सदोदेति[9] सैव प्राचीति वैदिके[10] ॥ १९ ॥
अपरा सूर्य[11]सिद्धान्ते परिक्रमणमार्गतः ।
स्वसम्मुखे भवेत्प्राची देवीपृष्ठं तु पश्चिमम् ॥ २० ॥

सव्यं तु दक्षिणं विद्यात् दक्षिणं सव्यमेव च ।
इति प्राचीक्रमः प्रोक्तः समताष्टक[12]मार्गतः ॥ २१ ॥
तत्र नाथक्रमेणैव गुरुपंक्तिं प्रपूजयेत् ।
[13]देवतादक्षिणे देवि गुरुपंक्तिं प्रपूजयेत् ॥ २२ ॥

देवीमध्य[14]त्रिकोणे तु गौड़े तु गुढपूजनम् ।
दक्षवामपृष्ठपंक्तिक्रमेण गुरुपूजनम् ॥ २३ ॥
चैतन्याख्यमतं देवि त्रिरेखानन्दसम्मतिः[15] ।
त्रिपंक्तिक्रममार्गेण नाथ[16]मार्गे प्रपूजनम्[17] ॥ २४ ॥

दक्षाङ्गं पुरुषश्रेष्ठं वामाङ्गं चण्डिकामनौ[18] ।
अत एव महेशानि वामहस्ते जपस्य च ॥ २५ ॥
समर्पणं निगदितं सर्वसिद्धिप्रदायकम् ।
दक्षहस्ते तु पुरुषं जपान्तं तु समर्पणम् ॥ २६ ॥
गुरुपंक्तिर्वामभागे कल्पितप्राक्क्रमेण[19] वै ।
गुरुपूजाक्रमः प्रोक्तस्त्वर्घ्यद्वयक्रमं शृणु ॥ २७ ॥

[1] B °च्या । [2] D °वो । [3] D नैव । [4] U °ला । [5] U °सन्मुख° । [6] A सू° । [7] A पुरः । [8] B °यन्त्रं । [9] A सदा देवि । [10] U °का । [11] B पूज्य° । [12] D सम्मतस्त्वेक° । [13] B omits this line. [14] A °मष्ट°; U वाम° । [15] D °तम् । [16] B °ग° । [17] U °जयेत् । [18] B °नोः । [19] B प्रक्रमेण ।

सामान्यार्घ्यविशेषार्घ्यौ द्वौ प्रोक्तौ यत्र पार्वति ।
चतुष्पात्राणि सामान्ये घटस्त्वावश्यको मतः ॥ २८ ॥

यथा त्रिकोणं देवेशि विन्दुना वर्जितं भवेत् ।
यथा[1] घटं विना देवि पूजा सर्वत्र वर्जिता ॥ २९ ॥

यथा दलं केशरेण वियुक्तं कर्मवर्जितम् ।
तथा त्रिकोणं देवेशि बिन्दुना वर्जितं भवेत् ॥ ३० ॥

बिन्दुहीनं तु यद्यन्त्रं तद्यन्त्रं शववद्भवेत् ।
बिन्दु[2]युक्तं तु यद्यन्त्रं तद्यन्त्रं सिद्धिदायकम् ॥ ३१ ॥

तथैवाष्टदलस्योर्ध्वे वृत्तं यत्नेन कारयेत् ।
वृत्तं विना नाष्टदलं गर्भभूषणभेदतः ॥ ३२ ॥

पात्रद्वये[3] महेशानि निर्णयं यत्नतः शृणु ।
प्रोक्षणीपाद्यपात्रं च तथाचमनकं शिवे ॥ ३३ ॥

अर्घ्यश्च मधुपर्कश्च तथा पञ्चामृतं शिवे ।
स्नानीयादि महेशानि सामान्यार्घ्येण[4] वै भवेत् ॥ ३४ ॥

शिवपूजामपि शिवे सामान्यार्घ्येण केरले[5] ।
भैरवाणां प्रपूजा च सामान्यार्घ्येण गौडयोः ॥ ३५ ॥

विशेषार्घ्ये महेशानि गुरुपात्रं च[6] भैरवे ।
वीरपात्रं शक्तिपात्रं[7] वीरपात्रं च योगिनाम् ॥ ३६ ॥

बलिपात्रं तथा देवि श्रीपात्रेण प्रकल्पयेत् ।
केरल[8]क्रम आदिष्टः[9] श्रीसदाशिवसम्मतः ॥ ३७ ॥

बलिपात्रं वीरशक्ति योगिनीपूर्वपात्रकम्[10] ।
विरूपाक्षमते प्रोक्तं वीरभद्रमतं शृणु ॥ ३८ ॥

सामान्यार्घ्यश्च श्रीपात्रमेकमन्यन्महेश्वरि ।
सामान्यार्घ्येण संसिद्धि[11]विशेषार्घ्येण पूजनम् ॥३९॥

तृतीयेन महेशानि पाद्यादीनि प्रकल्पयेत् ।
पञ्चाङ्गं कल्पयेद्देवि वीरभद्रमते शिवे ॥४०॥

बटुकस्य मते देवि सामान्या प्रोक्षणी भवेत् ।
देवीपूजा विशेषार्घ्ये सर्वं तार्त्तीयतश्चरेत् ॥४१॥

गुरुभैरववीरादिशक्तिश्च योगिनी तथा ।
बलिपाद्यादि सर्वत्र तार्तीयेन समाचरेत् ॥४२॥

बटुकस्य मतं प्रोक्तमानन्दस्य मतं शृणु ।
सामान्ये वीरपात्रं च शक्तिपात्रं विशेषके ॥४३॥

1 B तथा । 2 DU बीज° । 3 U °रूपे । 4 B न । 5 U न कारयेत् । 6 U °पंक्ति । 7 U omits वीर......देवि in the next line. 8 A° ले । 9 U अष्टौ स्यात् । 10 B °के । 11 D सिद्धिश्च ।

गुरुपात्रादिस्नानान्तं पूजनं परिकीर्तितम् ।
सामान्यार्घ्ये योगिनी च बलिपात्रं विशेषके ॥ ४४ ॥

करालस्य[1] मतं प्रोक्तं विकराल[2]मतं शृणु ।
योगिनी तु विशेषार्घ्ये सामान्ये बलि[3]पात्रकम् ॥४५॥

गुर्वादिस्नानपात्रान्तं पूर्ववत्परमेश्वरि ।
विकराल[4]मतं प्रोक्तं महादेवमतं शृणु ॥ ४६ ॥

गुरुपात्रं विशेषार्घ्यं सामान्ये भैरवो भवेत् ।
अन्यानि पूर्ववद्देवि दक्षिणाख्य[5]मतं शृणु ॥ ४७ ॥

विशेषार्घ्ये भैरवो हि सामान्यार्घ्ये गुरुर्भवेत् ।
अन्यानि पूर्ववद्देवि बटवासिमतं शृणु ॥ ४८ ॥

सर्वं विशेषतः कुर्यात्सामान्येन[6] तु[7] संस्क्रियाम् ।
मधुपर्कं विशेषेण पूजनादि यथाक्रमात् ॥ ४९ ॥

सर्वं सामान्यतः कुर्याद् गौडोक्तं च[8] क्रमं शृणु ।
सामान्ये वस्तुद्वारार्घ्यं विशेषे तु विशेषता ॥ ५० ॥

सामान्यार्घ्ये तु सामान्यं श्रीपात्रमेकमेव वा ।
तथापि देवदेवेशि घटपात्रम[9]वश्यकम् ॥ ५१ ॥

कपालं यदि वा देवि[10] तदैकपात्रमाचरेत् ।
महावीरस्य पात्राणि कपालानि महेश्वरि ॥ ५२ ॥

तदभावे एकपात्रं कपाले सर्वपात्रता ।
कपालपात्रे देवेशि कापालीसिद्धिरस्ति च ॥ ५३ ॥

यद्यद्वाञ्छति[11] कामानि गुटिकाञ्जनसिद्धयः ।
सिद्धद्रव्यं कामगतिर्मनोरथमयी कला ॥ ५४ ॥

वाञ्छाभोगो नव्यसृष्टिकरणं स्पर्श[12]रत्नकम् ।
चिन्तामणिः कामकला[13] यत्पात्रे सर्वमेव च ॥ ५५ ॥

कापालिनी त्वियं सिद्धिः कपालपात्रगोचरा ।
कापालिकानां चीनानां[14] कपालपात्रमीरितम् ॥ ५६ ॥

त्रिविधं तत्कपालञ्च विश्वामित्रक्रमेण च ।
नारिकेलं तथा तुम्बी कपालं च क[15]पालकम् ॥ ५७ ॥

त्रिविधं च कपालं त्रिसम्प्रदायक्रमेण च ।
पात्रमेकं[16] समासाद्य खण्डत्रितयभेदतः ॥ ५८ ॥

[1] B विकराल° । [2] B करालस्य । [3] U चाग्र° । [4] D करालस्य । [5] A बटवासि° ।
[6] U °न्यार्घ्ये । [7] A सु° । [8] A गौडार्चन°; U गौडमत° । [9] B मत्या° । [10] U देवेशि ।
[11] B वा धृति° । [12] U कर्णस्पर्शं तु । [13] B °लौ । [14] U वीराणां । [15] A चक्र° ।
[16] B °त्रयं ।

चतुरङ्गुलमुच्छ्रायमायामे द्वादशाङ्गुलम्[1] ।
[2]अष्टाङ्गुलसविस्तारि द्रोण[3]ग्राहिजलं यथा ॥ ५९ ॥

तथा पात्रं पूर्णदीक्षा सूर्यार्घ्ये[4] विप्रकीर्तितम् ।
विशेषार्घ्ये महेशानि आयामे वसुसंज्ञ[5]कम् ॥ ६० ॥

षडङ्गुलं च विस्तीर्णमुत्तानं नौसमाकृतिम् ।
अथवा देवदेवेशि पात्रं च वर्तुलाकृतिम्[6] ॥ ६१ ॥

अश्वत्थपत्राकारं वा कुतपाकारमेव वा ।
त्रिकोणाकारपात्रं च त्रित्रियोनि[7]समन्वितम् ॥ ६२ ॥

मध्यबिन्दुयुतं पात्रं ध्वजचिह्न[8]समन्वितम् ।
अथवा तु **कारं ध्वजबिन्दुसकेसरम्[9] ॥ ६३ ॥

एवं[10] पात्रं समानीय महाचीने[11]श्वरीं यजेत् ।
प्रसिद्धदिक्षु देवेशि पीठ[12]पूजनमाचरेत् ॥ ६४ ॥

कल्पिते वा महेशानि साङ्गां सम्पूजयेद्व्रती[13] ।
पीठपूजां समाचर्य पञ्चोपचारतोऽर्चयेत् ॥ ६५ ॥

सुधासिन्धौ तु संस्थाप्य पूज्य सिंहासनेऽर्चयेत् ।
तत्त्व[14]पीठं भवेदेकं पीठं ज्ञात्वा महेश्वरि ॥ ६६ ॥

अथवा देवदेवेशि अक्षतान्स्थाप्य पूजयेत् ।
सम्पूज्य पीठपूजां च[15] ततः सिंहासनेऽर्चयेत् ॥ ६७ ॥

[16]मुख्यं तु देवदेवेशि यन्त्र[17]पीठं समर्चयेत् ।
तद्यंत्र[18]सिंहपीठे तु सपीठं स्थापयेच्छिवे ॥ ६८ ॥

स्नानं च[19] पीठकस्याऽथ[20] चावृत्तिदेवतात्ववत्[21]।
पीठावृत्तिश्च वा कार्या[22] सर्वसम्मत[23]मीरितम् ॥ ६९ ॥

तत्र पीठ महायन्त्रं स्वेष्टदेवात्मकं महत् ।
त्रिकोणे[24] वृत्तमात्रं तु तारा[25]यन्त्रमिदं भवेत् ॥ ७० ॥

जीव[26]चक्रे त्विदं[27] यन्त्रं भाव्यं लेख्यं[28] महेश्वरि ।
मध्ये स्पष्टो महाबिन्दुः सदाशिवमयो ध्रुवम् ॥ ७१ ॥

तत्र स्त्रीवेषमासाद्य जपं कुर्य्यादनन्यधीः ।
तत्र स्त्रीवेषधारी स्यात्सिन्दूराङ्कितभालकः ॥ ७२ ॥

1 B °ले । 2 U omits two lines. 3 B °णा ।: 4 A °र्घ्योऽपि । 5 B °ज्ञि° । 6 B °लीकृतं । 7 D योनिना । 8 B °चारु° । 9 D महेश्वरं । 10 B सर्वं । 11 A °वीरे° । 12 A वीर°; B पिण्ड° । 13 U °च्च तां । 14 D °त्र । 15 A °जाद्यं । 16 U omits this line. 17 B °न्त्रे । 18 U °त्पात्रं । 19 D तु । 20 A °करस्यार्थं । 21 D °वित् । 22 U कुर्यात् । 23 U °मेतत् स° । 24 DU °णं । 25 D राज° । 26 A बीज° । 27 A देव° । 28 B तेषां; A तस्य; U स्वेष्टं ।

लम्बी[1]कञ्चुकभूषाढ्यश्चीनाचारो[2] यथार्थवत् ।
स्त्रीवेषं वा समासाद्य[3] कुचकज्ज[4]लकेशयुक् ॥ ७३ ॥

कङ्कणं तिलकं हारं स्त्रीवेषेण[5] प्रपूजयेत् ।
पट्टकूलं दुकूलं वा काश्मीरं वरचीरकम् ॥ ७४ ॥

वस्त्रं वा रक्तं श्वेतं वा पीतं स्वर्णादिभूषितम् ।
मुक्तकेशो दिशावासः सिन्दूरतिलका[6]न्वितः ॥ ७५ ॥

संविद्भक्षणमासाद्य सर्वदेवान् प्रपूजयेत् ।
* * *प्रासनेनाथ यन्त्रमब्जं सुकर्णिकम्[7] ॥ ७६ ॥

गोपयेत्तु कुलद्रव्यं कुलगन्धाष्टकं शिवे ।
अलिनालो[8]चनं कुर्य्यादलिना लेपनं च वा ॥ ७७ ॥

अलिलाक्षारसालिश्च सीधुकादम्बरी मता ।
एवं यन्त्रं च वा कृत्वा ध्यात्वावृत्ति[9]मथार्चयेत् ॥ ७८ ॥

स्थानस्थाः फलदा मन्त्रा ध्या[10]नस्थाः फलदायकाः ।
स्थानध्यानपरिभ्रष्टास्ते मन्त्राः फलदा नहि ॥ ७९ ॥

कुण्डल्यु[11]स्थानमासाद्य तारारूपां परां कलाम् ।
हृत्पद्मे[12]ऽथ समानीय कुण्डलीं स्वेष्टदेवताम् ॥ ८० ॥

स्वमन्त्रं च महेशानि हृत्पद्मे[13] ध्यानयोगतः ।
ध्यायेद्देवेशि ध्यानस्थं[14] कीर्त्तितं परमेश्वरि ॥ ८१ ॥

ध्यानस्थां देवतां कृत्वा स्था[15]नस्थां तां समाचरेत् ।
तां देवतां सहस्रा[16]रे परशम्भो[17]र्नियोजयेत् ॥ ८२ ॥

सामरस्यं समासाद्य स्थानध्याने समभ्यसेत्[18] ।
ध्यानस्थानासनी[19] भूत्वा ततो यजनमाचरेत् ॥ ८३ ॥

साङ्गां सावरणां देवीमासादन[20]समन्विताम् ।
ध्यात्वा बल्यन्त[21]माचर्य्य सर्वसिद्धीश्वरो भवेत् ॥ ८४ ॥

ततः[22] पूजोत्तरं देवि बलिदानं च केरले ।
पीठपूजोत्तरं देवि काश्मीरे बलिदानकम् ॥ ८५ ॥

पंचोपचारोत्तरणे[23] गौडे तु बलिदानकम् ।
पात्रो[24]त्तरं तु श्रीगौडे बलिदानं प्रकीर्त्तितम् ॥ ८६ ॥

1 A नस्त्री; U नस्त्रां° । 2 AU वीराचारं । 3 A °नीय । 4 A कुण्ड° । 5 A सस्त्रीवेषे । 6 B कज्जला° । 7 U कुसुमकर्णिकं । 8 D °मो° 9 A °वृक्ष° । 10 स्था° । 11 D °मु° । 12 D °श्वे° । 13 A तपश्च । 14 A °स्थे । 15 DU ध्या° । 16 D °द्दशा° । 17 परामष्टौ । 18 D समाचरेत् । 19 D °लिनी । 20 B पात्रासादन°; D पात्रस्थान° । 21 U तर्पण°; D तत्कल्प° । 22 B अन्तः । 23 पंचपंचोत्तरे देवि । 24 D प्रीतो° ।

तत्रैवान्ते होमकर्म समासाद्य प्रहोमयेत् ।
तत्तत्[1]कामनया[2] देवि[3] तथा कुण्डानि कारयेत् ॥ ८७ ॥

सयोनिमेखलाटङ्क[4]भूषितं सूत्रलक्षितम् ।
कुण्डं कृत्वा होमयेद्धि सर्वसिद्ध्यर्थमेव च ॥ ८८ ॥

एकत्रिपञ्चनव वा[5] सप्तैकादश वा प्रिये ।
मेखला होमकुण्डे तु[6] कीर्तिता परमेश्वरि ॥ ८९ ॥

तथान्तर्मेखला वापि * * * न कारयेत् ।
दलेऽष्ट[7]दलकं नो हि संक्षेपात्परिकीर्तितम् ॥ ९० ॥

होमे तु काम्यकर्मार्थे चत्वरे[8] वा[9] महेश्वरि ।
स्थण्डिले होमयेद्देवि सर्वकुण्डाग्निरुत्तमा ॥ ९१ ॥

स्थण्डिले सर्वकुण्डानि दिग्विभागक्रमेण च ।
कव[10]लं च क्रमेणापि होमयेत्परमेश्वरि ॥ ९२ ॥

कवचाद्यं[11] महेशानि पल्लवी[12]कुण्डमेव वा ।
स्वाहान्तः सर्वकार्यार्थे फडन्तः क्रूरकर्मणि ॥ ९३ ॥

नमोऽन्ते मारणे देवि पात्राख्यं कुण्डमेव वा ।
कृत्वा च होमयेद्देवि सर्वसिद्धीश्वरो भवेत् ॥ ९४ ॥

विजयापत्रहोमेन त्रैलोक्यं जयति क्षणात्[13] ।
बीजानि होमयेद्देवि त्रैलोक्याकर्षणाय च[14] ॥ ९५ ॥

वश्यार्थे दर्शनार्थे तु[15] पुष्पाणि होमयेच्छिवे ।
श्वेतपुष्पे[16]न वाक्सिद्धि[17]र्वश्यं रक्ते च स्तब्धता[18] ॥ ९६ ॥

पीते कृष्णे मृते[19] देवि वृक्षवर्णाश्च यत्नतः ।
केरलाख्ये सम्प्रदाये पूजान्ते होमकर्म च ॥ ९७ ॥

[20]पञ्चोपचारपूजान्ते काश्मीरे होमकर्म च ।
नैवेद्यान्ते होमकर्म गौडमार्गे महेश्वरि ॥ ९८ ॥

आदौ मध्ये तथा चान्ते का[21]श्मीरे क्रममर्चने[22] ।
सदाशिवमते देवि सर्वान्ते होमकर्म च ॥ ९९ ॥

बाह्यपूजां ततः कुर्यात् यथोक्तेन तु वर्त्मना ।
प्राणायामादिकं कृत्वा यथासरणि[23]मार्गतः ॥ १०० ॥

[1] B तत्र । [2] A °मयो । [3] D क्रमे महादेवि । [4] U °क्वारं । [5] U °कं । [6] U °ण्डान्ते । [7] D दलाष्टे । [8] U चत्वारि । [9] D तत्र रेखा । [10] BD केव; U केर° । [11] U सकन्यां वा । [12] U °वं । [13] D वशमानयेत् । [14] D °णक्षमः । [15] D कुशलार्थं च । [16] U °ष्पै° । [17] AU °वाक्यसिद्धि° । [18] U वा तथा; A चरस्तथा । [19] U मते; B मिते । [20] D omits two lines. [21] B श्रीका° । [22] B क्रमार्चने; D क्रमार्चनं । [23] A शरण° ।

सम्प्रदायत्रयेणै[1]व पात्राणां स्थापनं चरेत् ।
महाकालामहानन्दवाणाग्निचन्द्रभेदतः ॥ १०१ ॥

स्थाप्य सम्पूजयेद्देवि पूर्वकल्पप्रभेदतः ।
पात्रं प्राच्यां[2] स्थानमध्ये[3] पात्राणां चालनं यदि ॥ १०२ ॥

पुनरादि समारभ्य पात्राणां स्थापनं चरेत् ।
पात्रसंघट्टनं देवि यदि[4] भूयात्प्रमादतः ॥ १०३ ॥

पुनः पात्राणि संस्थाप्य पूजयेज्जगदम्बिकाम् ।
संस्थापिते पात्रवरे पात्रोत्सर्जनकं न हि ॥ १०४ ॥

विसर्जनमकृत्वा तु[5] पुनस्तु पूर्ववद् यजेत् ।
त्रिसन्ध्यं पूजयेद्देवि पात्रस्थापनमात्रतः[6] ॥ १०५ ॥

स्थापितैरेकवारैस्तु तैः पात्रैः पूजयेच्छिवाम्[7] ।
विसर्जनोत्तरं देवि पात्राणामवि[8]सर्जनम् ॥ १०६ ॥

पूजा जाता महेशानि न कृतं च विसर्जनम् ।
एवं क्रमेण देवेशि पूजयेद्गौडसम्मतम् ॥ १०७ ॥

पात्रासादनकं कर्म कृत्वादौ पूजनक्रमे[9] ।
सम्पूज्य देवतां तारां[10] पात्राणां तु विसर्जनम् ॥ १०८ ॥

पुनः पात्राणि संस्थाप्य पूजां माध्याह्निकीं चरेत् ।
पुनर्विसर्जनं कृत्वा पुनः स्थाप्य प्रपूजयेत् ॥ १०९ ॥

चैतन्याख्यः क्रमः प्रोक्तो महाभैरवसम्मते ।
एवं क्रमेण देवेशि पात्रसिद्धिकरो भवेत् ॥ ११० ॥

पात्रं दिव्यमयं पश्ये[11]द्विशेषार्घ्यमय शिवे ।
वीरपात्रं तु वीराणां शक्तीनां शक्तिपात्रकम् ॥ १११ ॥

अवीराणां[12] महेशानि योगिनीपात्र[13]मीरितम् ।
गुरुपात्रं श्रीगुरूणां[14] यतीनां भैरवाभिधम् ॥ ११२ ॥

कापालिकानां मुख्यं च बलिपात्रं प्रकीर्तितम् ।
त[15]द्भावेन तु शूद्राणां सर्वाभावे जलं पिबेत्[16] ॥ ११३ ॥

दिव्यं देव्यग्रतः पानं[17] वीरं वीरसमागमेः ।
अन्यथा पशुपानं च नरकार्थं प्रकीर्तितम् ॥ ११४ ॥

सामान्यार्घ्यविशेषार्घ्यविकीकृत्य स्वयं पिबेत् ।
घटद्रव्यं तु वीराणां वीराभावे स्वयं पिबेत् ॥ ११५ ॥

1 A °क्रमे° । 2 U प्राप्य । 3 B °भेदैः । 4 B परि° । 5 A नमस्कृत्वा । 6 D °मानतः । 7 AU °वे । 8 A णां परि°; D °णामपि । 9 U °मम् । 10 B नारीं । 11 A पुष्ये । 12 B अवीराया; A आवीराया; U आवीराया । 13 A °गीपात्र° । 14 D गुरवे । 15 U एत° । 16 D क्षिपेत् । 17 D प्रोक्तं ।

स्था[1]पयेत् याचकार्थं च पात्रे[2] याचकसंज्ञके ।
याचकार्थं च यत्पात्रं तत्पात्रं याचकं विदुः ॥ ११६ ॥

चक्रान्ते परमेशानि विशेषार्घ्यजलं शिवे ।
देवीपीठे चक्ररूपं भ्रामयित्वा स्वयं मुखे ॥ ११७ ॥

क्षिपेद्देवेशि यत्नेन स्वयमादौ तु सङ्ग्रहेत् ।
सामान्यार्घ्यजलेनैव जलं देव्यै समर्पयेत् ॥ ११८ ॥

ब्रह्ममन्त्रं समुच्चार्य देव्यै सर्वं समर्प[3]येत् ।
महादि[4]व्यामृतमयं[5] पात्रं ज्ञात्वा महेश्वरि ॥ ११९ ॥

देवीस्वरूपं तद्ध्यात्वा गृह्णीयात्स्वयमादरैः ।
मूलमन्त्रैश्च मन्त्रैर्वा अभिषिञ्चेत्स्वमूर्द्धनि ॥ १२० ॥

स्निग्धभूमौ तज्जलं तु क्षिप्त्वा मायां लिखेच्छिवे ।
मन्त्रेणानेन देवेशि तिलकं कारयेद्ध्रुवम् ॥ १२१ ॥

यं यं स्पृशति[6] हस्ताभ्यां यं यं पश्यति चक्षुषा ।
स एव दासतां[7] याति यदि शक्रसमो[8] नरः ॥ १२२ ॥

इति सर्वं विधानेन ज्ञात्वा कर्माणि कारयेत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ १२३ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
पूजाचिह्नविधिर्नामाष्टादशः[9] पटलः ।

1 U दा° । 2 U °त्रं । 3 B °र्च्चि° । 4 D °दे° । 5 A मृन्मयं । 6 U गृह्णाति; B पश्यति ।
7 U दास्यतां; B वशतां । 8 B °मयो । 9 B त्रयोविंशतिः; D द्वाविंशतिः ।

## एकोनविंशतिः पटलः।

श्रीदेव्युवाच।

देवेश श्रोतुमिच्छामि आरार्त्तिकविनिर्णयम्।

श्रीशिव उवाच।

दशदीपै[1]र्विंशतिभिः पञ्चभिर्नवभिश्च वा ॥ १ ॥

अष्टभिस्तत्त्वसंख्याभिः कुर्यादारार्त्तिकं बुधः।
[2]त्रिकोणं चैव षट्कोणं मध्ये बिन्दुं निपातयेत् ॥ २ ॥

तत्तद्विद्यामयैर्यन्त्रैर्विशेषार्घ्यमयेन वा।
आ[3]दौ तु भैरवीयन्त्रं[4] चक्रमुद्रां प्रदर्शयेत् ॥ ३ ॥

समस्तयोगिनीचक्रे परिवारसमन्विते।
आरार्त्तिकं गृहाणेदं देवते प्रीतिहेतवे ॥ ४ ॥

मन्त्रेणानेन देवेशि कुर्यादारार्त्तिकं बुधः।
माषैस्तिलैस्तण्डुलैर्वा गोधूमैर्यवजैरपि ॥ ५ ॥

ओदनोत्थाः शर्करोत्था हारिद्राः केशरोद्भवाः।
अष्टगन्धोद्भवा गौडा दीपा यत्नेन कारयेत् ॥ ६ ॥

दीपानां रक्तपीतानां वश्यस्तम्भाभिधं[5] फलम्।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ७ ॥

श्रीदेव्युवाच।

देवेश श्रोतुमिच्छामि पात्रसिद्धेस्तु[6] लक्षणम्।

श्रीशिव उवाच।

पात्रं तेजोमयं पश्येत्पात्रसिद्धेश्च लक्षणम् ॥ ८ ॥

तत्पात्रबिन्दुग्रहणादेति देवस्वरूपताम्।
ऊर्ध्वोर्ध्वक्रमणं भू[7]यात्पात्रस्पर्शनमात्रतः ॥ ९ ॥

मृतरूपोऽपि देवेशि पात्रस्पर्शेन जीवति।
दुर्जना भैरवा विद्यापात्रं पश्यन्ति दीपवत् ॥ १० ॥

महा[8]ज्वालानिभं पश्येद्दे[9]वताहस्तदर्शनम्।
षडङ्गमपि संपश्येत्तत्र निर्यातितेजसि ॥ ११ ॥

तेजोमध्ये समुद्यन्ति साधकाग्रे न संशयः।
पात्रं चलति देवेशि देवताग्रेऽतिसादरम् ॥ १२ ॥

[1] A °र्वं। [2] A omits six lines. [3] U हा°। [4] U °वं पात्रं। [5] U देवस्य भाषितं। [6] U °द्धोक्त। [7] A °णोद्भू°। [8] A सदा। [9] A वश्ये दे°।

वाणीं वदति देवेशि शान्तिस्तोत्रमयीं पराम् ।
दुष्टान्धीकरणं देवि मांसानां करवीरताम् ॥ १३ ॥

मद्यानां दुग्धतामेति मत्स्यानां मूलकन्दताम् ।
यागे[1] भैरवता देवि शक्तौ दीपस्वरूपता ॥ १४ ॥

होमकुण्डस्वरूपत्वं मंत्राध्वा[2] तत्त्वरूपता ।
देवतारूपता देवि पात्रसिद्धेरियं मता ॥ १५ ॥

पात्रमासाद्य देवेशि यन्त्रं[3] पीठे निवेशयेत् ।
बीजहीनं तु यद्यन्त्रं तद्यन्त्रं शववद्भवेत् ॥ १६ ॥

बीजयुक्तं सिद्धिरूपं सजीवं परिकीर्तितम् ।
जीवचक्रं यथा देवि तथा यन्त्रं सजीवकम् ॥ १७ ॥

प्रसिद्धप्राचीमार्गेण केरले बीजलेखनम् ।
कल्पिता प्राक्क्रमेणैव गौड़काश्मीरयो[4]र्लिपिः ॥ १८ ॥

स्वसाम्मुख्यक्रमेणैव चैतन्ये बीज[5]मेलनम् ।
स्ववामदक्षभेदेन नन्दनाथे[6] क्रमाल्लिपिः ॥ १९ ॥

देवतादक्षवामाख्यक्रमाच्चिद्व्न[7]भैरवौ ।

एवं लेख्यक्रमज्ञानात्पूजनात्तत्र सिध्यति ॥ २० ॥

ध्यानरूपा महाविद्या यद्बिन्दौ दिव्य[8]रूपताम् ।
रूपमासाद्य देवेशि सदा तिष्ठति यत्र वै[9] ॥ २१ ॥

यत्किंचित् लेखनेनैव तदेव सिद्धिदायकम् ।
यन्त्रसिद्धिरियं देवि लक्षणाभिः क्षणे क्षणे ॥ २२ ॥

भवन्ति सिद्धिरूपाणि देहसिद्धिकराण्यके ।
रहस्यातिरहस्ये च रहस्यं योनिवत्कुरु ॥ २३ ॥

इति संक्षेपतः प्रोक्तं घटसिद्धिं शृणु प्रिये ।
यद्घटस्थापनेनैव देवता करगा भवेत् ॥ २४ ॥

सर्वचक्रं[10] सर्वरूपं सर्वदेवमयं शिवम् ।
आनन्दभैरवं पश्येद् घटमध्ये निरन्तरम् ॥ २५ ॥

तेजःस्वरूपो वाञ्छा[11]ख्यो मणिः कल्पलतामयः ।
सुधारसमयीं वाणीं अमृतस्यन्दनिर्झराम् ॥ २६ ॥

वाणीं वदति देवेशि देवतानां निवेदनात्[12] ।
स्वयं करोति देवेशि स्वयं नी[13]लासमो घटः ॥ २७ ॥

1 B छागे । 2 B मताध्वी । 3 U पंच° । 4 A केरलयो° । 5 U जीव° । 6 D °र्थे । 7 U °चैतन्य° । 8 U देव° । 9 U यन्त्रवत् । 10 A वक्त्रं । 11 D वक्षा° । ३° U ० 12 A निबन्धनं । 13 D ली° ।

तद्दे[1]हगमनाद्देवि[2] मूको[3] वदति[4] शारदाम् ।
सहस्रशतधारां च[5] महाश्रुतिधरो घटी ॥ २८ ॥

घटसिद्धिरियं प्रोक्ता सर्वशास्त्रमयी[6] भवेत् ।
षोडशोपचारसिद्धिर्बलि[7]सिद्धिस्तथैव च ।
भवत्येककरे देवि किमन्यच्छ्रोतुमिच्छसि ॥ २९ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे आरात्तिकविनिर्णयो नाम एकोनविंशतिः पटलः ।

[1] D °हे° । [2] AD °देव । [3] B मुक्तो; D मृतको । [4] A वन्दति । [5] B °रेव । [6] U °क्षमो । [7] D वाणी° ।

## विंशतिः पटलः ।

श्रीदेव्युवाच ।

दशविद्यादिकं देव दश वै शक्तयः प्रभो ।
पुरैव कथिताः स्वामिन् तत्क्रमान्[1] वद साम्प्रतम् ॥ १ ॥

श्रीशिव उवाच ।

रहस्यातिरहस्यं च कथ्यते तव भक्तितः ।
महानीलक्रमेणैव कालिका सिद्धिदायिनी ॥ २ ॥
महानीलक्रमो देवि द्विविधः परिकीर्तितः ।
सकलो निष्कलश्चेति तत्क्रमं शृणु पार्वति ॥ ३ ॥
खड्गहस्तः शिरोन्यस्तः सर्वदा मुक्तकुन्तलः ।
सदा मांसासवोल्लासहृदयाघूर्णलोचनः ॥ ४ ॥
सिन्दूरतिलकं भाले पाणौ तु मदिरारसः ।
न करोति नरो यस्तु स कथं मम पूजकः ॥ ५ ॥
[2]रात्रौ पर्यटनं चैव रात्रावेव[3] प्रपूजनम् ।
न करोति नरो यस्तु स कथं मम पूजकः ॥ ६ ॥
[4] * * * * [5] कर्म शक्तेरालिङ्गनं तथा ।
न करोति नरो यस्तु स कथं मम पूजकः ॥ ७ ॥
सिन्दूरबिन्दुं भ्रूयुग्मे स्वयम्भूमुनि[6]पत्रकम्[7] ।
रक्तचन्दनजं चापि त्रिपुण्ड्रञ्च ततोपरि ॥ ८ ॥
कुचन्दने[8] कज्जलस्य बिन्दुर्देयो महेश्वरि ।
धूपाङ्गारत्रिपुण्ड्रस्य सत्त्वस्थाने प्रदापयेत् ॥ ९ ॥
महानील[9]क्रमे देवि तिलकः[10] परिकीर्तितः ।
श्मशानशायी मांसाशी संविदानन्दमानसः ॥ १० ॥
* * पश्यन् स्पृशन् गच्छन् सर्वकालं जपं चरेत्[11] ।
* * रमन् श्मशानस्थो मृदुचूडकसंयुतः ॥ ११ ॥
दन्ताक्षमालया देवि राजदन्तेन मेरुणा ।
मालां कृत्वा जपेद्देवि सदा ताम्बूलचर्वकः ॥ १२ ॥
कपालपात्रं सम्पूज्य[12] सदा ताम्बूलचर्वकः ।
कपालपात्रं सम्पूज्य वीरसाधनतत्परः ॥ १३ ॥
कपालमालाभरणो * * * तत्परः ।
सिन्दूरतिलकं भाले पाणौ तु मदिरारसः ॥ १४ ॥

[1] B स्वक्रमात् । [2] D omits four lines. । [3] U °त्रौ चैव । [4] A omits two lines. । [5] Omitted. [6] B बुति° । [7] A युग्मकं । [8] U चन्दनेन । [9] D चीन° । [10] A निष्कलः । [11] B चरेद्बुधः । [12] U omits सदा...सम्पूज्य in the second line,

शक्तयानन्दो नेत्रकञ्जे मुखे हालां गृहाङ्गने ।
* * बाला करे माला शक्तिदोला हृदम्बुजे ॥ १९ ॥

रक्तचन्दनजा[1] वापि स्वयम्भूकुसुमोद्भवा ।
रक्तश्वेता द्विधा प्रोक्ता मुण्डास्थिदन्तजा प्रिये ॥ १६ ॥

* * * * * कृत्वा सर्वकालं जपेच्छिवे ।
शक्तिद्रव्यं न संस्कार्यं सर्वमेतच्चराचरम् ॥ १७ ॥

अवि[2]कारी प्रहृष्टात्मा स्त्रीभक्तो विजितेन्द्रियः ।
ईदृग्विधो नरो देवि महानील[3]क्रमे[4] मतः ॥ १८ ॥

राजदन्तमयी माला खरोष्ट्राश्वसमु[5]द्भवा ।
असक्तानां[6] [7]निष्कलः स्यात्तत्क्रमं श्रृणु पार्वति ॥ १९ ॥

विजयादुग्धकं पीत्वा सच्चिदानन्दमानसः ।
स्फाटिकीं मालिकां कृत्वा विहरन् जपमाचरेत् ॥ २० ॥

दिक्कालनियमो नात्र स्थित्यादिनियमो न च ।
न जपे कालनियमो महामन्त्रस्य साधने ॥ २१ ॥

यस्मिन्मन्त्रे य आचारस्तत्र धर्म[8]स्तु तादृशः ।
भ्रान्तिस्तत्र न कर्तव्या स्वर्गो वा मोक्ष एव च ॥ २२ ॥

पञ्चचक्रक्रमः कार्यो गुरोराज्ञा[9]क्रमेण च ।
मृदुकोमलकं देवि चूडकं वाप्यचूडकम् ॥ २३ ॥

शवं वीरासनं वापि योनित्वगासनं च वै[10] ।
कामरूपासनं देवि सुरतासनमेव च ॥ २४ ॥

[11]सिन्दूरासनकं देवि पर्वतासनमेव च ।
सरोरुहा[12]सनं देवि तिलपुष्पं च खञ्जनम्[13] ॥ २५ ॥

चन्द्रबिम्बं सर्पिणी[14] च कम्बला[15]सनमेव च ।
प्रया[16]गासनकं देवि महाप्रयागासनं तथा ॥ २६ ॥

मुनिचूडासनं वक्ष्ये स्पर्शषट्कासनं तथा ।
जिह्वास्पर्शासनं देवि वायुस्पर्शासनं च वा[17] ॥ २७ ॥

आश्लेषासनकं देवि तथा मुण्डासनं तथा[18] ।
श्रीमुण्डसुरतं वापि श्रीवीर[19]सुरतं च वा ॥ २८ ॥

पञ्चवीरासनं देवि सुरेन्द्रा[20]दिदिशा[21]क्रमात् ।
आवन्ती मथुरा काशी प्रयागाद्यासनं तथा ॥ २९ ॥

[1] U °जं । [2] A °धि° । [3] D °चीन° । [4] B °मो । [5] B °रसो° । [6] B °नि । [7] D omits निष्कलः...नात्र in the 4th line. । [8] A चक्रमन्त्र° । [9] U °यैश्चूडोमाला°; B °यैश्चूडोमला । [10] D चरेत् । [11] A omits this line. । [12] D °वरा° । [13] D कंचुलं । [14] D सर्पिणं; B सर्वणं । [15] B चुम्बना ° । [16] D °यो° । [17] D तथा । [18] U प्रिये । [19] U °बीज° । [20] B °रन्ध्रा° । [21] A वसा ।

लेह[1]स्पर्शासनं चैव[2] प्रयागत्रितयासनम् ।
प्रत्येकमासनासक्तजघनासक्तमासनम् ॥ ३० ॥

तरुणं सुन्दरं शूरं सम्मुखे रणवर्तिनम्
पलायनवि[3]शून्यञ्च चापलाद्य[4]भिभूतकम् ॥ ३१ ॥

शनिभौमदिने वापि पञ्चरात्रिदिने च वा ।
सद्यः[5]प्राप्तान् त्रिरात्रस्थान् शवानानीय पार्वति ॥ ३२ ॥

दिग्विदि[6]कुक्रमयोगेन स्थापयेद्यत्नतः शिवे ।
शून्यागारे पर्वते वा एकलिङ्गे चतुष्पथे ॥ ३३ ॥

पश्चिमाभिमुखं लिङ्गं वृषशून्यं च यत्र वै[7] ।
ईदृक् स्थानं समासाद्य वीरवेषं समाचरेत् ॥ ३४ ॥

श्मशानदेवताभ्यश्च महाकालाय पार्वति ।
बलिं दत्त्वा प्रयत्नेन दिक्पालेभ्यो बलिं हरेत् ॥ ३५ ॥

शवान्[8] संक्षाल्य यत्नेन पूर्वोक्तेन तु वर्त्मना ।
सर्वोपस्कर[9]सम्पन्नो[10] दूरे चोत्तर[11]साधकान् ॥ ३६ ॥

अभिषेकविधिज्ञांश्च सा[12]धिकान् साधकान्प्रिये ।
दैदृग्विधान् समानीय सश[13]स्त्रान् दूरदेशके ॥ ३७ ॥

संस्थाप्य दश कीलान्वै दशदिक्षु निखानयेत्[14] ।
वीरार्गलेन मन्त्रेण त्वघोरास्त्रेण वा प्रिये ॥ ३८ ॥

जयदुर्गाख्यमनुना विद्यामण्डलकेन वा ।
दिग्बन्धनमथाचर्य्य मद्यमांसादिसंयुतः ॥ ३९ ॥

मत्स्यं मुद्रां * * * तत्र सर्वं समाचरेत् ।
स्वस्वकल्पो[15]क्तविधिना बलिसम्भारसंयुतः ॥ ४० ॥

गोनरेभाश्वमहिषछागमेषसमूषकान्[16] ।
मार्जारादीन् समानीय पिष्ट[17]जानथवा प्रिये ॥ ४१ ॥

स्वकण्ठ[18]समरासीन्वै (?) कृत्वा यत्नेन पार्वति ।
सर्वं श्मशानवत्कृत्वा जू[19]टिकाबन्धनादिकम् ॥ ४२ ॥

अश्वारोह[20]क्रमेणैव तत्र स्थित्वा जपं चरेत् ।
[21]प्रथमं प्रहरं त्यक्त्वा तृतीयप्रहरावधि ॥ ४३ ॥

1 A लिहनं; D लेह्य । 2 D स्पर्शदर्शनं च । 3 A प्रलापपरि° । 4 U चण्डालाद्य° । 5 U सप्त° । 6 D दिनादि° । 7 U पुरातनं । 8 AD शवं । 9 D °परक्षा° । 10 U °नियतो । 11 D चतुर° । 12 B स्वा° । 13 B °शा° । 14 A °पातयेत् । 15 B कालो°; D बल्यो° । 16 U शूकरान् । 17 U श्रेष्ठ° । 18 D सरूप; A सकण्टक° । 19 A गु° । 20 D °रूढ° । 21 D omits four lines.

एकद्वित्र्यादिवर्णानां मालामन्त्रादिका: प्रिये ।
उक्तमार्गेण देवेशि शक्तियोनौ शि[1]वं यजेत् ॥ ४४ ॥

जपं कुर्यान्महेशानि देवता वरदा भवेत् ।
कोटिकोटि[2]प्रकारैश्च भयं तत्र प्रजायते ॥ ४५ ॥

सर्वं मिथ्यैव कृत्वा तु[3] जपं कुर्यान्महेश्वरि ।
यदि भाग्यवशाद्देवि स्त्रीरूपा संस्कृताक्षरम् ॥ ४६ ॥

मधुरं वक्ति या देवि सैव प्रोक्ता महेश्वरी ।
मध्यभागा[4]न्महेशानि ब्राह्मण: संस्कृतं वदेत् ॥ ४७ ॥

समायाति महेशानि भैरव: परिकीर्तित: ।
तया यद्याच्यते देवि तद्देयं[5] तत्र पार्वति ॥ ४८ ॥

स्वस्य[6] वाञ्छावरो ग्राह्यो वरं ब्रूहीति सा[7] वदेत् ।
तत्तथैव महेशानि भविष्यति न संशय: ॥ ४९ ॥

तच्छक्तियोनितत्त्वस्य * * प्रत्यक्षमाचरेत् ।
सर्वसिद्धीश्वरो भूत्वा[8] कालीरूपो नरो भवेत् ॥ ५० ॥

ब्रह्माण्डगोलके या च या काचिज्जगतीतले ।
समस्ता: सिद्धयो देवि तस्य हस्ते व्यवस्थिता: ॥ ५१ ॥

सैव काली[9] भवेद्देवि नात्र कार्या विचारणा ।
भ्रान्तिं त्यक्त्वा महेशानि सर्वं कार्यं महेश्वरि ॥ ५२ ॥

शुद्धौ चाशुद्धताभ्रान्ति: स कथं मम पूजक: ।
पाने भ्रान्तिर्भवेद्यस्य घृणा स्या * * * ॥ ५३ ॥

ईदृग्विधो नरो यस्तु स कथं मम पूजक: ।
यद्यत्प्राप्तं[10] महेशानि तत्सर्वं विनिवेदयेत् ॥ ५४ ॥

निष्कले नीलमार्गे च तिलकाद्यं च पूर्ववत् ।
ताम्बूलभक्षणं कृत्वा संविदुग्रं[11] सदा भजेत्[12] ॥ ५५ ॥

स्त्रियं दृष्ट्वा जपेद्देवि शवभस्मान्समाहरेत्[13] ।
इत्याचारपर: श्रीमान् कालीरूपो नरो भवेत् ॥ ५६ ॥

पंचाशत्कुशतो ब्रह्मा[14] तदूर्ध्वं[15] विष्टर: स्मृत: ।
कुशपत्रशतेनैव विष्टरं कारयेद्बुध: ॥ ५७ ॥

जीवन्यासं[16] तत्र कृत्वा तस्योपरि जपं चरेत् ।
ताम्बूलं योनिचक्रं च मुण्डमाला शवासनम् ॥ ५८ ॥

[1] U श° । [2] B °कूट° । [3] B °कुर्यात्तु । [4] U °मार्गा° । [5] AB तदेव । [6] A स्वस्व; D तस्य । [7] U सं° । [8] D यात् । [9] B °लो । [10] U प्रोक्तं । [11] A °दुग्रां । [12] D पिबेत् । [13] A °मभिक्षिपेत् ; D समभ्यसेत् । [14] B दद्यात् । [15] B तदर्धं । [16] D °ध्यानं ।

सिन्दूरं खङ्गकं[1] देवि संविदासवयो रसः ।
विना यः पूजयेत्कालीं रौरवं नरकं व्रजेत् ॥ ५९ ॥

कुलाचारं समासाद्य सर्वसिद्धीश्वरो भवेत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ६० ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे दशविद्यादिपूजाक्रमं नाम विंशतिः[2] पटलः ।

[1] A वटकं । [2] D चतुर्विंशतिः ; B पंचविंशतिः ।

# एकविंशतिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि महाचीनक्रमं परम् ।

**श्रीशिव उवाच ।**

महाचीनक्रमो देवि कथ्यते क्षिप्रतो मया[1] ॥ १ ॥
[2]महाचीनक्रमेणैव तारा शीघ्रफलप्रदा ।
ब्रह्मचीनो दिव्यचीनो वीरचीनस्तृतीयकः ॥ २ ॥
महाचीनो निष्कलश्च चीनः पञ्चविधः स्मृतः[3] ।
महाचीनक्रमो देवि द्विविधः परिकीर्तितः ॥ ३ ॥
सकलो निष्कलश्चेति सकलो बौद्ध[4]गोचरः ।
निष्कलो ब्राह्मणानाञ्च द्वितीयं शृणु पार्वति ॥ ४ ॥
न वक्तव्यं[5] त्रिभुवने सारात्सारतरं परम् ।
केचिद्देवा नराः केचिद्दानवा यक्षराक्षसाः ॥ ५ ॥
नागलोकाः किन्नराश्च गन्धर्वाप्सरसां गणाः ।
ये वा पशुमृगापक्षा ये केचि[6]ज्जगतीगताः ॥ ६ ॥
एते जड[7]तराः सर्वे परस्परखलात्मनः ।
कुकल्पे[8] निरताः सर्वे कुमार्गदर्शनोत्सुकाः ॥ ७ ॥
एतेषां ब्रह्मविज्ञानमानन्दं ब्रह्मचित्सुखम् ।
न जानन्ति महेशानि कथं तत्कथयामि ते ॥ ८ ॥
नित्यमुक्तस्वभावो यः तस्मै तद्व्रतमीरितम् ।
क्षमस्व देवि चार्वंगि[9] न वक्तव्यं मयानघे ॥ ९ ॥

**श्रीदेव्युवाच ।**

नमस्ते वरदस्वामिन्[10] करूणानिधये नमः ।
अन्यदेवरता ये च तेऽपि त्व[11]त्पदकांक्षिणः ॥ १० ॥
तेषामेवाधिकफलं मद्भक्तानां व्यवस्थितम् ।
सिंहव्याघ्रादयो ये च ये च विघ्ना[12]नुकारिणः ॥ ११ ॥
रिपवश्च तथा पापा ये चान्ये दुष्टजन्तवः ।
ते सर्वे विलयं यान्ति पतङ्गा इव पावके[13] ॥ १२ ॥
गेहं दीपशिखाकारं दृश्यते दुष्टजन्तुभिः ।
केवलं प्रेमभावेन त्वयैव विभुना प्रभो ॥ १३ ॥

[1] AU शृणु सांप्रतं । [2] D omits three lines. । [3] A °धो मतः । [4] B बोध । [5] D नास्ति देवि । [6] U केचिद्वै । [7] D °दुष्ट° । [8] D °ल्प° । [9] D देवदेवेशि । [10] A omits. । [11] D न त° । [12] A चिघ्रा; D वित्ता° । [13] U पार्वति ।

किं वा [1]शवमयो भूत्वा आसने पंचदेवताः ।
पृथिवी याति जडतां[2] जडं[3] तेजोमयं भवेत् ॥ १४ ॥
तेजो[4] वायुस्तथा पृथ्वी[5] आकाशं तत्प्रकाशकम् ।
दानवा राक्षसा मर्त्या[6] ये चान्ये[7] देवतागणाः ॥ १५ ॥
राजानश्च तथा सर्वे चान्ये तत्पादवर्तिनः ।
आज्ञां[8] भजन्ति[9] गन्धर्वाः किं पुनर्नर[10]किन्नराः ॥ १६ ॥
यत्र यत्र भवेद्वाञ्छा तत्र सिद्धिः करे स्थिता ।
सदा तद्वा[11]मिनीं वाणीं भजते वा[12]तिनिश्चला ॥ १७ ॥
द्वन्द्वभावं परित्यज्य किमन्यद्बहुजल्पितैः ।
मोक्षार्थी लभते मोक्षं धनार्थी लभते धनम् ॥ १८ ॥
अन्ते तु जायते गौरीलोके शिव इवापरः ।
सिद्धो भवति मद्भक्त्या कथितञ्च[13] मया तव ॥ १९ ॥
न वक्तव्यमभक्ताय परभक्ताय पापिने ।

**श्रीशिव उवाच ।**

महाचीनक्रमं देवि द्विविधं सूचितं पुरा ॥ २० ॥
महाचीनक्रमो देवि द्विविधैव[14] प्रकीर्तितः ।
तत्रैव देवदेवेशि त्रैगुण्याद्भेदभाजनम् ॥ २१ ॥
स्नानादि मानसं शौचं मानसः प्रवरो जपः ।
पूजनं मानसं दिव्यं मानसं तर्पणादिकम् ॥ २२ ॥
मानसो नियमः प्रोक्तो मानसं दन्तधावनम् ।
सर्व एव शुभः कालो नाशुभो विद्यते क्वचित् ॥ २३ ॥
न विशेषो दिवारात्रौ न सन्ध्यायां महानिशि ।
वस्त्राद्रिं[15] मानसं शौचं देहस्पर्शादि वारिणा ॥ २४ ॥
शुद्धिं[16] न चार्चयेदत्र निर्विकल्पमनाश्चरेत् ।
नात्र शुद्धेरपेक्षास्ति न च मेध्यादिदूषणम् ॥ २५ ॥
य एवं नियमैर्मन्त्रं[17] सर्वकामसमृद्धिदम् ।
गद्यपद्यमयी वाणी सभायां तस्य जायते ॥ २६ ॥
तस्य दर्शनमात्रेण वादिनो निष्प्रभा मताः ।
राजा[18]नोऽपि च दासत्वं भजन्ते किं परे जनाः ॥ २७ ॥
[19]सर्वदा पूजयेद्देवीमस्नातः कृतभोजनः ।
महानिश्यां शुचौ देशे बलिं मन्त्रेण दापयेत् ॥ २८ ॥

1 U शि° । 2 D झटिति । 3 D जलं । 4 A ततो । 5 D वायुरा । 6 D यक्षा ।
7 B °द्या । 8 A योग्यं । 9 D गृह्णाति । 10 D यक्षराक्षस°; B °नाग° । 11 A °भामिनीं
12 U या° । 13 AD कथयस्व । 14 B द्विधा एव । 15 D °दि । 16 A चिं ।
17 B °तं; D °मं । 18 B स्वज° । 19 B omits three lines. ।

स्त्री[1]द्वेषो नैव कर्त्तव्यो विशेषात् पूजनं स्त्रियः ।
जपस्थाने महाशङ्खं निवेश्योर्द्ध्वं जपं चरेत् ॥ २९ ॥
स्त्रियं गच्छन् स्पृशन् पश्यन् यत्र कुत्राप्यचूडके ।
भक्ष्यं ताम्बूलमन्यांश्च भक्ष्यद्रव्या[2]न्यथारुचीन् ॥ ३० ॥
मांसं मत्स्यं दधि क्षौद्रं संवि[3]दासवयो रसः ।
[4]उक्तान्य[5]शेषभक्ष्याणि भुक्त्वा भक्ष्यं चरेज्जपम् ॥ ३१ ॥
दिक्कालनियमो नास्ति स्थित्यादिनियमो न च ।
न जपे कालनियमो नार्चादिषु बलिष्वपि ॥ ३२ ॥
स्वेच्छानियम उक्तोऽत्र महामन्त्रस्य साधने ।
वस्त्रासनगेहदेहस्पर्शास्पर्शादि वारिणा ॥ ३३ ॥
तैलं[6] संलाप्य देवेशि ताम्बूलं भक्षयेत् सदा ।
नानाम्बराणि[7] संधार्य देहं वस्त्रेण मार्जयेत् ॥ ३४ ॥
मन्त्र[8]स्नानं चरेद्देवि सर्वदा मद्य[9]ताशयः ।
महाचीनक्रमे देवि विप्रस्नानमिदं भवेत् ॥ ३५ ॥
शुद्धिर्न[10] चाचरे[11]दत्र निर्विकल्पमनाश्चरेत् ।
सुगन्धिश्वेतलौहित्यकुसुमैरर्चयेद्दलैः[12] ॥ ३६ ॥
बिल्वै[13]र्मरुवकाद्यैश्च तुलसीवर्जितैः शुभैः ।
वर्जयेद्बिल्वपत्रञ्च मरुं[14] यत्नेन वर्जयेत् ॥ ३७ ॥
के[15]शान् संवर्द्धयेद्देवि सर्वदा तैल[16]भूषितः ।
अष्टम्यां च चतुर्दश्यां विशेषदिवसे सदा ॥ ३८ ॥
नाधर्मो विद्यते सुभ्रु[17] किंचि[18]द्धर्मो महान् भवेत् ।
स्वेच्छानियम उक्तोऽत्र प्रचरेद्धृष्टमानसः ॥ ३९ ॥
कृतार्थं मन्यमानस्तु सन्तुष्टो निजमानसः ।
हरेर्नाम न गृह्णीयान्न स्पृशे[19]त्तुलसीदलम् ॥ ४० ॥
नान्यचिन्ता प्रकर्तव्या नान्यनिन्दा[20] कदाचन ।
नान्यमन्त्रं जपेद्देवि निर्विकल्पः सदा भवेत् ॥ ४१ ॥
सद्यो[21] मद्यं[22] पिबेद्देवि मातङ्गीभिर्विहारवान् ।
[23] * * * * देवि जपं कुर्यादनन्यधीः ॥ ४२ ॥
ब्रह्मी[24]भूते मदाचारे विकल्पः कः प्रियेऽस्ति वै[25] ।
भ्रूयुग्मे कुण्डले देवि सिन्दूरं तदनन्तरम् ॥ ४३ ॥

[1] U° वे° । [2] U सद्रव्यान्नं । [3] B सर्व° । [4] BU भु° । [5] U °वि° । [6] A तिलं ।
[7] D °वर्णानि । [8] A सर्व°; U भानोः; D एवं । [9] D त° । [10] U शुचिना; B शुद्धेन ।
[11] BU °र्चये° । [12] A रक्तचन्दनैः । [13] A °र्मे° । [14] AU मेरुं । [15] A कु° ।
[16] B लोल° । [17] A यस्तु । [18] A भक्ति° । [19] A पश्ये° । [20] A° चिन्ता ।
[21] DU मद्यं । [22] U मांसं । [23] Omitted. । [24] A तूष्णी° । [25] D प्रियैः स्तवैः ।

कुचन्दनं[1] त्रिपुण्ड्रं च ततः[2] सकेशरं[3] शिवे ।
मुण्डमाला गले धार्या कपालं पाणिसङ्गतम् ॥ ४४ ॥
इत्याचारपरो नित्यं महाचीनक्रमी[4] भवेत् ।
सर्वदानन्दहृदयः सर्वदा भक्तसेवकः ॥ ४५ ॥
कर्णनेत्रान्तरस्थो यो महाशङ्खः प्रकीर्तितः ।
पञ्चाशन्मणिमिर्माला गोनराश्वास्थिसंभवा[5] ॥ ४६ ॥
माला कार्या महेशानि षष्ठिसिद्धीश्वरो भवेत् ।
सैव तारा महेशानि नात्र कार्या विचारणा ॥ ४७ ॥

**श्रीदेव्युवाच**

शिव शङ्कर विश्वेश विश्वतारक[6] शाश्वत ।
वेदहीनाश्च ये धर्मास्तान् कथं ब्राह्मण[7]श्चरेत् ॥ ४८ ॥

**श्रीशिव उवाच**

साधु देवि मम प्राणप्रिये साधकसुप्रिये ।
तद्भावनासमायात[8]स्तद्भावमाचरे[9]त्प्रिये ॥ ४९ ॥
यथा श्राद्धविधौ देवि मांसं मुख्यं प्रकीर्तितम् ।
कलौ तत्र नि[10]षिद्धं[11] स्याद्ब्राह्मणानां महेश्वरि ॥ ५० ॥
आत्मार्थं वा परार्थं वा पशून् हत्वा पशुर्भवेत् ।
यावन्ति[12] तस्य रोमाणि तावद्योनिमवाप्नुयात् ॥ ५१ ॥
तस्यानुकल्पा माषाश्च मया प्रोक्तास्ति[13] पार्वति ।
सकलं तु[14] मया प्रोक्तं निष्फलं शृणु पार्वति ॥ ५२ ॥
यथा तद्भावनायां तु न च दोषोऽस्ति पार्वति ।
मणिबन्धादधः पाणिः पादौ गुल्फादधः शिवे ॥ ५३ ॥
मुखं प्रक्षालयेद्देवि चीनस्नानमिदं भवेत् ।
जानुभ्यामवनिं धृत्वा भूमौ मस्तकमानयेत्[15] ॥ ५४ ॥
चीनमार्गे नमस्काराः[16] कीर्तितास्ते मया तव ।
पूर्वक्रमस्य देवेशि शक्रः प्रतिनिधिर्मम ॥ ५५ ॥
स्नानदानादिकं कृत्वा तथा पूजादिकं प्रिये ।
न च स्नानं न[17] मे देहो न च पापं ममास्ति वै ॥५६॥
किं स्नानं कस्य च[18] स्नानमस्नातः कृतभोजनः ।
सर्वमेव हृदम्भोजे मयि[19] सर्वं प्रतिष्ठितम् ॥५७॥

1 U उर्द्ध्वदलं । 2 B omits. । 3 B सुकेशरं; A सकेशरक्षितं; U गुडार्द्रकेशरं । 4 A° मो; D° मं । 5 U नरेभास्थिभिर्भवा । 6 D °भावक । 7 A प्रणव° । 8 U °पन्न° । 9 D सादरं ; 10 U तत्तन्नि° । 11 D तत्रापि सिद्धं । 12 B पार्वति । 13 U यथोक्तश्चापि । 14 B °हुल्प° (क); U °कल्प° । 15 A चरेत् ; D मर्पयेत् । 16 D मार्गेण संस्कारः । 17 B स्नानेन । 18 U वै । 19 D अपि ।

मयि [1]ज्ञात्वा[2] मन्त्रसिद्धिर्मम देवा वरप्रदाः ।
तेजो[3]रूपं जगत्सर्वं तारिणी तत्स्वरूपधृक् ॥५८॥
तत्तेजसा च संस्पर्शं[4] संभाव्य जपमाचरेत् ।
भावनावशमापन्नो भवेद्योगी महाकविः ॥५९॥
गुडार्द्रकरसेनैव सुरा तु ब्राह्मणस्य च ।
तदभावे जलं[5] देवि सम्भाव्य पूजनं चरेत् ॥६०॥
तद्भावहृदयासन्नः[6] सदा तद्गतमानसः ।
द्वन्द्वभावं परित्यज्य सर्वसिद्धीश्वरो भवेत् ॥६१॥
ब्रह्मा चैव वसिष्ठश्च तथान्ये च ऋषीश्वराः ।
निष्कलङ्कमार्गेण भजन्ति सततं शिवे ॥६२॥
ताराभक्ता महेशानि ब्राह्मणा एव कीर्तिता ।
ब्रह्मविद्या महाविद्या सर्वत्र दुर्लभा कलौ ॥६३॥
रहस्यातिरहस्यं च गोप्तव्यं पशुसङ्कटे ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥६४॥

इति श्रीशक्तिसंङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे महाचीनक्रमो नामैकविंशतिः[7] पटलः ।

[1] DU मयि; A मन्त्र° । [2] A °दाता । [3] D भेज° । [4] A स्वस्वदेहे; D स्वस्वनाम । [5] B°ले । [6] U च्छिन्न°; A हृत्प्रसन्नः । [7] B षष्ठाविंशतिः ; D पंचविंशतिः ।

# द्वाविंशतिः पटलः ।

**श्रीदेव्युवाच ।**

गन्धर्वाख्यक्रमं देव कथयस्व मम प्रभो ।

**श्रीशिव उवाच ।**

गन्धर्वाख्यक्रमेणैव सुन्दरी भुवि दुर्लभा ॥ १ ॥

गन्धर्वाख्यक्रमो देवि कथ्यते शृणु साम्प्रतम् ।
भ्रूमध्ये कुङ्कुमं देवि तदन्ते[1] मलयागुरुम् ॥ २ ॥

अष्टगन्धत्रिपुण्ड्रञ्च मध्ये कस्तूरिकान्वितम्[2] ।
सुगन्धश्वेतलौहित्यपुष्पैः सम्भूषितो[3] नरः ॥ ३ ॥

स्वस्तिकाङ्कितदेश[4]स्थो रक्तप्राकारसंयुतः ।
अष्टगन्धस्य धूपेन[5] नानासौगन्धभूषितः ॥ ४ ॥

[6]रक्तमाल्याम्बरधरो मुक्ताहारोपशोभितः ।
पूर्णाभिषेकः शिरसि तेन तत्र न[7] मुण्डनम् ॥ ५ ॥

केशान् संवर्द्धयेद्देवि सौगन्धतैलभूषितः ।
नानासौगन्धभोज्यै[8]श्च राजयोग्यैर्महेश्वरि ॥ ६ ॥

आपो निसर्गतः पूताः किं पुनर्वह्नितापिताः ।
सदा चोष्णो[9]दके स्नायात्तदभावे यथोदकम् ॥ ७ ॥

गृहं चित्रैस्तु संचित्र्यं दर्पणोदरसन्निभम् ।
वितानध्वजभूषाढ्यं घण्टानादोपशोभितम् ॥ ८ ॥

पञ्चवादित्रसंयुक्तं नानावाद्यैः समन्वितम् ।
अति[10]सूक्ष्माम्बरैर्युक्तं स्वर्णपत्रादिरञ्जितम् ॥ ९ ॥

ग्रैवेयवलयाङ्गुल्य[11]भूषितैर्भूषितः सदा ।
नानामधुरभोज्यैश्च दुग्धपाकैरनेककैः ॥१०॥

नानाभोगेन संयुक्तो गन्धर्वाख्यक्रमो भवेत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥११॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्य-
महोग्रतारासंवादे गन्धर्वाख्यक्रमो नाम द्वाविंशतिः[12] पटलः ।

1 D तन्मध्ये । 2 U °नि च; B °मिव । 3 A सम्पूजितो । 4 AD °ह° । 5 B °मेन ।
6 U omits three lines. 7 D °तत्क्रम° । 8 D °वर्यैश्च । 9 A ब्राह्मो° ।
10 B अतः । 11 B °यी गुल्फ°; D याङ्गान्य° । 12 B सप्तविंशतिः ; the colophon is absent in all other MSS.

## त्रयोविंशतिः पटलः।

**श्री देव्युवाच।**

छिन्नमस्ताविधौ देव क्रमं मे ब्रूहि सत्वरम्।

**श्री शिवउवाच।**

दिव्य[1]चीनक्रमेणैव छिन्नमस्ता फलप्रदा ॥ १ ॥
क्रमद्वयं महेशानि पूर्वमेव प्रकाशितम्।
एतस्यास्तिलको देवि भ्रयुग्मे च कु[2]चन्दनम् ॥ २ ॥
तदन्ते[3] रोचनापत्रं[4] त्रिपुण्ड्रं दिव्यवर्णकैः।
श्मशानभस्मबिन्दुस्तु तन्मध्ये दापयेत्प्रिये[5] ॥ ३ ॥
मुखे मुखं प्रदत्त्वा तु सर्वकालं जपेच्छिवे।
विशेषः कथितो देवि शक्तितत्त्वस्य पानकम् ॥ ४ ॥
इति संक्षेपतः प्रोक्तं भैरव्यां शृणु पार्वति[6]।
स्वपुष्पक्रमयोगेन भैरवी भुवि दुर्लभा ॥ ५ ॥
स्वपुष्पाख्यक्रमो देवि कथ्यते शृणु साम्प्रतम्।
तरुणीं सुन्दरीं रम्यां तारुण्यामृतविग्रहाम्[7] ॥ ६ ॥
सदा * * साभिलाषां * * * युक्तमानसाम्।
मन्त्रयंत्र[8]समायुक्तां समानीय महेश्वरी ॥ ७ ॥
* * तां च विधायादौ[9] * * जपं चरेत्।
परस्परावलोकश्च कर्तव्यश्च परस्परम् ॥ ८ ॥
सदा तत्सङ्गिना भाव्यं तद्धस्तरचितं जलम्।
तद्धस्तरचितं भोज्यं तद्धस्तरचितं स्थलम् ॥ ९ ॥
तद्धस्तरचितं पुष्पं देवताभ्यो निवेदयेत्।
स्त्रियो देवाः स्त्रियः प्राणाः स्त्रिय एव हि भूषणम् ॥ १० ॥
स्त्रियः सृष्टिः स्त्रियः सर्गः सर्वं तस्यां प्रतिष्ठितम्।
स्त्रीद्वेषो नैव कर्तव्यो विशेषात्पूजनं स्त्रियः ॥ ११ ॥
तासां प्रहारं कौटिल्यं सर्वथा परिवर्जयेत्।
प्रमादात्कुरुते यस्तु तस्य पातो भविष्यति ॥ १२ ॥
ईदृग्विधां समालोक्य सुन्दरीगेहसंस्थितः।
अविकारी यदा देवि साधनार्हो न चाऽन्यथा ॥ १३ ॥
विकारे भावमाने च[10]साधको नश्यति क्षणात्।
त[11]त्कुण्डं च महेशानि क्षणाद्वि * * भवेत् ॥ १४ ॥
तथापि स्वस्य देहस्य विकारं नहि कारयेत्।
सापि चेद्देवदेवेशि ह्यविकारी यथा भवेत् ॥ १५ ॥

1 U °व्ये। 2 U कुल°। 3 D तत्कुण्डे। 4 AD पात्रं; B यन्त्रं। 5 U °च्छिवे। 6 D भैरवाख्यं शृणु प्रिये। 7 A तारारूपा च विग्रही। 8 B °मन्त्र°; U °तन्त्र°। 9 A नम्रा-म्भोजविधौ तारे। 10 U शापमानेन। 11 U तत्त°।

* * * तदीये विद्यन्ते नाड्यस्तिस्रः प्रधानिकाः[1] ।
अम्भः[2] स्रवति चान्द्रीया[3] पुष्पं स्रवति भानवी ॥ १६ ॥
बीजं स्रवति चाग्नेयी नाड्यो[4] ज्ञेया त्रिधा * * ।
पुष्पिणीमनुना देवि बलात्[5] पुष्पं समानयेत् ॥ १७ ॥
द्राविणीमनुना देवि बलाद्दष्ट्या[6] * * नयेत् ।
उभयं चैव संगृह्य जपं कुर्यान्महेश्वरि ॥ १८ ॥
स्वयमेव भवेत् पुष्पं स्व[7]पुष्पं तेन कीर्तितम् ।
तथा कार्या महेशानि स्थैर्य्य[8]सङ्कारिणीजपात् ॥ १९ ॥
शक्तिश्च साधको देवि दम्पती दुर्लभौ मतौ[9] ।
बगलान्तासु देवेशि कल्पाद्यास्वपि यत्नतः ॥ २० ॥
क्रमोऽयं योज्यतां[10] सम्यक् नात्र कार्या विचारणा ।
कलिदोषवशाद्देवि नायं योगो भविष्यति ॥ २१ ॥
तस्मात्पाशवकल्पेन बालां संसाध्यतां[11] शिवे ।
बालायामुभयाचारो दक्षिणो मुख्य[12] एव हि ॥ २२ ॥
शीघ्रञ्च सिद्धिकामा चेत् गवाक्षयोगमभ्यसेत् ।
यत्र स्त्रीणां समुहोऽस्ति नदीनदसमुद्रके[13] ॥ २३ ॥
यत्र स्नानं प्रकुर्वन्ति गवाक्षं तत्र कारयेत् ।
तानालोक्य प्रयत्नेन जपं कुर्यान्निरन्तरम् ॥ २४ ॥
सर्वाः सम्प्रीणयेद्देवि स्वर्णवस्त्रा[14]दिभिः प्रिये ।
इति संक्षेपतः प्रोक्तं तिलकं शृणु पार्वति ॥ २५ ॥
[15]घुसृणं वामहस्ते तु समानीय प्रयत्नतः ।
शक्तिस्नपनतीरे तु गत्वा यत्नेन पार्वति ॥ २६ ॥
वामहस्ततले यन्त्रं[16] विलिख्य यत्नतः शिवे ।
अवशिष्टेन तिलकं कारयेत्परमेश्वरि ॥ २७ ॥
भाले कस्तूरिकाबिन्दुर्मुनि[17]पत्रं सुचन्दनम् ।
पट्टरञ्जनकं[18] देवि घुसृणेन प्रकार[19]येत् ॥ २८ ॥
तन्मध्ये श्वेतदिव्यं च केशादि[20] पूर्ववद्भवेत् ।
दशविद्याविद्यौ देवि केशवर्द्ध[21]नमीरितम्[22] ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २९ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
छिन्नमस्ताक्रमो नाम त्रयोविंशतिः[23] पटलः ।

---

1 A सिद्धप्रयानिका । 2 D °म्बु; A°न्तः । 3 B सा; U स्यात् । 4 BU °डी । 5 U लता । 6 B °दस्मा° । 7 A ख° । 8 B सोयं; D श्वैरं । 9 AD स्मृतौ । 10 B युज्यते । 11 D °धनां । 12 D वाम । 13 B °द्ध°; A °ह° । 14 AU °रत्ना° । 15 B omits two lines. 16 B म° । 17 D स्नान° । 18 B °वर्धनकं । 19 B °श° । 20 B कणादि । 21 B °न्ध° । 22 U संपुटं । 23 B सप्त°; D षड्°; A पंच° ।

# चतुर्विंशतिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि बगलाक्रमनिर्णयम् ।

**श्रीशिव उवाच ।**

सौभाग्याचीक्रमेणैव[1] बगला शीघ्रदर्शि[2]नी ॥ १ ॥

पीताम्बरधरो मन्त्री पीतभूषणभूषितः ।
पीतमाल्याम्बरधरो पीतगेह[3]समास्थितः ॥ २ ॥

पीतपूजा[4]परः प्रोक्तः पीतान्नप्रीत[5]मानसः ।
पीतद्रव्योपभोगी च पीतासनसमन्वितः ॥ ३ ॥

पीतहोमी पीतपुष्पी पीतशक्तिसमन्वितः ।
रोचनां[6] भुवि संदद्यात् कुङ्कुमं मुनिपत्रकम्[7] ॥ ४ ॥

हरिद्रया त्रिपुण्ड्रं च तन्मध्ये खा[8]दिरं शिवे[9] ।
हरिचन्दनधूपेन धूपितः परमेश्वरि ॥ ५ ॥

सर्वं सर्वं तु सम्पाद्य क्रममार्गरतो[10] भवेत् ।
सृष्टिस्थित्यन्तसंहारैः पूजा च त्रिविधा कलौ ॥ ६ ॥

केवला[11] सृष्टिपूजा[12] स्यात् गर्भकौलागमक्रमात् ।
अर्चनं गौडदेशे तु[13] स्थितिमार्गं कुमारि[14]के ॥ ७ ॥

गुप्तकौलागमन्ना[15]म गौडदेशार्चने विधिः ।
कामरूपागमन्नाम संहारक्रमपूजने[16] ॥ ८ ॥

गौडागमं चावलम्ब्य सांख्यायनमुनिस्तथा ।
उक्तवाना[17]गमे चैव स्थित्यर्चां शृणु पुत्रके [18] ॥ ९ ॥

सर्वाङ्गसुन्दरीं रम्यां सर्वावयवशोभिताम्[19] ।
नवोढ़ां पुष्पिणीं चैव प्रार्थयेद्विप्रकन्यकाम् [20] ॥ १० ॥

कृष्णाष्टम्यां[21] चतुर्दश्यां पौर्ण[22]मास्यां कुमारकः[23] ।
अथवा भौम[24]ऽवारे च निशायां भृगुवासरे ॥ ११ ॥

सुवासितेन तैलेन कुर्यादभ्यञ्जनं तथा ।
तूलिकातल्प[25]मानीय आस्तीर्योदङ्मुखे[26] तदा[27] ॥ १२ ॥

[1] D °ग्यचक्रे येनैव । [2] U °र्शं° । [3] D °हे । [4] A °भूता । [5] U प्रीति°; D पीत° । [6] DU °नं । [7] D °पावकं । [8] U ख° । [9] D °वं । [10] D °चरो । [11] B कैवल्यं; U केरला । [12] U रूपा । [13] B °वस्तु; D °हेतु । [14] U °रि° । [15] U °माना° । [16] BU °नं । [17] U वामा°; D बाञा° । [18] D पात्रक । [19] BU भूषितां । [20] U °कल्पकं । [21] B °र्मा° । [22] B पूर्णि° । [23] U °रिका । [24] B भृगु° । [25] U °कन्या° । [26] U °खं । [27] D °न वा ।

तस्योपरि समास्तीर्य शेवन्तै[1]र्जातिचम्पकैः ।
कर्पूरं चैव कस्तूरीमिश्रितं चन्दनं तथा ॥ १३ ॥
सर्वाङ्गलेपनं कुर्याल्लक्ष्मीसूक्तेन बुद्धिमान् ।
पर्यङ्कोपरि तां कन्यां चन्दनेन विलेपिताम् ॥ १४ ॥
ध्रुवा द्यौरिति मन्त्रेण कन्यां दक्षिणतोमुखीम् ।
उन्मुखीशयनं[2] कुर्यात् श्रीसूक्तेन कुमारकः[3] ॥ १५ ॥
तस्याः * * प्रसार्य्याथ * * नार्चन[4]माचरेत् ।
न्यस्त्वा षोढाद्वयं चैव बगलापञ्चकं न्यसेत् ॥ १६ ॥
कन्यां चैव न्यसेदेवं तत्तदङ्गानि संस्मरन्[5] ।
पादं[6] जपपुरं[7] चैव मार्जयेन्मूलविद्यया ॥ १७ ॥
गन्धद्वारेति मन्त्रेण कुर्यात्कस्तूरिले[8]पनम् ।
मूलमन्त्रेण सम्यक् च पुष्पमालां समर्पयेत् ॥ १८ ॥
निवेद[9]येत् द्रव्यशुद्धिं तत्रैव जपमाचरेत् ।
शतमष्ट[10]सहस्रं च मन्त्रराजमिमं जपेत् ॥ १९ ॥
पुरश्चरणमध्ये च प्रतिमार्गञ्च वासरे[11] ।
अथवा पौर्णमास्याञ्च सौभाग्यार्चनमाचरेत् ॥ २० ॥
प्रयोगसिद्धिदं पुंसां मन्त्रसिद्धिकरं परम् ।
एतत्क्रमं विना देवि प्रयोगो न भवेत्क्वचित् ॥ २१ ॥
तस्मात्सर्वप्रयत्नेन सिद्ध्यर्थं[12] देवि भूतले ।
सौभाग्याख्यक्रमं[13] देवि विना सिद्धिर्न कोटिभिः ॥ २२ ॥
अभिमानाष्टकं त्यक्त्वा त्यक्त्वा वै दूषणत्रयम् ।
त्यक्त्वा पञ्चेन्द्रियासक्तिं सौभाग्यक्रममाचरेत् ॥ २३ ॥
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
शीतोष्णसमतां कृत्वा सौभाग्यक्रममाचरेत् ॥ २४ ॥
षोढाद्वयं च न ज्ञात्वा[14] यः करोत्यर्चनं भुवि ।
पतितः स भवेत्पुंसो रौरवं नरकं व्रजेत् ॥ २५ ॥
बाह्याभ्यन्तरयोर्देवि प्रभेदज्ञानयोर्विना ।
पीतक्रमो न कर्तव्यो देवताशापमाप्नुयात् ॥ २६ ॥
संकल्पं च विकल्पं च त्यक्त्वा विज्ञानमानसः ।
पीतक्रमं ततः कुर्य्यान्नो चेद्भ्रष्टो भवेद्ध्रुवम् ॥ २७ ॥

1 B शाम्भत्रै°; A सम्मतै; U शामन्तै । 2 A तन्मुखावशनं । 3 U °रिका । 4 A °चन्दन° ।
5 U °रत् । 6 U घनं; D पदं । 7 D च पल्लवं । 8 D क्रमविले° । 9 A निर्बन्ध° ।
10 B चाप्यथ । 11 D वाचरेत् । 12 AU °र्थो । 13 A °मिमं । 14 U कृत्वा तु ।

जितेन्द्रियः सुखं कृत्वा कुर्या[1]त्पीतक्रमं शिवे ।
सुखार्थं कुरुते योऽसौ देवताशापमाप्नुयात् ॥ २८ ॥
स्वस्यावेश[2]विधिं चैव न ज्ञात्वा परमेश्वरि ।
यः करोत्यर्चनं देवि स विप्रः पतितो भवेत् ॥ २९ ॥
यस्तु कन्यामनःक्षोभं करोति[3] यजने[4] शिवे ।
भ्रान्तचित्तो भवेत्सद्यो वाचस्पतिरिवापरः ॥ ३० ॥
नोत्पादयेद्वेदनां च मनश्चैव शरीरयोः (?) ।
वेदनां जनयेद्यस्तु स नरः पतितो भवेत् ॥ ३१ ॥
स्वपत्नीं भ्रातृपत्नीं वा गुरुभार्यामथापि वा ।
अर्चयेद्यौवनोपेतां[5] साङ्ख्यायनसमर्पिताम् ॥ ३२ ॥
दीक्षालयस्थां रजकीं कुलालगृहकन्यकाम् ।
पुलिन्दकन्यकां वापि मृदुचूडक[6]मादरात् ॥ ३३ ॥
अर्चयेदृषिपत्नीं[7] च पूर्वोक्तलक्षणैर्युताम् ।
अर्चनं विधिमार्गेण पूजा दुर्वाससोमतम् ॥ ३४ ॥
सर्वलक्षणसंयुक्तां पुष्पिणीमर्चयेच्छिवे ।
मतङ्गमुनिनोक्तं च सद्यः सिद्धिकरं भुवि ॥ ३५ ॥
सिद्धिक्रमोऽयं देवेशि[8] नास्ति सिद्धिर्गुरुं विना ।
तस्मात्सर्वप्रयत्नेन गुर्वाज्ञापरिपालक[9]ः ॥ ३६ ॥
सिद्धो भ[10]वति देवेशि नात्र कार्या विचारणा ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ३७ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे बगलाक्रमो नाम चतुर्विंशतिः पटलः ।

[1] D ज्ञात° । [2] U स्वस्ववेश्या° । [3] B कुरुते । [4] B पूजनं; D जपनं । [5] B °तः ।
[6] B कुण्डामृत°; A °कं दुम्भ । [7] B °पंक्तिं । [8] A सिद्धिकेऽयं जपेद्देवि; D सिद्धिचक्रमिदं देवि ।
[9] U °येत् । [10] B °द्धिर्मं° ।

## पञ्चविंशतिः पटलः ।

**श्रीदेव्युवाच ।**

महाराजक्रमं देव कथयस्व मम प्रभो ।

**श्रीशिव उवाच ।**

महाराज[1]क्रमो देवि कथ्यते शृणु साम्प्रतम् ॥ १ ॥

नानाविचित्रसोपानमण्डिते चित्रमण्डपे[2] ।
सौधाट्टालकसंशोभिवितानध्वजसम्मिते[3] ॥ २ ॥

नानोपवनसंयुक्त[4] हंसमायूरशोभिते ।
नानाचित्रगृहे रम्ये गजवाजिविराजिते ॥ ३ ॥

सर्वतोभद्रसंयुक्ते नानाभरणभूषिते ।
धूपामोदसमायुक्ते चित्रदीपैरलङ्कृते ॥ ४ ॥

रत्नसिंहासने रम्ये रत्नाभरणभूषिते ।
जातिचम्पकपुन्नागकेतकीगन्धशोभिते ॥ ५ ॥

कर्पूरागुरुकस्तूरीरोचनाकुङ्कुमं तथा ।
जटामांसीरसं[5] गन्धसौगन्धगृ[6]हभूषितः ॥ ६ ॥

घण्टानिनादसंयुक्तः सर्वदा शुद्धमानसः ।
आनन्दमग्नहृदयो दिव्यवस्त्रैरलङ्कृतः ॥ ७ ॥

दिव्यमाल्याम्बरधरो दिव्यवस्त्रैरलङ्कृतः ।

ताम्बूलपूर्णवदनो रदच्छ[7]न्दविराजितः ॥ ८ ॥

देवपात्रैर्नृत्यपात्रैर्भोगपात्रैर्निनादिभिः[8] ।
नृत्यगीतैश्च वादित्रैश्चतुर्विंशतिवाचकैः ॥ ९ ॥

सङ्गीतराग[9]तालैश्च ध्वनिभिश्च निनादिभिः[10] ।
नानादेशीयभाषाभिर्गद्यपद्यैरलङ्कृतः ॥ १० ॥

नानाविचित्रभूषाभिर्भूषितः साधकोत्तमः ।
समस्तराजचर्याणां[11] मोहनाद्राजनायिका[12] ॥ ११ ॥

श्रीमहाराजमातङ्गी सर्वदेवप्रमोहिनी ।
तस्यास्तु[13] तिलकं देवि कथ्यते शृणु साम्प्रतम्[14] ॥ १२ ॥

1 A °त° । 2 A °ण्डिते । 3 A °शोभिते । 4 A °क्तं । 5 B वसौ°; AU च सौ° । 6 B ग्र° । 7 U °वृ° । 8 B °तः । 9 D °गीत° । 10 B °दितः । 11 U °भि° । 12 D सर्वेषां मोहनात्मिका । 13 U श्रीरक्त° । 14 DU पार्वति ।

कुचन्दनं भ्रुवोर्मध्येऽगुरुसारस्तदन्तरे[1] ।
कस्तूरिकात्रिपुण्ड्रं च तन्मध्ये केशरं शिवे ॥ १३ ॥
महाराजक्रमो देवि कथितस्तु मया तव[2] ।
अथवा देवदेवेशि स्वयं गानपरो भवेत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ १४ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे महाराजक्रमो नाम पञ्च[3]विंशतिः पटलः ॥

[1] U °के। [2] B °तः। [3] B सप्त°; D अष्ट°।

# षड्विंशतिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।
वद श्री[1]भुवनेशान्याः[2] क्रमं परमदुर्लभम् ॥ १ ॥

**श्रीशिव उवाच ।**

दिव्यभावक्रमेणैव [3]भुवना शीघ्रसिद्धिदा ।
हकारः शिवरूपत्वात् रकारः पापनाशकः ॥ २ ॥

[4]हकारः कामरूपत्वात् मायारूपः[5] प्रकीर्त्तितः ।
ब्रह्माण्डमेतद्देवेशि मायया वेष्टितं भवेत् ॥ ३ ॥

यस्या मायां विना देवि न च किञ्चित्प्रभासते ।
यद्भासारहितं किञ्चिन्न च [6]तद् भासते क्वचित् ॥ ४ ॥

यद्भासासहितं देवि जगदेतत्प्रभासते ।
यां[7] विना तु महेशानि जग[8]ज्जडसमं भवेत् ॥ ५ ॥

गुरुदैवतमन्त्राणा[9]मैक्यं[10] संभावयन्[11] धिया ।
त्रितेजस्त्वेकीकृत्याऽथ तत्र मूर्तिं प्रकल्पयेत् ॥ ६ ॥

साङ्गां सावरणां ध्यात्वा तद्रूपस्तु[12] स्वयं भवेत् ।
गुरुरूपो भवेद्देवी देवीरूपो गुरुः स्मृतः ॥ ७ ॥

मन्त्ररूपो भवेदात्मा चात्मानस्तन्मयो भवेत् ।
एवं क्रमेण देवेशि सदा तद्गतमानसः ॥ ८ ॥

त्रैलोक्यविजयी भूयान्नात्र कार्या विचारणा ।
एतस्यास्तिलकं देवि कथ्यते यत्नतः शृणु ॥ ९ ॥

श्वेतचन्दनबिन्दुस्तु भ्रूमध्ये तु प्रलेपयेत् ।
गन्धसारं तदन्ते स्यात् त्रिपुण्ड्रं दिव्यवर्णतः ।
रक्ताक्षताश्च तन्मध्ये तेन सिद्धीश्वरो भवेत् ॥१०॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे भुवनेश्वरीक्रमो नाम षड्विंशतिः पटलः ।

[1] B त्रि° । [2] D °श्यास्तु । [3] B omits भुवना...रूपत्वात् in the next line. [4] B ई° । [5] ADU तेन । [6] B omits तद्......देवि in the next line. [7] B यं । [8] B ज्ञाप्र° । [9] B °णि; A °न्त्रेण । [10] B एकांशं; A एका । [11] A °ना । [12] D तत्त्वपूर्णः ।

## सप्तविंशतिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि कमलाक्रमनिर्णयम् ।

**श्रीशिव उवाच ।**

भ्रूयुग्मे घुसृणं देवि सिन्दूरं तदनन्तरम् ॥ १ ॥
श्वेतत्रिपुण्ड्रं देवेशि तन्मध्ये केशरं शिवे ।
स्नातः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥ २ ॥
शुक्लभूषणभूषाढ्यस्त्रिसन्ध्यं स्नानमाचरेत् ।
हविष्याशी[1] भूमिशायी मधुरान्नप्रियो नरः ॥ ३ ॥
भृगुवासरतो यत्त[2]द्वितीयं भृगुवासरम् ।
दिनवृद्धिक्रमेणैव कुमारीं पूजयेत्सदा ॥ ४ ॥
द्वितीयभृगुमारभ्य ग्रा[3]सयेद्दिनवृद्धितः ।
प्रत्यहं पूजयेद्देवि नानावादित्रनिःस्वनैः ॥ ५ ॥
दिनषोडशपर्यन्तं प्रत्यहं तु समाचरेत् ।
पुनस्तद्दिनमारभ्य तद्दिनान्तं महेश्वरि ॥ ६ ॥
पूजयेत्प्रयतो नित्यं देवताभावतत्परः ।
प्रदक्षिणा प्रकर्तव्या कलाभावक्रमेण च ॥ ७ ॥
दीपास्तत्र प्रदातव्याः कला[4]वृद्धिक्रमेण च ।
ब्राह्मणान्भोजयेन्नित्यं कलाभावक्रमेण च ॥ ८ ॥
इत्याचारपरः[5] श्रीमान् विश्व[6]रूपो नरो भवेत् ।
राजचिन्हानि[7] सर्वाणि प्रयतः[8] पूजयेत्सदा ॥ ९ ॥
सर्वसाम्राज्यलक्ष्म्यास्तु[9] नाथो भूयान्न संशयः ।
धनदा तस्य गेह[10]स्था राजा च[11] किङ्करो भवेत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ १० ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे कमलाक्रमनिर्णयो नाम सप्तविंशतिः पटलः ।

[1] B °दो । [2] ADU °रपर्यन्तं । [3] D ह्रा° । [4] D काल° । [5] B° धारयते । [6] AD °ष्णु° । [7] D °सिद्धानि । [8] A यत्नतः । [9] B °लक्ष्म्यात्मा । [10] B देव° । [11] B रजकः ।

# अष्टाविंशतिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि धूमावत्याः क्रमं शिव ।

**श्रीशिव उवाच ।**

धूमावत्याः क्रमो[1] देवि कथ्यते श्रृणु पार्वति ॥ १ ॥

भ्रूमध्ये कज्जलं देवि भस्मबिन्दुं तदन्तरे ।
मृ[2]त्रिपुण्ड्रं ललाटे स्याच्छ[3]वभस्म तदन्तरे[4] ॥ २ ॥

कृष्णवस्त्राम्बरधरः कृष्णगन्धवि[5]भूषितः ।
धूमा[6]वस्याम्बरधरो धत्तूर[7]माल्यभूषितः ॥ ३ ॥

गुल[8]धपेन संयुक्तः स्मशानासनसंगतः ।
धूम्रवर्णं जगत्सर्वं मन्त्रं धूम्रमयं भजेत्[9] ॥ ४ ॥

काकपिच्छं चासनं स्यात्[10] दन्ताः कृष्णाः प्र[11]कारयेत् ।
ब्रह्मचारी मिताहारो निर्विकल्पो जितेन्द्रियः ॥ ५ ॥

सत्यवादी मिताहारो भूशायी कुशविष्टरे[12]।
स्नानं त्रिषवणं कुर्यादुच्चाटनपरायणः ॥ ६ ॥

स्वचित्तं[13] काकवत्कृत्वा जगदुच्चाटयेद्ध्रुवम् ।

इत्याचारपरो मर्त्यो धूम्रक्रमगतो भवेत् ।
काकक्रमस्तु गदितः किमन्यच्छ्रोतुमिच्छसि ॥ ७ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
धूमावतीक्रमो नामाष्टाविंशतिः[14] पटलः ।

[1] U °मं । [2] U त° । [3] A च्छै° । [4] B °रं । [5] U तिलक° । [6] B भूमि°; D कृष्ण° । [7] A धुस्तूर°; D रक्त° । [8] B गल°; A गन्ध° । [9] D भवेत् । [10] A यत् । [11] B व्य° । [12] B °री । [13] A °न्हं । [14] A त्रिंशत्तम : ।

# एकोनत्रिंशतिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि ब्रह्ममार्गक्रमं शिवे ।

**श्रीशिव उवाच ।**

नेत्रयोः[1] कज्जलं[2] देयं[3] सिन्दूरेण त्रिपुण्ड्रकम् ॥ १ ॥

हरिद्रा भ्रूयुगे देया श्वेतपत्रं[4] समाचरेत् ।
रक्तबिन्दुश्च तन्मध्ये सर्वदा तद्गतो[5] भवेत् ॥ २ ॥

भोजने शयने रात्रौ * * * सर्वदा जपेत् ।
उच्छिष्टहस्ते देवेशि उच्छिष्टेन बलिं हरेत् ॥ ३ ॥

शक्त्युच्छिष्टं परोच्छिष्टं भुंजानः[6] सार्वकालिकम् ।
जपं कुर्यान्महेशानि रात्रावेव जपं चरेत् ॥ ४ ॥

ताम्बूलभक्षणं कृत्वा ताम्बूलानि च होमयेत् ।
ताम्बूलभक्षी मांसाशी भुक्त्वा शौचं न[7] कारयेत् ॥ ५ ॥

गृहं प्रलिप्य[8] यत्नेन मार्जन्या मार्जनं चरेत् ।
प्रजपेद्यत्नतो देवि नान्यथा सिध्यति ध्रुवम् ॥ ६ ॥

उच्छिष्टहस्ते देवेशि स्वदेहं प्रोक्ष[9]येत्सदा ।
उच्छिष्टहस्तः[10] प्रजपेत् ब्रह्ममार्गः प्रकीर्तितः ॥ ७ ॥

ब्रह्ममार्गक्रमो देवि गदितस्तु[11] मया तव ।
अन्येन क्रमयोगेन सिद्धमार्गक्रमी[12] भवेत् ॥ ८ ॥

सिद्धविद्या प्रसन्ना स्यात्प्रत्यक्षा[13] वर[14]दायिनी ।
सुरेन्द्रोऽपि च दासः स्यान्मनुष्याणां च का कथा ॥ ९ ॥

रहस्यं कथितं भद्रे गोपनीयं स्वयोनिवत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ १० ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे ब्रह्ममार्गक्रमो नाम एकोनत्रिंशतिः पटलः ।

[1] B वेश्यायाः । [2] D कम्बलं । [3] B देवि । [4] D °पात्रं । [5] B तद्रूपो । [6] B भजन् वै; U भुंजन् वै; A भोजनं । [7] A चार्चन । [8] A पुलिन्दं । [9] D °च्छ° । [10] D °स्ते । [11] B °तः स । [12] B °मो । [13] A °क्ष° । [14] B वर्ण° ।

# त्रिंशतिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि क्रममालाविनिर्णयम् ।

**श्रीशिव उवाच ।**

पूर्वोक्तक्रमविद्यानां[1] मालां श्रृणु महेश्वरि ॥ १ ॥

दन्ताख्य[2]माला कथिता[3] महामाला तथैव च ।
छिन्नमस्ताविधौ देवि नरास्थिमालिका तथा[4] ॥ २ ॥

रक्तचन्दनजा माला त्रिपुरायां प्रकीर्तिता ।
स्वयम्भूकुसुमाख्या तु भैरव्यां परिकीर्तिता[5] ॥ ३ ॥

[6]गुञ्जामाला तु मातंग्यां धूम्रायां खरदन्तजा ।
हरिद्राख्या तु वगलामुख्या माला प्रकीर्तिता ॥ ४ ॥

दन्तोत्था नर[7]शङ्खोत्था नारिकेलमयी तथा ।
अनयोर्न हि भेदोऽस्ति शिवशक्त्योर्यथा प्रिये ॥ ५ ॥

मालिका कमलाक्षस्य महालक्ष्म्याः प्रकीर्तिताः ।
भुवनेश्याः स्फाटिकी स्यात्सिद्धविद्याविधौ शिवे ॥ ६ ॥

गुञ्जाख्यमालिका शस्ता तद्विद्याशक्तयः श्रृणु ।
गन्धरूपजातिभेदैर्महाविद्या प्रकीर्तिता ॥ ७ ॥

तत्क्रमं देवदेवेशि श्रृणु यत्नेन साम्प्रतम् ।
रूप[8]गन्धक्रमेणैव नाम दद्यान्महेश्वरि ॥ ८ ॥

मातृपितृकृतं नाम त्यक्त्वा यत्नेन पार्वति ।
स्वयं नाम प्रदद्याद्वै यथायोगेन पार्वति ॥ ९ ॥

या सा प्रथमशक्तिस्तु शुद्धान्तःकरणा[9] द्विजा ।
शुद्धा विमलसद्गात्री[10] दिव्यगन्धा मनोरमा ॥ १० ॥

सा हि स्वप्नवती देवी सर्वसिद्धिप्रदर्शिका ।
या कृष्णा नीलकृष्णाभा मधुपिङ्गललोचना ॥ ११ ॥

साधकाकाक्ांक्ष्यहृदया पुंगन्धा निन्द्य[11]गन्धिका ।
तस्यां काली समायोज्या[12] सा काली[13] परिकीर्तिता ॥ १२ ॥

या स्यात्तृतीया गौरांगी[14] मधुगन्धानुलेपना ।
त्रिपुरा नाम सा देवी स्वपुष्पक्रमसाधिनी[15] ॥ १३ ॥

1 B °विधानेन । 2 D °क्ष° । 3 AB गदिता । 4 D मता; A परा; U च या । 5 D तारादेव्याः प्रकीर्तिता । 6 B omits two lines । 7 U नव° । 8 U एवं । 9 B °णं; A °णैः । 10 A °देहा च । 11 D °त्य° । 12 D °मयो ह्यात्मा । 13 B स कालः; U सकला । 14 B गौरी । 15 D °मानिनी ।

मदगन्धा तु या नारी मदस्खलनमन्थरा
युक्ता चामिष[1]गन्धेन महिषासुरमर्दिनी ॥ १४ ॥

मद्य[2]गन्धा तु या नारी रक्तनेत्रातिनिष्ठुरा ।
महोग्रतारा सम्प्रोक्ता[3] महापाप[4]विनाशिनी ॥ १५ ॥

अश्वगन्धा तु या नारी दीर्घजङ्घा मनोहरा ।
सा स्या[5]च्चकितलोलाक्षी अश्वारूढा वरप्रदा ॥ १६ ॥

आमगन्धा च वदने पू[6]तिगन्धा च सन्धिसु ।
नीलकेशी च सा प्रोक्ता[7] साक्षा[8]द्दुर्गा मदोन्मुखी[9] ॥ १७ ॥

सर्वलक्षणसंयुक्ता नानागन्धसमाकुला ।
सुन्दरी चारुकेशी च दीर्घनेत्रा मनोहरा ॥ १८ ॥

नानाविलासकुशला कुलशास्त्रविचारिणी[10] ।
गुरुवक्षःस्थलाक्रान्ता मध्ये[11] विरलदर्शिनी ॥ १९ ॥

सुन्दरी सा भवेद्गौरी सर्वकार्यप्रवर्तिनी ।
दिव्यवर्णा कृशाङ्गी च दिव्यगन्धानुले[12]पना ॥ २० ॥

भुवनेशी मया प्रोक्ता[13] कमलां शृणु पार्वति ।
चार्वङ्गी चारुनेत्रा च कञ्ज[14]पद्मासनस्थिता ॥ २१ ॥

पीताभरणभूषाङ्गी कमला परिकीर्तिता ।
गुञ्जाहारविभूषाढ्या श्यामचञ्चललोचना ॥ २२ ॥

[15]चारुहासा तु मातङ्गी विद्या ख्याता महेश्वरि ।
पिङ्गनेत्रा पिङ्गकेशा किंचिन्दुश्चातिहासिनी[16] ॥ २३ ॥

धूमावती च सा प्रोक्ता सिद्धविद्यां शृणु प्रिये ।
सर्वदा भोजनासक्ता बहुभोज्याति[17]चञ्चला ॥ २४ ॥

त्रैलोक्यमोहनाकारा सिद्धविद्या प्रकीर्तिता ।
लम्बवक्त्रा च लम्बोष्ठी पीतवर्णाति[18]निश्चला ॥ २५ ॥

बगला सा महेशानि कीर्तिता तव[19] सुव्रते ।
दशविद्या इमाः ख्याताः शक्तिरूपेण पार्वति ॥ २६ ॥

त्रिधा भावं[20] महेशानि मातृस्त्रीभगिनीक्रमात् ।
क्रीडन्ति सततं देवि विद्या एव न संशयः ॥ २७ ॥

[1] A °भिषेक । [2] D °धु°; B °द° । [3] A सा प्रोक्ता । [4] B °माया° । [5] D°श्या° । [6] B भू° । [7] AD चर्चरकेशा च; B वर्णा केशां च । [8] B सास्या° । [9] B महोत्सुकी; D महोन्मुखा । [10] BU °रणं । [11] B °ध्या । [12] B गुरुवक्षःस्थला° । [13] B समायुक्ता । [14] AB केत° । [15] D omits two lines. । [16] B श्चापि हस्तिनो; A स्वतिवासिनी । [17] D हि । [18] A °भि° । [19] B ननु । [20] BU विद्या एव

दशक्रमा महेशानि दशविद्यासु यत्नतः ।
[1]सर्वथा कार[2]येद्देवि नान्यथा युगकोटिभिः ॥ २८ ॥

न हि सिध्यन्ति देवेशि दशपद्मजपेन वै ।
तस्मात्सर्वप्रयत्नेन स्वस्वविद्याक्रमं चरेत् ॥ २९ ॥

स्वयम्भूकुसुमं देवि त्रिविधं कीर्तितं कलौ ।
गौडकाश्मीरमार्गेण षड्विधं तच्च वै भवेत्[3] ॥ ३० ॥

आषोडशा[4]दनूढ़ायाः पुष्पमुत्तममीरितम्[5] ।
[6]बलात्कारेण * *[7] पुष्पं मध्यममीरितम् ॥ ३१ ॥

रजोयोगेन जातायाः कनिष्ठं कीर्तितं प्रिये ।
[8]काश्मीराख्यक्रमे देवि शृणु पुष्पक्रमं च वै ॥ ३२ ॥

आषोडशादभुक्तायाः पुष्पमुत्तममीरितम् ।
बलात्कारेण * * पुष्पं मध्यममीरितम् ॥ ३३ ॥

रजोयोगेन स्वेच्छायाः[9] कनिष्ठं परिकीर्तितम् ।
पुष्पत्रयमिदं प्रोक्तं त्रिषु लोकेषु दुर्लभम् ॥ ३४ ॥

प्रति * * * पुष्पमनङ्गगन्धसंज्ञकम्[10] ।
रहस्यातिरहस्यं च न वक्तव्यं कदाचन ॥ ३५ ॥

गोपनीयं गोपनीयं गोपनीयं पुनः शिवे ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ३६ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
क्रममालाविनिर्णयो नाम त्रिंशतिः पटलः ।

[1] D omits two lines. । [2] B कथ॰ । [3] U ॰मद्य वै श्रृणु । [4] U ॰न्दा॰ । [5] D ऋतुसमन्वितं । [6] D omits three lines. । [7] A कूटायाः; B दुरापायाः । [8] U omits two lines. । [9] D स्वजायायाः । [10] B संस्थितं; A संज्ञितं ।

## एकत्रिंशतिः पटलः ।

श्रीदेव्युवाच ।

दशक्रमाः शक्तयश्च त्वयोक्ताः परमेश्वर ।
तत्क्रमाणां[1] फलं देव कियत्कालेन जायते ॥ १ ॥
तत्सर्वं देवदेवेश पुरा रूपा क्रिया कथम्[2] (?) ।

श्रीशिव उवाच

श्रृणु देवि प्रवक्ष्यामि रहस्यं तव सन्निधौ ॥ २ ॥
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयो रपि ।
नीलसाधनकं कर्म सर्वथा कारयेच्छिवे ॥ ३ ॥
प्रत्यहं क्रियतां देवि तदभावे महाष्टमी ।
सत्ये च[3] दशवर्षेण त्रेतायां हायनेन च ॥ ४ ॥
द्वापरे तद्द्वि[4]मासेन ह्यहोरात्रं कलौ युगे ।
सिद्धिर्भवति देवेशि नीलमार्गे विशेषतः ॥ ५ ॥
सम्पूर्णदिवसं त्यक्त्वा[5] रात्रौ याममपश्चिमम्[6] ।
अंत्य[7]यामं च सन्त्यज्य[8] मध्ययामद्वयं शिवे ॥ ६ ॥
तन्मध्ये तु[9]र्यनाडीषु कालिका वरदा भवेत् ।
सोपानषोडशयुते[10] नानाभूतगणैर्युते ॥ ७ ॥
नवसोपानतन्मध्ये सप्तमेन समाकुले ।
तत्र[11] स्थिता महाकाली परिवारगणैः सह ॥ ८ ॥
साधकाकांक्ष्यहृदया वन्हिवे[12]तालसंयुता ।
श्रीमतोत्तरतंत्रोक्त[13]कवचावरणैर्युता ॥ ९ ॥
कलावस्थैः[14] समायुक्ता स्वयं याति ततः परम् ।
महानील[15]क्रमे देवि सङ्ख्यां श्रृणु महेश्वरि ॥ १० ॥
सत्ये[16] विंशतिवर्षेण त्रेतायां हायनद्वये ।
द्वापरे मासषट्कैस्तु कलौ मासद्वयोत्तरम् ॥ ११ ॥
अनेनैव क्रमेणैव छिन्नमस्ताविधिः स्मृता ।
ए[17]तावद्धि विशेषोऽस्ति शक्तिसङ्गः सदा स्मृतः ॥ १२ ॥
गन्धर्वाख्यक्रमे संख्यां श्रृणु यत्नेन पार्वति ।
शतं विंशतिदिग्वेदसप्तमारभ्य पार्वति ॥ १३ ॥

[1] B °णि । [2] A °था° । [3] A सत्यैव । [4] U तत्त्व°; B तच्च; D पूर्ण° । [5] A कृत्वा ।
[6] A समन्वितं; D मयाचितं; U मथादिमं । [7] D आद्य° । [8] DU त्का । [9] U सू° ।
[10] A नवसोपानसंयुक्ते; D सोपानषोडशोक्तेन । [11] D उप° । [12] A बहिर्व° । [13] B प्रोक्तं ।
[14] D °द्वास्थैः । [15] D °काल° । [16] B सप्त° । [17] B स ।

वीरसाधनकं कर्म चतुर्मन्त्रैः[1] समाचरेत् ।
स्वपुष्पाख्यक्रमे सङ्ख्यां शृणु यत्नेन पार्वति ॥ १४ ॥
[2]ऋषिवेदवन्हियामयोगमार्गेण सिद्ध्यति ।
महाचीनक्रमे सङ्ख्यां शृणु यत्नेन पार्वति ॥ १५ ॥
षट्त्रिंशद्दशवेदाख्यषट्त्रिंशद्दिवसैः शिवे ।
सत्यादिकलिपर्यन्तं महाराजक्रमं शृणु[3] ॥ १६ ॥
अशीतिषष्टिषड्विंश[4]सप्तवर्षक्रमेण च ।
सत्यादिकलिपर्यन्तं ब्रह्मभावक्रमं शृणु ॥ १७ ॥
सहस्रं शतकन्यूनं[5] षष्टिवर्षेण पार्वति ।
कलार्चनक्रमे देवि सङ्ख्यां शृणु प्रयत्नतः ॥ १८ ॥
सहस्रं षट्शतं वेद[6]शतं षोडशहायनम् ।
सत्यक्रमाच्च कल्यन्तं[7] धूम्रभावं शृणु प्रिये ॥ १९ ॥
दिक्सहस्रं षट्सहस्रं सहस्रं पञ्चविंशतिः ।
ब्रह्मभावे महेशानि कलौ च वत्सर[8]त्रयम् ॥ २० ॥
दशवर्षं मासषट्कं देवता वरदा भवेत् ।
प्रत्यक्षदर्शने देवि संख्या प्रोक्ता मया तव ॥ २१ ॥
सिद्धमन्त्रे महेशानि पूर्वयोगेन सिध्यति ।
पूर्वक्रमो महेशानि मन्त्रमात्रे प्रकीर्तितः ॥ २२ ॥
पूर्वक्रमेण देवेशि दुष्टमन्त्रोऽपि सिध्यति ।
रहस्यातिरहस्यं च गोपनीयं स्वयोनिवत् ॥ २३ ॥
गोपनात् सिद्धिमाप्नोति नात्र कार्या विचारणा ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २४ ॥

इति श्रीशक्तिसङ्गमतन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे क्रमफलकथनं नामैकत्रिंशतिः पटलः ।

[1] B न्त्रै°; A °न्त्रेण । [2] A omits this line. । [3] A ° मेण च । [4] U त्रिंशत ।
[5] AU °दिक्न्यून । [6] U देवि । [7] B °ल्पान्त । [8] A कलाबद्धदश°; B कलात्रृद्धिदश ।

## द्वात्रिंशतिः पटलः ।

श्रीदेव्युवाच ।

पूर्वं संसूचितं ना[1]थ मुद्रासङ्केतकं तथा ।
किं त्वया गोपितं स्वामिन् कथयस्व ममाधुना ॥ १ ॥

श्रीशिव उवाच ।

रहस्यातिरहस्यं च सारात् सारतरं[2] शिवे ।
कथयामि तव प्रीत्या रहस्यं गोपयेत्[3] प्रिये ॥ २ ॥
केरलश्चैव काश्मीरो गौडश्चैव[4] तृतीयकः ।
सम्प्रदायत्रयं प्रोक्तं[5] प्रत्येकं विविधं भवेत् ॥ ३ ॥
शुद्धगुप्तोग्र[6]भेदेन नवधा परिकीर्तितम् ।
दिव्यसिद्धमानवौघो दक्षिणामूर्तिशङ्करः ॥ ४ ॥
आनन्दभैरवः कालश्चाति[7]कालक्रमेण च ।
आनन्दभैरवमते पञ्चाशीतिगुरुक्रमः ॥ ५ ॥
दक्षिणामूर्तिसमत्या[8] भेदत्रितयमेव च ।
दशविद्याक्रमेणैव दश भेदाः पुरोदिताः ॥ ६ ॥
परतो[9] शिवनिर्वाणं षट्शाम्भवक्रमेण च ।
कादिहादिक्रमेणैव रश्मिपुंशक्तिभेदतः ॥ ७ ॥
षट्सहस्रं वेद[10]शतं चतुःषष्टिः प्रकीर्तितः ।
प्रकृतौ विद्यमानायां विकृतिर्न बलीयसी ॥ ८ ॥
सम्प्रदायत्रयं देवि प्रकृतिस्थानगोचरम् ।
तत्त्वमुद्रा म[11]काराख्या भेदेन त्रितयं भवेत् ॥ ९ ॥
दुग्धं वृन्ताककं[12] देवि सूरणं दुग्धमांसकम्[13] ।
कुमारी पञ्चपञ्चत्वमक्षरान्ते प्रकीर्तितम् ॥ १० ॥
* * * * सम्पूज्य न विकारं समाचरेत् ।
बालायां तरुणायां च बालां सम्पूज्य पञ्चमम् ॥ ११ ॥
मद्यं मांसं तथा मत्स्यं मुद्रां मैथुनमेव च ।
मकारपञ्चकं प्रोक्तं देवताप्रीतिकारकम् ॥ १२ ॥
गुडार्द्रकरसो देवि मुद्रा तु प्रथमा म[14]ता ।
पिण्या[15]कं लवणं देवि द्वितीया परिकीर्तिता ॥ १३ ॥
लशुनं[16] तित्ति[17]ड़ी चैव तृतीया परिकीर्तिता ।
सूर्यमण्डलसंकाशा चन्द्रमण्डलसन्निभा ॥ १४ ॥

[1] B वा° । [2] B °परं । [3] B रहस्याति यथा; रहस्याति मम । [4] ADU °डाख्यस्तु । [5] B शाक्तं । [6] D गुप्तप्र° । [7] D महा° । [8] B संपत्या; A °पन्ना । [9] D परात । [10] U भेद° । [11] D °ह्य° । [12] A वेदाष्टक । [13] D आसव । [14] AU स्मृ° । [15] D °न्ना° । [16] D अम्बल । [17] D °न्ति° ।

गोधूममाषसम्भूता सुन्दरी[1] च[2] चतुर्थिका ।
शक्त्यालापः[3] पञ्चमी[4] स्यात्पञ्चमुद्राः प्रकीर्तिताः ॥ १५ ॥

श्रीदेव्युवाच ।

मुद्रा नाम तु किं जातं तत्त्वं किन्नामकं भवेत् ।
मकाराः किंस्वरूपाश्च[5] सर्वं कथय शङ्कर ॥ १६ ॥

श्रीशिव उवाच ।

रहस्यं कथ्यते देवि शृणु यत्नेन साम्प्रतम् ।
महादेव्या[6] यथा प्रोक्तं तद्रूपं ब्रूयते[7] यथा ॥ १७ ॥

तद्रूपधारणान्मुद्रा तद्रूपाद्विकृतिर्भवेत् ।
विना मार्गं महेशानि गतिश्चैव कथं भवेत् ॥ १८ ॥

मार्गप्रदर्शनाद्देवि गतिः सर्वत्र दृश्यते ।
तन्मार्गदर्शनार्थं हि[8] मकाराः पञ्च कीर्तिताः ॥ १९ ॥

ज्ञात्वा फलमवा[9]प्नोति नात्र कार्या विचारणा[10] ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ २० ॥

एते पञ्च म[11]काराश्च पञ्च नामप्रका[12]रकाः ।
आत्मविद्या शिवा सर्वा पूर्णेति पञ्चमं विदुः ॥ २१ ॥

पञ्च तत्त्वानि देवेशि केरले कीर्तितानि च ।
पञ्च[13]मुद्रानामधरा[14]स्त्यानन्दो वच्मि संशृणु ॥ २२ ॥

ब्राह्मी च वैष्णवी रौद्री ईश्वरी श्रीः सदाशिवा ।
पञ्च मुद्राः समाख्यातास्तत्त्वना[15]मधराः शिवे ॥ २३ ॥

सन्तर्प्य कुण्डलीं शक्तिः पञ्च मुद्राविधानतः ।
अलिना पिशितं मीनं मुद्रा मैथुनमुत्तमम् ॥ २४ ॥

मकारपञ्चकं यत्र तत्र देवी[16] न संशयः ।
न मद्यं माधवीमद्यं मद्यं शक्तिरसोद्भवम् ॥ २५ ॥

सुसुम्ना शङ्खिनी मुद्रा उन्मन्यनुत्तमं रसः[17] ।
सामरस्यामृतोल्लासं मैथुनं च सदाशिवम् ॥ २६ ॥

महाकुण्डलिनी शक्तिस्तद्योगार्थं महेश्वरि ।
शक्तिः प्रोक्ता महेशानि न भोगार्थं मयेरिता ॥ २७ ॥

[1] U °रा । [2] D मुद्रा तु या । [3] B शंसालापः ; शक्त्यालयः । [4] B °मः ; U °मं । [5] AD °पाः स्युः । [6] D °देवो । [7] U क्रियते । [8] B °नान्नाथ । [9] D °मथा° । [10] After this U inserts three lines given below:— व्रीहीयं मंडलाकारं चन्द्रबिंबनिभं शुभं । चारूपक्कमनोहारि शर्करा‌द्यैः प्रपूरितं ॥ पूजाकाले च देवीनां मुद्रैषा परिकीर्तिता । [11] A प्र° । [12] B °चा° । [13] U एवं । [14] D °धुना । [15] D °स्तत्तन्ना°; U तत्र ना° । [16] B °वो । [17] B omits; A पुनः ।

कुण्डलीसामरस्यार्थं स्वयम्भूलिङ्गमीरितम् ।
एतदभ्यासयोगेन कुण्डलीरसवान् भवेत् ॥ २८ ॥

**श्रीदेव्युवाच ।**

कुण्डली कीदृशी देव तद्रसः कीदृशो भवेत् ।

**श्रीशिव उवाच ।**

अवाच्यं[1] यद्गवेद्वच्मि[2] तद्रसस्तु यथा भवेत् ॥ २९ ॥
तथा समरसानन्दरसः सङ्कीर्तितो मया ।
अज्ञानादपि देवेशि भोगवासनयाऽपि च ॥ ३० ॥
फलं संसारजं देवि गर्भरूपेण जाग्रति[3] ।
ज्ञात्वा[4] फलमवाप्नोति त्रैलोक्यविजयी भवेत् ॥ ३१ ॥
तस्मात्तु पञ्चमी मुद्रा कीर्तिता तु मया तव ।
संयोगामृतयोगेन कुण्डल्युत्थानकारणात्[5] ॥ ३२ ॥
चा[6]न्द्रपात्रे[7] यदा याति तन्मद्यं परिकीर्तितम् ।
मणिपूरे दशदले सुषुम्नायां यदा गतिः[8] ॥ ३३ ॥
तत्करामृतयोगाद्धि[9] द्वितीया परिकीर्तिता ।
हृत्पद्मद्वादशारे तु शंखिनी कूर्मसंस्थिता ॥ ३४ ॥
सुधासागरक्रीडायां मत्स्यस्तत्र प्रकीर्तितः ।
मुद्रा तृतीया गदिता चतुर्थी षोडशच्छदे[10] ॥ ३५ ॥
चन्द्रसूर्याग्निसंभिन्ना वर्तुला बिन्दुगर्भिता ।
भग[11]ध्वजाख्यचणकै[12]र्घटिता[13] तु चतुर्थिका ॥ ३६ ॥
पञ्च[14]मुद्रा मया प्रोक्ता मोक्ष[15]भावफलाप्तये ।
मकारपञ्चकेनैव ज्ञानमेतस्य जायते ॥ ३७ ॥
मकार[16]रूपमार्गो हि कीर्तितस्ते मया तव ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ३८ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे मुद्रासङ्केतकं नाम द्वात्रिंशतिः[17] पटलः ।

[1] U अगम्यं; B °च्य । [2] U दृब्रह्म । [3] U °यते । [4] U °नात् । [5] U कारयेत् ।
[6] U च° । [7] A पत्रे । [8] A गच्छति । [9] U संयोगः । [10] A °शाब्दका; U °शे दले ।
[11] B मग° । [12] B वर्णाङ्कै° । [13] B छोटिका; A घण्टिका । [14] U एवं । [15] B मुख्य° ।
[16] B कारण° । [17] D पंचत्रिंशत् ।

## त्रयस्त्रिंशतिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि पूर्वोक्तं च रहस्यकम् ।

**श्रीशिव उवाच ।**

पञ्चमुद्राख्यसङ्केते[1] मुख्यसङ्केतकं शृणु ॥ १ ॥
पानं पञ्चविधं प्रोक्तं महादिव्या[2]दिभेदतः ।
महादिव्यं तथा दिव्यं वीरश्चैव महापशुः ॥ २ ॥

पशुबन्धः[3] पशुश्चेति पञ्चधा परिकीर्तितम् ।
प्राणापानौ समाहारौ प्रत्याहारो[4] मनःस्थिरम् ॥ ३ ॥

भानुमण्डलकं भित्वा इन्दुमण्डलमध्यगम्[5] ।
सुषुम्नावर्त्मनि नित्यं[6] सुधाधाराप[7]कर्षिणी[8] ॥ ४ ॥

दिव्यपानमिदं प्रोक्तं सर्वसिद्धिकरं परम् ।
महादिव्यमिदं[9] प्रोक्तं शृणु दिव्यं महेश्वरि ॥ ५ ॥

दिव्यं देव्यग्रतः पानमुत्तमं[10] वीरपानकम् ।
त्यक्तसर्वाशयोन्मूलवासनामल[11]संचयः ॥ ६ ॥

कौलिकाचारयोगेन पञ्चतत्त्वेन तर्पयेत् ।
षट्चक्रक्रमभेदेन[12] हुनेद्द्रव्यं[13]समन्त्रकम् ॥ ७ ॥
ध्यानार्चनपरावस्था वीरपान[14]मनुत्तमम् ।
उद्वासनोत्तरं देवि वीरपानं तदुच्यते ॥ ८ ॥

वीरपानं द्विधा प्रोक्तं पशुपानं शृणु प्रिये ।
वीरपाने पूर्ववीरः परस्तु पशुरित्यपि ॥ ९ ॥
आसक्तलोलुपो दम्भो मन्त्रार्थे त्व[15]प्रसङ्गतः ।
कामुकः कामनिर्देशः पशुपानं तदुच्यते ॥ १० ॥
सर्वैः कुलीनैः स्थित्वा तु विना पूजां सुगर्वितैः[16] ।
यत्पानं क्रियते देवि पशुपानं तदुच्यते ॥ ११ ॥
अन्योऽपि शृणु देवेशि पशुपानक्रमं शिवे ।
एकाकी मद्यपानी य एकाकी शक्तिभुक् प्रिये ॥ १२ ॥
[17]माहेश्वरस्य संसर्गं न कदापि करोति चेत् ।
पशुपानमिदं प्रोक्तं महादारिद्र्यदायकम् ॥ १३ ॥

[1] D °तं । [2] U विद्या° । [3] D °न्ध्या° । [4] U °रं । [5] A °गे । [6] A लिङ्गं ।
[7] D °त्म°; A व्र° । [8] U °प्रनर्षिणी । [9] A °करं । [10] AU मुद्रा सा । [11] D °नाम° ।
[12] A °घोरेण । [13] D मलद्रव्यं । [14] B °त्र° । [15] B °ऽत्र । [16] U °र्हितैः ।
[17] D omits three lines.

विना मन्त्रं विना दीक्षां विना गुरुमुखात्प्रिये ।
यत्पानं क्रियते मुर्खैः[1] पशुपानं विदुर्बुधाः ॥ १४ ॥

पशुस्तु त्रिविधः प्रोक्तः पूर्वेण सह भैरवे ।
एकाकी पाननिरतः पशुरित्यभिधीयते ॥ १५ ॥

दी[2]क्षितो निन्दको यस्तु द्वितीयः परिकीर्तितः
अदीक्षितः क्रियाहीनो मन्त्रतन्त्रविवर्जितः ॥ १६ ॥

महापशुरिति प्रोक्तः कौलवामौ[3] शृणु प्रिये ।
वामे रामा रतियुता[4] बलिपात्रं तु दक्षिणे ॥ १७ ॥

पानपात्रं[5] महेशानि वामहस्तेन तर्पकः[6] ।
महाकौलो महेशानि भूमौ संस्थाप्य तर्पयेत्[7] ॥ १८ ॥

हस्तद्वयेन चेद्देवि कौल इत्यभिधियते ।
वामदक्षव्यत्ययेन वीरकौलः प्रकीर्तितः ॥ १९ ॥

अलि[8]पात्रं वामपाणौ दक्षहस्तेन तर्पयेत् ।
वाम[9]गौडस्तु सम्प्रोक्तश्चैतन्याख्यः[10] स एव[11] हि ॥ २० ॥

भूमौ स्थाप्य महेशानि हस्तयुग्मेन तर्पयेत् ।
आनन्दाख्यस्तु सम्प्रोक्तो वाम इत्यभिधीयते ॥ २१ ॥

पूजायां देवदेवेशि केरले दक्षह[12]स्ततः[13] ।
गौडे वामकरेणैव पूजां च तर्पयामि च ॥ २२ ॥

तर्पयामि[14] पूजयामि नमश्चैव[15] त्रिभागशः ।
आदौ मध्ये तथा चान्ते भिन्नं भिन्नं च वा प्रिये ॥ २३ ॥

दक्षेणैव[16] महेशानि केवलं पूजयामि च ।
तर्पयामि ततः प्रोच्य हृदाद्यन्तं[17] समुच्चरेत् ॥ २४ ॥

एतेऽत्र सम्प्रदायाश्च[18] मया प्रोक्ता महेश्वरि ।
सिद्धचैतन्यनामा च विलासाख्यस्ततः परम् ॥ २५ ॥

सत्यचैतन्यनामा च सिद्धाख्यश्च तदुत्तरम्[19] ।
चैतन्यादि[20] विलासी तु[21] सिद्धप्रज्ञाभिधस्ततः ॥ २६ ॥

[22]सिद्धप्रज्ञाभिधश्चैव दिव्यानन्दाभिधस्ततः ।
सिद्धबोधानन्दसंज्ञो दिव्यचैतन्यसंज्ञिकः ॥ २७ ॥

[1] A सर्वैः । [2] A र° । [3] U °लागमौ । [4] B युवा; A पूर्वे; D पुरा । [5] B °त्री । [6] D °णं । [7] B प्रतापयेत् । [8] B अक्षि°; D बलि° । [9] D काम° । [10] D कालाख्य° । [11] A सदा वरः । [12] B संहरं । [13] U °के । [14] BU omit. [15] U adds तर्पयामि; D कुर्याद्दे वि । [16] A दक्षिणे च । [17] U °यान्तं; A °मन्त्रं । [18] A °त्र । [19] B °र । [20] B D °धा । [21] U °सान्ते; D च । [22] B omits this line.

सिद्धबोधस्ततः प्रोक्तो दिव्यचैतन्यसंज्ञिकः ।
दिव्यप्रज्ञाननाथाख्यो दिव्याद्वैतश्च शाश्वती[1] ॥ २८ ॥
शाम्भवाद्वैत[2]नामा च मेधा[3]द्वैताभिध[4]स्ततः ।
एते षोडश संप्रोक्ताः केवलं तर्पणक्रमात् ॥ २९ ॥
अन्ये भेदा विस्तरेण रहस्ये परिकीर्तिताः ।
गोपनीयं गोपनीयं स्वयोनिरपरा यथा ।
इति संक्षेपतः प्रोक्तो मुद्रासङ्केत उत्तमः ॥ ३० ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारा-
संवादे पानसङ्केतकं नाम त्रयस्त्रिंशतिः[5] पटलः ।

[1] U द्वैतसरस्वती; D श्वेतसरस्वती । [2] A सोमवुद्धेन । [3] B भेदा । [4] A °विधि°; B °विध । [5] D ष त्रिंशत ।

# चतुस्त्रिंशतिः पटलः।

श्रीदेव्युवाच।

विश्वेश श्रोतुमिच्छामि लतासङ्केतमुत्तमम्।

श्रीशिव उवाच।

लतासङ्केतकं देवि शृणु यत्नेन साम्प्रतम्॥ १॥
मेधादीक्षां विना देवि न लतासा[1]धनं भवेत्।
कादिहादिकला नाम[2] लता प्रोक्ता मया तव॥ २॥
बालादि[3] शाम्भवान्तं च मेधापूर्वं प्रकाशिता।
श्रीस्पर्शकालीमारभ्य गुह्याम्बान्तं[4] महेश्वरि॥ ३॥
मेधादीक्षा महेशानि कादिहादिमतेऽपि च।
सर्वसाम्राज्यमेधा तु द्वयोर्योगे भवेत् प्रिये॥ ४॥
मणिपूराद्बिलान्तं च बालामारभ्य योजयेत्।
[5]मणिपूराद्बिलान्तं च स्पर्शमारभ्य योजयेत्॥ ५॥
अथवा देवदेवेशि संहारसृष्टिमार्गतः।
सृष्टिः कादिर्यदा[6] देवि हादिः संहृतिगोचरा॥ ६॥
हादिः सृष्टिस्तदा काली संहारान्तं[7] क्रमाद् भवेत्।
प[8]रादि सर्वातीतान्तं[9] ब्रह्म चारभ्य पार्वति॥ ७॥
शान्त्यतीतान्तगं ज्ञात्वा[10] शिवशक्त्या प्रबोध[11]येत्।
अथवा वर्णवेधेन[12] केवलां वेधरूपिणीम्[13]॥ ८॥
चक्षुष्मतः समारभ्य साम्राज्यान्तं[14] समाचरेत्।
मेधादीक्षायुतानां च न च मुण्डनमीरितम्॥ ९॥
केशान् संवर्द्धयेद्देवि सर्वदा तैललेपनम्।
न श्मश्रून् कृन्तयेद्देवि यावद्वेधः प्रदृश्यते[15]॥ १०॥
वाग्वेधः श्रुतिवेधश्च दृष्टि[16]वेधस्तृतीयकः।
स्पर्शवेधश्चतुर्थः स्यात्क्रिया[17]वेधस्तु पञ्चमः॥ ११॥
अनुक्रमेण देवेशि जायन्ते साधन[18]क्रमात्।
ब्रह्माण्डगोलके या च या काचिज्जगतीतले॥ १२॥
समस्ताः सिद्धयस्तस्य साधकस्य पुरः स्थिताः।
यस्य वीक्षणमात्रेण जायन्ते साधन[19]क्रमात्॥ १३॥

[1] A °शो°। [2] B वाम; A विधानाय। [3] A °क्षि°। [4] B °न्वितां; A °तीतां; U चान्तं। [5] A U omit this line. [6] D मता। [7] B °री तत्। [8] A ध°। [9] B च। [10] A गता; D शाम्भवाष्टासु संज्ञात्वा°। [11] U °वर्ध°। [12] D मेधेन; A भेदेन। [13] U बाह्यरूपिणीं; D वेदरूपिणा; A वेधतारिणीं। [14] D °ज्येति। [15] B °दर्श्यते। [16] U दर्शि°। [17] D कृपा°। [18] B °धनाः। [19] D °नं।

स्वयमायाति पुरतो जयादीनां[1] च का कथा ।
निर्दे[2]शवर्तिनो भूत्वा[3] वर्तन्ते चेटका इव[4] ॥ १४ ॥

मनोरथमयी[5] सिद्धिस्तस्य दासी सदा भवेत् ।
अणिमा खेचरी वीक्षा[6] गुटि[7]का कामरूपिता ॥ १५ ॥

धातुवादश्च वेताला यक्षिण्यश्चिरजीविता[8] ।
परकायप्रवेशादि चराचरपुरी गतिः ॥ १६ ॥

षष्टिसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ।
षट्कर्माणि महेशानि वी[9]क्षया सम्भवन्ति च ॥ १७ ॥

यावद्विभूमिका भूयात्तावत्कुर्यान्निरन्तरम् ।
यदैव[10] भूमिका जाता तदागन्धर्वमार्गतः ॥ १८ ॥

गन्धर्वमार्गा[11]द्देवेशि शिव एव न संशयः ।
साम्राज्यमेधायुक्तो हि लतासाधन[12]माचरेत् ॥ १९ ॥

अन्यथा कुरुते यस्तु तस्य पातो भविष्यति ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २० ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
लतासङ्केतकं नाम चतुस्त्रिंशतिः[13] पटलः ।

[1] B °नि । [2] B °दे° । [3] D दृष्ट्वा । [4] A च तथाकरोत् ; D चाज्ञयाथ वा; B चेष्टकारकाः ।
[5] B °स्यापि । [6] U दीक्षा; D विद्या । [7] B °ण्ड° । [8] B विग्रहाः । [9] AB दी° ।
[10] A °द्दैव° । [11] U मार्गो; A °भोगं । [12] D °मौषल° । [13] D सप्तत्रिंशत् ।

# पंचत्रिंशतिः पटलः ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि लतारूपमथादरात् ।

श्रीशिव उवाच ।

लतारूपं महेशानि पूर्व[1]मेव मयेरितम्[2] ॥ १ ॥
सामान्यतः प्रवक्ष्यामि सावधानमना भव ।
तरुणीं तु सुलावण्यां[3] सुन्दरीं चारुहासिनीम्[4] ॥ २ ॥
चंचलां क[5]ञ्जनेत्राञ्च षोडशाब्दामपुष्पिताम्[6] ।
कटाक्षताडिनीं रामां[7] सुगन्धां तनु[8]मोहिनीम् ॥ ३ ॥
ईदृग्विधां समालोक्य सदा तत्सङ्गमाचरेत् ।
तस्याः * * *[9] कार्यमविकारेण चेतसा ॥ ४ ॥
नारीं नि[10]वीक्ष्य यत्नेन अविकारी नरो यदि ।
विकारे जायमाने तु साधको नश्यति ध्रुवम् ॥ ५ ॥
सर्वदा तु निवीक्ष्यैनां तद्योगं शृणु सत्वरम् ।
चरणान्मूलपर्यन्तं पीत्वा पीत्वा पुनः पिवेत् ॥ ६ ॥
तस्या नखशिखा[11]ज्योत्स्नाखण्डितान्तस्तमो[12] भवेत् ।
[13]कमठी कर्पराकारा प्रपदाञ्चितशोभया ॥ ७ ॥
स्निग्धान्तःकरणो वीरो निर्विकल्पः सदा भवेत् ।
सुवृत्तजानुना चारु[14] जङ्घोरुजवनाश्रयैः ॥ ८ ॥
नाभौ रोमावली वक्षःस्थलैः पीनपयोधरौ ।
ग्रीवानयनपर्यन्तं केशाग्रैः प्रवरस्थितैः ॥ ९ ॥
यावन्मधुमदापूर्णो[15] निस्सीमैर्भावलोकितैः ।
स्निग्धेन्द्रियश्च सन्तुष्टश्चतुर्वर्गसमन्वितः ॥ १० ॥
निवृत्तिकाले च पुनर्भावपूर्णामृतैर्निजम् ।
मुखं बिन्दुवदा[16]कारं समारभ्य महेश्वरि ॥ ११ ॥
साधकोत्तम इत्युक्तः श्लोकानां च चतुष्टयम् ।
ध्यात्वा स्पृष्ट्वाऽथवा दृष्ट्वा एतत्कामकलान्वितः ॥ १२ ॥
क्षणं तत्र विमृश्यैत[17]ज्जायते भावसञ्चयः ।
कुलेषु[18] तत्कलारूपमङ्गले परिवर्त्य[19] च ॥ १३ ॥

[1] B सर्व° । [2] A प्रकीर्त्तितं । [3] D समानीय । [4] D °लोचनां । [5] A कु°; D ख° । [6] U °र्णी । [7] A तारिणीं रम्यां; D दाडिमीव.सां । [8] D शुभ । [9] U संचुबनं । [10] A तारिणीं; U तां नारीं । [11] D °शशि° । [12] U °तस्तु तमो । [13] This is the reading of D; others are unintelligible. । [14] B सुवृत्तं चारु वा जानु । [15] U घूर्णो । [16] A °श° । [17] A °श्ये तु; U °शेत्तु । [18] D कालं च । [19] AU °चिन्त्य ।

कुले स[1]ञ्जायते यत्नात्कथं तत्कथयामि ते[2] ।
कुले साक्षाद्यतस्तत्त्वं स्वयं चिन्तिततत्त्वतः ॥ १४ ॥
तेन तत्कुलशास्त्रज्ञैः पूजनीयं प्रयत्नतः ।
कुलदेवी चात्मदेवी निश्चला यस्य वर्तते ॥ १५ ॥
स धन्यः पुरुषो लोके निश्चलोदय एव सः ।
यत्कुले कुलदीक्षा तु तस्मात्साऽपि[3] स एव हि ॥ १६ ॥
अदीक्षितकुलासङ्गात्सिद्धिहानिः प्रजायते ।
तत्कथाश्रवणं चेत्स्यात्तत्तल्प[4]गमनं यदि ॥ १७ ॥
स कुलीनः कथं देवि स कथं मम पूजकः ।
गन्धरूपानुरूपेण नाम कुर्यान्निजेच्छया ॥ १८ ॥
मातृपितृकृतं नाम वर्जनीयं प्रयत्नतः ।
परयोषाधिका ज्ञेया निजस्त्री प्रीतिवर्धनी ॥ १९ ॥
आगते स्वागतं कुर्याल्ली[5]लायोगान्निजेच्छया ।
तस्मादुत्थाय[6] हस्ताग्रे धृत्वा संवे[7]शयेत्ततः[8] ॥ २० ॥
वामभागे समासीनां सुवर्णां कामरूपिणीम् ।
ध्यात्वा कामकलां तत्र बिन्द्वादिपूर्णविग्रहः[9] ॥ २१ ॥
के[10]शविन्यासतिलकहारकेयूरयावकम् ।
सर्वकलाविधानादौ कुलद्रव्याणि योजयेत् ॥ २२ ॥
हेतुयुक्तं सताम्बूलं दत्त्वा भुक्त्वा तु साधकः ।
पश्येत्[11] कुलपथं[12] तस्या लौकिकालौकिकादिकम्[13] ॥ २३ ॥
स्वयं[14] चोद्भवपुष्पाणि कीर्तितानि कुलादिषु ।
न करोति कुलाभिज्ञः[15] शिवो[16]ऽपि नश्यति ध्रुवम् ॥ २४ ॥
दृष्ट्वा दोषादिकं तत्र[17] स्नेहादपि न शिक्षयेत्[18] ।
भाषयेन्न कटूक्तया वै कृते तु निष्फलं भवेत् ॥ २५ ॥
कुलशास्त्ररहस्यं तु कुलमूलं यतः प्रिये ।
वरं कुलमत[19]त्यागो वरं कुलगुरोरपि ॥ २६ ॥
न त्यागं पापं[20] स्वकुलं दृष्टदोषादपि प्रिये ।
कुलवृक्षस्थितः सोऽहं[21] स्वकुलं पोषयाम्यहम् ॥ २७ ॥
तेन सर्वप्रयत्नेन र[22]क्षणीयञ्च यत्नतः ।
स्वकुले कुलबाहुल्यं यदि स्याद्भाग्ययोगतः ॥ २८ ॥

[1] U कुलीनो; A कुलीशे । [2] A परंपरामिते । [3] A तन्मायापि; D पापी; U पापिष्ठ । [4] AU °कल्पे । [5] D त्नी° । [6] B °त्य । [7] D सानु° । [8] U °न्नरः । [9] D °हाम् । [10] U वे° । [11] B पक्षे । [12] B कथां; DU कथं; । [13] B °कीं; D °कां । [14] B मया । [15] U °दीक्षः । [16] A शेषो° । [17] A यत्र । [18] U शिष्यते । [19] D शत° । [20] U °योगं । [21] D °ता सा हि । [22] U दी° ।

स[1]मरूपं विधातव्यं वैपरीत्यं त्यजेद्बुधः[2] ।
पृथक् ध्यानं पृथक् स्थानं पृथक् पूजा पृथक् स्तुतिः ॥ २९ ॥
न कर्तव्या प्रयत्नेन किमेतैर्बहुजल्पितैः ।
कुले तिष्ठामि[3] देवेशि नात्र कार्या विचारणा ॥ ३० ॥
तासां विश्वासघातेन तद्देशश्चैव नश्यति ।
प्रमोदादमृताख्यानं[4] मम स्यान्नात्र संशयः ॥ ३१ ॥
कुलजाहं महायुद्धे[5] वीरास्फालनिनादिनी ।
न दोष[6]मात्र[7]मिच्छामि पातयामि यतो जगत् ॥ ३२ ॥
सौन्दर्यपतिविद्वेषः कटूक्तिः कलहादिकम् ।
नीचानां गमनं[9] चैव न वै तत्र वसाम्यहम् ॥ ३३ ॥
ब्रह्माण्डभाण्डसम्भेदात्तेन जीवेत्स सिद्धियुक् ।
विना कुलेन संसिद्धिर्न कुत्रापि प्रविद्यते[10] ॥ ३४ ॥
कुलालापानुसन्धायी कुलरूपं विचिंत्य च[11] ।
विहरेद्दिवसे चैव रात्रावाकृष्टितत्परः ॥ ३५ ॥
आनीय योषितः सर्वाः जात्यष्टकसमुद्भवाः ।
गंधानुक्रमणा[12]देव नाम कुर्यान्महेश्वरि ॥ ३६ ॥
एकजातिभवा वापि[13] स्वरूपं[14] पूर्वमीरितम् ।
तन्मन्त्रं[15] तत्र संयोज्य[16] तेनैव पूजनं चरेत् ॥ ३७ ॥
शुद्धपुष्पैश्च नैवेद्यैर्लवणैर्मधुसंयुतैः ।
पूजयित्वा यथापूर्वं साधयेन्निजसाधनम् ॥ ३८ ॥
तत्पुष्पेणैव नैवेद्यैस्तां कालीं परिपूजयेत् ।
त्रिपुरानामिकां देवि[17] रक्त[18]पुष्पेण पूजयेत् ॥ ३९ ॥
गुणैः पूर्वोदितैर्युक्ता नाना वा एक[19]जातयः ।
रूपगन्धसमायुक्ता नामतः पूर्वमीरितम् ॥ ४० ॥
एवं[20] कृत्वा तु बहुधा दृष्टादृष्टविभेदतः[21] ।
विशेषो ह्यत्र[22] देवेशि[23] किमन्यद्बहुजल्पितैः ॥ ४१ ॥
माययाच्छाद्य आत्मानं निजस्त्रीरूपधारिणी ।
आगत्य * * * देवि तेनैव दृश्यते[24] ध्रुवम् ॥ ४२ ॥
तस्मात्स्वदेशेनैवैतत् कर्तव्यं सिद्धिकांक्षया ।
किं वा[25] कामविलोपार्थं यतितव्यं सुरेश्वरि ॥ ४३ ॥

1 D म° । 2 U विपरींत जपेद्बुधः । 3 AU °ष्ठति । 4 A प्रभेदादमृतस्थानं । 5 B महे पद्मं; U महावीरं; D महापाद्य° । 6 A तद्दोष° । 7 B °मत्र । 8 B पृच्छामि; U पश्यामि । 9 B नात् । 10 A सिद्धेन कुत्रापि प्रभविष्यति । 11 U विचिन्तयेत् । 12 A गोधास्तु कमला । 13 U चापि । 14 A संशय; D स स्वयं । 15 D तन्मात्रं । 16 A सन्धार्य । 17 U °म देवेशि । 18 D गन्ध° । 19 U °चारैक° । 20 A देवं । 21 A दृष्टभेदेन । 22 U नात्र । 23 D विशेषोऽत्र महेशानि । 24 A नश्यति । 25 D क्रिया ।

कर्मदण्डं समादाय शिवसाम्यं विधाय च ।
तद्गात्रं[1] चक्र[2]सूत्रेण वेष्टनं सप्तधा कृते[3] ॥ ४४ ॥
पाशस्त्वं सर्वभूतानां रक्षणाय स्वयम्भुवा ।
निर्मितोऽसि महाभाग दृढबन्धं विधीयताम् ॥ ४५ ॥
एवमामन्त्र्य तत्सूत्रं शिवाङ्गं[4] सर्प[5]वेष्टितम् ।
जपेद्दर्शां[6]शमासाद्य स्वीय[7]मन्त्रं ततो जपेत् ॥ ४६ ॥
संहारस्वप्रबोधिन्या[8] पु[9]टितं प्रणवत्रयम् ।
सुप्त[10]मन्त्रः समाख्यातः श्वापदः सर्वजन्तुषु ॥ ४७ ॥
एवं कृत्वा स्वयं देवो महेशाधिक एव च ।
कुले[11] यदि स्याद्योगस्य चापल्यः स्मरलोलुपः ॥ ४८ ॥
तदा रक्षा[12] विधातव्या न कार्या कर्हिचिद्बुधैः ।
वरांगे शृणु मद्वाक्यमावयोः शुभहेतुकम् ॥ ४९ ॥
एत[13]त्कार्यं समासाद्य कर्तव्यं तव चेष्टितम् ।
एवमुक्त्वा निजं कार्यं विधाय साधकोत्तमैः ॥ ५० ॥
प्रवर्तनं[14] न कर्तव्यं[15] कुलयोगं महेश्वरि ।
वीरपत्नी वीरकन्या वीरांगनवरांगना[16] ॥ ५१ ॥
नाकृष्य साधकैः कार्यं यावत्स्यान्मनसः स्थिति ।
मनःक्षोभे तत्र जाते मूलयोगेन यत्फलम् ॥ ५२ ॥
तत्फलं जायते[17] देवि सत्यं सत्यं न चान्यथा ।
वीरपत्नी तु परमा स्वयमेव महेश्वरी ॥ ५३ ॥
सा स्मृता कुलविद्यानामाद्या[18] चैव पुरातनी ।
तद्वधूः परमेशानि सर्वमन्त्रप्रबोधिनी ॥ ५४ ॥
न्यायतोऽन्यायतो वापि गुरुपत्नी गुरुर्यदि ।
वीक्षणादेव देवेशि सर्वार्थसाधको भवेत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ५५ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे लतारूपकथनं[19] नाम पञ्चत्रिंशतिः[20] पटलः ।

1 A °द्राज्यं । 2 U रक्त° । 3 A °तं । 4 U सर्वाङ्गे । 5 A °ङ्गालय°; U सर्व°; D पर° । 6 A °दर्शी; D एवं क्रमेण । 7 B स्वयं° । 8 D प्रवरो धन्या । 9 B घु° । 10 A तत्त्व°; U स्वप्न° । 11 U °लं । 12 A तत्र दीक्षा । 13 D तत्त° । 14 AU न वक्तव्यं । 15 U वक्तव्यं । 16 A यवनाङ्गना । 17 B जपतो । 18 A मेधा; U मया । 19 B लतासामान्यसङ्केतकं । 20 D अष्टत्रिंशत् ।

## षट्त्रिंशतिः पटलः ।

**श्रीदेव्युवाच**

शङ्कर श्रीमहादेव निशापूजां वद प्रभो ।

**श्रीशिव उवाच**

निशापूजा प्रकर्तव्या हेतुयुक्तः[1] सदैव हि ॥ १ ॥
निजं कुलं समादाय स्वयं भैरवरूपधृक् ।
कुलं च भैरवीरूपं तद्गात्रे न्यासविस्तरम् ॥ २ ॥
विन्यस्य सकल[2]न्यासं नवयोन्यात्मकं तथा ।
प्रसूनतुलिकामध्ये पुष्प[3]प्रकरसङ्कुले ॥ ३ ॥
नानागन्धसमाकीर्णे कुलद्रव्येण यन्त्र[4]कम् ।
लिखित्वा पूजयेच्छङ्के घटस्थापनपूर्वकम् ॥ ४ ॥
स्ववामभागे षट्कोणं तन्मध्ये ब्रह्मरन्ध्रकम् ।
लिखित्वा तत्र कुम्भं च सौवर्णं राजतं तथा ॥ ५ ॥
ताम्रभूमिमयं वापि यद्वा लोहविवर्जितम्[5] ।
स्थापयेत्कलया[6] देवि कुम्भं गन्धसुवासितम् ॥ ६ ॥
हेतुद्रव्यं ब्राह्मणादिभेदतः परिपूजयेत् ।
तत्र मन्त्रं विलिख्यादौ यद्यत्कुलसमुद्भवम् ॥ ७ ॥
ध्यात्वेष्टदेवतां तत्र जपेदष्टोत्तरं शतम् ।
धेनुमुद्रां प्रदर्श्याथ [7]अमृतं तद्विचिन्तयेत् ॥ ८ ॥
दृष्ट्वार्घ्यपात्रं नृत्यन्ति भैरवा मातरो गणाः ।
इन्द्रादयः सुराः सर्वे नृत्यन्ति मधुलोलुपाः ॥ ९ ॥
ब्रह्मविष्णुमहेशाद्या नृत्यन्ति हर्षतत्पराः ।
अर्घ्यभाण्डं द्विधा कृत्वा गुरवे चैकभागकम् ॥ १० ॥
एकं गुरुं समादाय[8] एकेन देवतर्पणम् ।
पीत्वा कुलरसं देवि नानालङ्कारभूषितः ॥ ११ ॥
साक्षाद्यदि गुरुर्न स्या[9]त्तदा तोये विसर्जयेत् ।
आनन्दरूपवान् भूत्वा पूजयेत्परमेश्वरीम् ॥ १२ ॥
स्वस्वकल्पोक्तविधिना तत्तद्यन्त्रे प्रपूजयेत् ।
विसर्जनं विधायाथ मन्त्रं वै प्रजपेत्ततः ॥ १३ ॥
तद्धि स्वरममानेन अमृतं भुज्यते मया ।
तच्चकोररसास्वादैः सम्यक् रसः प्रजायते ॥ १४ ॥

[1] A °मुक्तः । [2] D अबला° । [3] A मध्य° । [4] A पत्र° । [5] D विगजितं । [6] U °शो° ।
[7] U त्व° । [8] B एवं समादाय दत्वा । [9] A समासाद्य गुरुं तस्मात् ।

तत्फलग्रहणादेव सुमेरोः श्टङ्गरोहणम् ।
लतालिङ्गनमात्रेण सुधाधौतकलेवरः ॥ १५ ॥
मूल[1]योगे कृते तत्र जपेदश[2]सहस्रकम् ।
जप[3]पूतं हविर्द्रव्यं गृहीत्वा तर्पयेत्ततः ॥ १६ ॥
विधाय तर्पणं देवि प्रदक्षिणमनुव्रजन् ।
प्रणम्य स्तुत्वा कल्पोक्तस्तवेन तोषये[4]त्ततः ॥ १७ ॥
तस्मात्कुलं तथा योग्यं कृत्वा यत्नेन सञ्जपेत् ।
कुलं शक्तिः समाख्याता तस्याः पूजादि कथ्यते[5] १८ ॥
कुलाचारः स विज्ञेयो देवानामपि दुर्लभः ।
कुलीनो जायते यस्मात्तत्कथं[6] कथयामि ते ॥ १९ ॥
कुले साक्षाद्यतस्तत्त्वं[7] स्वयं तिष्ठति तत्त्वतः[8] ।
मद्यं मांसं तथा मत्स्यं मुद्रां मैथुनमेव च ॥ २० ॥
एभिरेव[9] कृता पूजा कुलाचारः प्रकीर्त्तितः[10] ।
तेन तत्कुलशास्त्रज्ञैः पूजनीयः प्रयत्नतः ॥ २१ ॥
कुलं चात्मकुलं वापि[11] निश्चलं यस्य वर्तते ।
स धन्यः स च[12] विज्ञानी कुलरूपः स एव च ॥ २२ ॥
कुलदीक्षा यत्कुले स्यात्स शिवः परिकीर्तितः ।
यथा काली तथा तारा यथा श्रीभैरवी तथा ॥ २३ ॥
समपूजादिकं सर्वं प्रयोगं भावलक्षणम् ।
वेदशास्त्रपुराणानि स्पष्टा[13] वेश्याङ्गना इव ॥ २४ ॥
इयं तु शाम्भवी विद्या गुप्ता कुलवधूरिव ।
सुगुप्तं कौलिकाचारमनुगृह्णन्ति देवताः ॥ २५ ॥
वाञ्छासिद्धिं प्रयच्छन्ति[14] नाशयन्ति प्रकाशने ।
[15]अनाचारान्मधुपान् चक्रस्थान् शक्तिकौलिकान् ॥ २६ ॥
[16]शिवगौरीधिया[17] देवि भावयेन्नावमानयेत् ।
कुलाचार[18]गृहं गत्वा भक्त्या पापविशुद्धये ॥ २७ ॥
याचयेदमृतं चान्नं[19] तदभावे जलं पिबेत् ।
कुलाचारेण यद्द्रव्यं सर्वं दत्तं तु[20] भक्तितः ॥ २८ ॥
नमस्कृत्य तु गृह्णीयादन्यथा नरकं व्रजेत् ।
पूर्वोक्तं देवदेवेशि न सिद्धं स्यात्त्रियं विना ॥ २९ ॥

[1] B शुल्° । [2] AU °दष्ट° । [3] U °ल° । [4] D °नाभाषये° । [5] U °कं च यत् ।
[6] D °था । [7] B °त्त्वे । [8] D कालीकृतं शिवे । [9] B °वमेव । [10] B °चाराय कीर्त्तिता ।
[11] AU कुलं कुलं चान्यकुलं; D कुलं काली । [12] A सर्वं° । [13] B स्पृष्टा° । [14] B °च्छेति ।
[15] B omits this line. [16] B adds before this : शक्तिं कौलिकमाचारमनुगृह्णन्ति देवताः ।
[17] U श्रिया । [18] B कुलवार° । [19] B पात्रं । [20] B सर्वदा जन्तु° ।

स्त्रीसमीप[1]प्रदेशो[2] हि कामरूपाधिकस्तव ।

**श्रीदेव्युवाच ।**

पुरश्चरणलक्षैर्वा होमानामपि कोटिभिः ॥ ३० ॥
कोटिहोम[3]दक्षिणाभिस्तस्मात्पूजनविस्तरैः ।
न च सिद्धिं समायाति वनितासन्निधिं विना ॥ ३१ ॥
वनितासु सदा नाथ निवसामि निरन्तरम् ।
वाराणसी कामरूपं जालन्धरमथापि वा[4] ॥ ३२ ॥
अथवान्यानि पीठानि[5] शाम्भवा[6]ख्यानि शङ्कर ।
षट्चक्रं षोडशाधारं त्रितयं व्योमपञ्चकम् ॥ ३३ ॥
कुलचक्रे महादेव सर्वं नित्यं प्रतिष्ठति ।
इतोऽपि किं महत्पुण्यं वक्तुं शक्नोमि शङ्कर ॥ ३४ ॥
कदाचिद्वनिता वापि वनिता वत सन्निधिम् ।
विग्रहे नैव[7] शक्नोमि[8] देही देहं यथा प्रभो ॥ ३५ ॥
यादृशी तादृशी वापि व्याधिदारिद्र्यपीडिता ।
विरूपा वा सुरूपा वा वनिता मम विग्रहा ॥ ३६ ॥
मयि स्याद्या[9]दृशी भक्तिः साधकानां निरन्तरम् ।
नून[10]मेतादृशी कुर्याद्योषिन्मात्रेऽपि साधकः ॥ ३७ ॥
या नारी रूपसम्पन्ना सुदृशा[11] गन्धशालिनी ।
मम तस्याः परिज्ञेया शेषा तु शक्तिरीश्वरी ॥ ३८ ॥
बालां वा यौवनोन्मत्तां वृद्धां वा सुन्दरीं तथा ।
कुत्सितां वा महादुष्टां नमस्कृत्य विभावयेत् ॥ ३९ ॥
सर्वावस्थासु देवेशि योषिद्वन्द्या तु[12] साधकैः ।
समस्तमन्त्रसिद्धीनां[13] सर्वस्वरूपमङ्गला[14] ॥ ४० ॥
साक्षाद्वा मनसा वापि नारी पूज्यैव दर्शनात् ।
कदा च न कटूक्त्या तु सम्भाव्या[15] वनिता जनैः ॥ ४१ ॥
स्त्रियो देवाः स्त्रियः प्राणाः स्त्रिय एव हि भूषणम् ।
तद्वस्तरचितं भोज्यं तद्वस्तरचितं जलम् ॥ ४२ ॥
तद्वस्तरचितं पुष्पं देवताभ्यो निवेदयेत् ।
तत्सङ्गिना सदा भाव्यमन्यथा स्वस्त्रियामपि ॥ ४३ ॥
* * देया न[16] कुत्रापि[17] साधकेन वधूः क्वचित् ।
प्रत्यक्षदृष्टदोषेपि स्वस्त्रियो वा परस्त्रियः ॥ ४४ ॥

[1] A °समय° । [2] D °प्रदा सो°; U °प्रयोगो । [3] D °त्र° । [4] B मयीपि च । [5] B योगानि; A द्रव्यानि । [6] A शोभना° । [7] B °नुव; D न्येत्र । [8] A हानुनैव शक्तो । [9] B °दी° । [10] B मूल° । [11] AU सुद्दता; D देदीता । [12] A दुद्धात° । [13] D °द्धानां । [14] D सर्वेभ्यो रूपमङ्गना । [15] D मन्तव्या । [16] U दद्यान्न । [17] U कुत्सेया ।

सकृदपि न वक्तव्यो[1] निन्दये[2]न्मनसापि न ।
पूर्ववद्व्यवहर्तव्या सर्वदा साधकेन सा[3] ॥ ४५ ॥
मम निन्दा मम द्वेषो मम हिंसा ममार्दनः ।
गुरुनिन्दा गुरुद्वेषो गुरुहिंसा तथैव च ॥ ४६ ॥
साधकेन वरं कार्यं वनितां नैव निन्दयेत् ।
वरं पूजां न कुर्वीत वरं बलिं परित्यजेत् ॥ ४७ ॥
कुलाचारं कुलद्रव्यं कुलपंक्तिं वरं त्यजेत्[4] ।
तथापि नैव योषाणां निन्दायां मान[5]सं चरेत् ॥ ४८ ॥
किमिहोक्तेन बहुना वरं त्याज्यो भवेन्मनुः ।
तथापि नैव कर्तव्यं वनितानिन्दनादिकम् ॥ ४९ ॥
मातृवत्पूजयेन्नित्यं मातृवद्भावयेत्सदा ।
साधकप्राणदानेन प्रीतिः स्याद्यदि कामिनी ॥ ५० ॥
प्राणान् दत्त्वापि कर्तव्या सु[6]प्रीतिरनपायिनी[7] ।
स्वयं[8] देहं समु[9]त्सृज्य मोक्षमाप्नोति शाश्वतम् ॥ ५१ ॥
स्त्रीद्वेषो नैव कर्तव्यो विशेषात् पूजनं स्त्रियः ।
स्त्रियं गच्छन् स्पृशन् पश्यन् विशेषात्कुलजां शुभाम् ।
नारीं सम्पूजयेन्नित्यमुपभोगं न का[10]रयेत् ॥ ५२ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे निशापूजाकथनं नाम षट्त्रिंशतिः[11] पटलः ।

[1] A कर्त्तव्यो । [2] AU निन्दायै । [3] U °कोत्तमः । [4] AUD °वृत्तिं न संत्यजेत् ।
[5] B °पमानं । [6] B सा; A सं°; D मत्° । [7] D रनुयाचिनी । [8] D मनुजं । [9] A मनुत्° ।
[10] D मका° । [11] D उनचत्वारिंशत् ।

# सप्तत्रिंशतिः पटलः ।

**श्रीशिव उवाच**

शृणु देवि वरारोहे[1] रहस्यं महदद्भुतम् ।
विना पूजां स्त्रियो[2] * * सङ्गमे साधकोत्तमः ॥ १ ॥
सप्तजन्मदरिद्रत्वं[3] नरके कोटिकल्पशः ।
ब्रह्महत्या सुरापानं स्तेयं[4] गुर्वङ्गनागमः ॥ २ ॥
एतत्पापकृतो[5] दोषो[6] जायते नात्र संशयः ।
वीरो[7] वाऽप्यथवा दिव्यो न बुद्धा[8] नरके व्रजेत् ॥ ३ ॥
गुरुपूजाकृतिविधौ[9] विद्योच्चारणकर्म तत् ।
रहस्याख्यं कर्णकूपे[10] दंशनं[11] गण्ड[12] ** ॥ ४ ॥
[13]भूतशुद्धिपरिरम्भो संभावेन्द्रियनिग्रहः ।
प्राणायामस्तवा[14]कृष्टिः न्यासस्तस्याः समाहितः ॥ ५ ॥
परस्परावलोकश्च ध्यानकर्म प्रकीर्तितम् ।
नखदन्त * * दीनि धूपदीपप्रतापनम् ॥ ६ ॥
तत्तत्तत्त्वविशेषाश्च प्रेम[15]मुद्रा प्रकीर्त्तिता ।
पूजनं गायनं स्तुत्यं * * * विसर्जनम् ॥ ७ ॥
इति प्रोक्तं महेशानि रहस्यमपरं[16] शृणु ।
सत्यमेतद्विना * * * सङ्गान्मन्त्रो न[17] सिध्यति ॥ ८ ॥
सङ्ग एव हि कर्तव्यः कर्तव्यं न च * * * ।
पूजनीया सदा योषा मद्भाव[18]कृतनिश्चयः ॥ ९ ॥
तस्यां तु[19] * * * देवि कर्तव्यं मम साधकैः ।
मम भावस्वरूपा सा मत्स्वरूपा महं च[20] सा ॥ १० ॥
यदि[21] न * * देवि सा कथं भवतारिता[22] ।
[23]भरता दृढपापेन[24] सदृशो जायते नरः ॥ ११ ॥
मद्भाव[25]प्रतिपन्नापि[26] अधिकारी न[27] * * * ।
यादृशी तु[28] दृढे ज्ञाने मद्भावैकपरायणा ॥ १२ ॥
कदाचित्पतितां वापि कदाचिद्वापि पूतताम्[29] ।
कदाचित् गुरुतां याति कदाचिदपि शिष्यताम्[30] ॥ १३ ॥

[1] D प्रवक्ष्यामि । [2] A °यं । [3] D °द्रः स्यात् । [4] B स्त्रियं । [5] B °तां । [6] D देवि । [7] B बालो । [8] B न वृद्धा । [9] B कृताश्चैव; D हृष्टविधौ । [10] A कर्मजपे; D वर्णरूपे । [11] A आसने । [12] AD नग्न° । [13] D omits three lines. [14] B °स्तु वा° । [15] A प्रेम्ना; D स्व स्व° । [16] D परमं । [17] B °ऽपि । [18] A भद्रा च; D °त्रे । [19] B तस्मात्तु । [20] A महैव । [21] U अनेन । [22] B °ता विना । [23] AU भवता । [24] U दृढोपायेन । [25] A भद्राक्ष° । [26] U यामधि° । [27] U स । [28] B °स्तु; U सु° । [29] D मूढतां । [30] B °ति ।

इदृशं सर्वदा ज्ञानं निश्चयं यस्य योषितः ।
स विष्णुः स शिवः साक्षात् स योग्यः सर्वकर्मसु ॥ १४ ॥

**श्रीदेव्युवाच**

अहं हि जगतां धात्री जननी जन्मकारणम् ।
मद्भावप्रतिपन्ना या[1] साऽहमेव सुनिश्चितम्[2] ॥ १५ ॥
कर्तव्या[3] * * * नैव[4] तस्या मनोविकारणा[5] ।
मोहाद्वा गुरुमौढ्याद्वा[6] यदा यत्कुरुते सुधीः ॥ १६ ॥
वीरो वाऽप्यथवा दिव्यो अबुद्धा[7] नरकं व्रजेत् ।
गुरुपत्नीं द्विजपत्नीं पितृपत्नीं प्रपूजयेत् ॥ १७ ॥
* * * नरकं यावत् तावत्कोटिगुणं भवेत् ।
पापा[8]सम्भवमापन्ना[9] नारी सर्वमयी हि सा ॥ १८ ॥
अहं च रोषसम्पन्ना नाशयामि तमीश्वर[10] ।
छिन्नशिरः शिरा तस्य द्वेषं पश्येद्धिया तपेत् ॥ १९ ॥
मया[11]हतोऽपि पापात्मा प्राप्नोति नरकं महत् ।
अथवाऽपि चिरञ्जीवेन्महादुर्गतिदुर्गतिम् ॥ २० ॥
निरन्तरं रोग[12]पीड़ा जायते तस्य पापिनः ।
कदाचन शिरःपीडा कदाचित्तु[13] गुरुज्वरः ॥ २१ ॥
कदाचित् गात्रसन्तापः कदाचित्कर्णपीड़नम् ।
कदाचिदपि कण्डूः[14] स्यात्कदाचित्तु विचर्चिकाम्[15] ॥ २२ ॥
अनालोक्यं च बाधिर्यं खञ्जता कुब्जता तथा ।
अन्येऽपि विविधा रोगाः कुष्ठाद्याः प्रभवन्ति हि ॥ २३ ॥
चक्षुर्नाशः श्रुतिच्छेदो नासाच्छेद[16]स्तथैव च ।
करच्छेदः पादच्छेदः शिरश्छेदोऽपि जायते ॥ २४ ॥
पशुपीड़ा राजपीडा वह्निपीड़ाऽपि जायते ।
कुलं तस्मात्त दोषेण म्रियते[17] नात्र संशयः ॥ २५ ॥
प्रार्थनामपि कुर्वाणो न लभेदन्नमुष्टिकम् ।
मूलाहारः फलाहारः पत्राहारो जलाशनः ॥ २६ ॥
प्रायशो जायते पीड़ा तपःफलविवर्जितः ।
तस्य स्यादसकृद्बन्धुद्रोहो भृत्याश्च[18] तस्कराः ॥ २७ ॥

1 B °पि । 2 D महेशो वेत्ति निश्चयं; U° श्चलं । 3 U °व्यं । 4 U °नं नैव ।
5 A °मनधिकारणात् । 6 BU °मोहाद्वा । 7 D कृत्वा च । 8 A जाया° । 9 A °मात्रा च ।
10 A स्वयं च ईश्वरो शिवः । 11 U मया; D जाया° । 12 A राज्य° । 13 D त्रिधान्योन्यं ।
14 A चाङ्कु; D वान्तः । 15 A विवर्द्धिनी; D विषूचिकां । 16 D °रोग° । 17 B त्रायते ।
18 D भूयाच्च तत्क्षणात ।

स्वगोत्रकलहो नित्यं स्वगोत्रहिंसनं सदा ।
सुहृद्भिः क्रियते द्वेषो रिपुणा बध्यते स तु[1] ॥ २८ ॥
स्वयोषाऽपि विषं दद्यान्मित्रं वा सेवकोऽथवा ।
औषधं च[2] भवेत्तस्य महाहालाहलं प्रभो ॥ २९ ॥
हितं पथ्यं सुहृद्वाक्यं न कदाचन रोचते ।
हिता न वदनात्तस्य क्वचिद्वाणी बहिर्भवेत् ॥ ३० ॥
चारूक्ता बन्धुजा वाणी[3] विपरीतेव जायते ।
तदाज्ञाकारिणो न स्युः सुहृद्भृत्यादयस्तथा ॥ ३१ ॥
एकादशगृहस्थो हि ग्रहः पीडयते ध्रुवम् ।
अन्यथा सिद्धिमापन्ना मन्त्राः स्युर्हतसिद्धयः ॥ ३२ ॥
एते ते कथिता दोषा योषि * * * सम्भवाः ।
अधिकारविहीनानां अधिकारयुतेन हि ॥ ३३ ॥

ईश्वर उवाच

अधिकारी भवेत्कीदृक् देवेशि भवदर्चने ।
कथं स्यादधिकारश्च प्रागभ्यासप्रवर्तनम् ॥ ३४ ॥
महान्ममैव[4] सन्देहो वर्द्धते जगदीश्वरि ।
तदेव श्रोतुमिच्छामि सन्देहं छेदय प्रिये[5] ॥ ३५ ॥
ममानुग्रहतो देवि तदेतद्वक्तुमर्हसि ।

श्रीदेव्युवाच

शृणु देव प्रवक्ष्यामि गुह्यात् गुह्यतरं महत् ॥ ३६ ॥
गोपितं सर्वतन्त्रेषु न देयं यस्य कस्यचित् ।
अहमेव परं ज्ञानमहमेव परा गतिः ॥ ३७ ॥
अहमेव परं ध्यानमहमेव परा श्रुतिः ।
मत्तः परतरं विश्वे न किञ्चिदवलोकयेत् ॥ ३८ ॥
अहमेव जगत्सर्वं जगदेवाहमीश्वर ।
मद्भावभावितानां हि[6] भवद्वै ता[7]दृशी शिव ॥ ३९ ॥
एवं ज्ञानविशिष्टः स्यादधिकारी भवेच्छिव ।
ब्रह्माविष्णु[8]महे[9]शादिसर्वदेवमयो हि सः ॥ ४० ॥
जायमानस्य बालस्य * * * * ।
सम्पर्केण विकारो हि न यथा जायते क्वचित् ॥ ४१ ॥
साधकस्य तथा यस्य मतिः स्यादविकारिणी[10] ।
सोऽधिकारी भवेन्नित्यं यागादौ सह योषिता[11] ॥ ४२ ॥

[1] D विप्रेणाराध्यते स तु । [2] D लभे° । [3] U °मन्त्रपाठानां । [4] A भैरव । [5] B प्रभो । [6] B नारी । [7] D °च्चेता° । [8] A °दिक° । [9] B °शश्च । [10] U °णा । [11] D °तः ।

मद्भावप्रतिपन्ना या मत्स्वरूपाऽहमेव सा ।
विकारो नहि योषायां तस्यामर्पित[1] एव हि ॥ ४३ ॥

एवं यस्य स्थिता बुद्धिः सो[2]ऽविकारी न संशयः ।
भ्रा[3]तृ * * परित्यज्य सर्वं * * विचारयेत् ॥ ४४ ॥

सङ्गमे साधकश्रेष्ठः शिववत्[4] क्रीडते[5] भुवि ।
प्रथम[6]न्यासकाले तु यावद्धैर्य्यं न जायते ॥ ४५ ॥

तावत्कामविलोपार्थं यतितव्यं प्रयत्नतः ।
कामभावविलोपार्थं सङ्गं कृत्वैव * * * ॥ ४६ ॥

साधयेन्सर्वकार्याणि यावज्ज्ञानं न[7] जायते ।
ततो ज्ञाने समुत्पन्ने स्वच्छन्दं विहरेत् पुमान् ॥ ४७ ॥

एवं कर्तुमशक्तस्तु नाधिकारी कथञ्चन[8] ।
कुर्याज्जपं तथा होमं तर्पणं मार्जनं तथा ॥ ४८ ॥

द्विजानां[9] भोजनं चैव योषित्सङ्गविवर्जितः ।
साधकस्य भवेद्यस्तु यत्स्वरूपेष्टदेवता ॥ ४९ ॥

तद्वर्णसमतेजोभिः पूर्णं भुवनमण्डलम् ।
भावनाभिः स्थिरीकृत्य देवताध्यानतत्परः ॥ ५० ॥

यथास्वरूपवर्णादि चिन्तयेद्यतमानसः ।
एवं यस्य मनो नास्ति तस्य प्रतिनिधिः स्मृतः ॥ ५१ ॥

कुमार्यामेव कर्त्तव्यं न * * * कदाचन ।
यतः स्या * * योग्यामविकाराय कल्प्यते ॥ ५२ ॥

न प्रयोगादिकं [10]क्वापि गृहस्थो निजयोषितः ।
[11]कुमारीभोजनादेव कुमारीपूजनादपि ॥ ५३ ॥

कुमारीचिन्तनादेव त्रैलोक्यविजयी भवेत् ।
इति संक्षेपतः प्रोक्तं गौडानां[12] वीरयोषिताम् ॥ ५४ ॥

**[13]श्रीशिव उवाच**

शृणु यत्नेन देवेशि रहस्यातिरहस्यकम् ।
विना मद्येन मांसेन पुंश्चलीसेवनं विना ॥ ५५ ॥

न मन्त्रसिद्धिमाप्नोति चन्द्रसौरक्रमार्चिते[14] ।
अलिना पूरितं पात्रं बलिना[15] पूरितो अलिः[16] ॥ ५६ ॥

[1] D सा स्यान्माता च । [2] B ज्ञात्वा; A त्व° । [3] A मा° । [4] B शिवं च । [5] A क्रियते । [6] D ° मं । [7] D च । [8] After this B adds the following verse which is not found in other MSS:—कुमारीभोजनादेव कुमारीपूजनादपि । कुमारीचिन्तनादेव त्रैलोक्यविजयी भवेत् । [9] U विप्राणां । [10] A वा° । [11] B omits three lines. [12] AD गोपनं । [13] Omitted in AB. [14] U °न्विते । [15] B वनिता । [16] B मुक्तं ।

अलिं बलिं च रामाञ्च[1] किन्न सिध्यति भूतले ।
विशेषं शृणु देवेशि पूजाप्रकरणं तथा ॥ ५७ ॥

विजया सर्वदा प्रोक्ता ताम्रपात्रे पयस्तथा ।
मधुमिश्रा[2] तु विजया गौड़ब्राह्मणकर्मणि ॥ ५८ ॥

* * * नन्तरं सिद्धिर्मधुपानैर्विशेषतः ।
नृत्यगीतादिभिः सर्वैर्गुरुशुश्रूषणैस्तथा ॥ ५९ ॥

अष्टम्यां च चतुर्दश्यां नवम्यां सङ्क्रमे तथा ।
अमायां देवदेवेशि भौमे शुक्रग्रहत्रये[3] ॥ ६० ॥

काली तारा स्थिता तत्र पूजनाद्वरदायिनी[4] ।
स्व[5]शक्त्या सर्वदा पूज्या[6]नन्तरा[7] पञ्चपर्वणि ॥ ६१ ॥

नो चेन्मांसेन सम्पूज्यानन्तरा वत्सरो यदि ।
अगम्यागमनं चैव तथाऽभक्ष्यस्य भक्षणम् ॥ ६२ ॥

सकृदुच्चारितो मन्त्रो दहत्यग्निरिवेन्धनम् ।
पैष्टी[8] गौड़ी तथा माध्वी तालखर्जूरसम्भवा ॥ ६३ ॥

नारिकेली तथा द्राक्षी पूगी चान्यैरुपस्कृता ।
पैष्टी शूद्रस्य माध्वी च क्षत्रियस्य तथा द्वयम् ॥ ६४ ॥

पैष्ट्यादि सर्वं[9] शूद्रस्य ब्राह्मणस्य न पिष्टजा ।
ब्राह्मणेनैव दातव्या विना माध्वीं कथञ्चन ॥ ६५ ॥

अथान्येषु प्रकारेषु नाधिकारो द्विजन्मनाम् ।
अथवा कुलमद्येन पूजयेत्कुलसुन्दरीम् ॥ ६६ ॥

योगिभिः पीयते मद्यं न मद्यं द्विजपुङ्गवैः ।
न मद्यं पानयोग्यं स्यान्न मद्यं गुडमिश्रितम् ॥ ६७ ॥

अशक्तद्विज[10]जातीनां विधिं शृणु प्रयत्नतः ।
ब्राह्मणस्ताम्रपात्रे तु मधु मद्यं प्रकल्पयेत् ॥ ६८ ॥

अनु[11]कल्पस्त्वशक्तानां नान्यथा पातकी भवेत् ।
नो चेत्सिद्धिकरी[12] देवि प्रजप्तैरपि कोटिभिः ॥ ६९ ॥

[13]पुरश्चरणलक्षैश्च होमानामपि कोटिभिः ।
ताम्बूलेन विना यस्तु कालिकां दशधा जपेत् ॥ ७० ॥

इह[14] क्षोभमवाप्नोति परत्र नरकं व्रजेत् ।
ताम्बूलं * * चक्रञ्च मुण्डमाला शवासनम् ॥ ७१ ॥

[1] U °यै । [2] B °श्री । [3] B ग्रहे जपे । [4] After this B adds इति संक्षेपतः प्रोक्तं नोपरि वीरयोषिति । [5] A स । [6] B °जा । [7] A °रं; D °राय । [8] B पौष्णी; U °पौष्टी । [9] A °संघ°; UD षट् च । [10] U अथवा शक्ति°; D अशक्तेऽप्यथ । [11] U मधु° । [12] U क्वचित् । [13] A omits this line. [14] B ग्रह° ।

सिन्दूरं खड्गकं चैव संविदासवयो रसः ।
एतान्विहाय यः कश्चित्कालीं[1] साधितुमुद्यतः ॥ ७२ ॥
इह क्षोभमवाप्नोति परत्र नरकं व्रजेत् ।
कोट्यर्बुदयुगैर्देवि नहि सिध्यति तारिणी ॥ ७३ ॥
चिन्मयेऽयं[2] निगदिता महाकालाय वै पुरा ।
कालिकामनुजापी तु स्पृशेत्पातकिनं यदि ॥ ७४ ॥
स तु संस्पर्शमात्रेण[3] सर्वसिद्धीश्वरो भवेत् ।
गद्यपद्यमयी वाणी भवेद्रक्षापरम्परा[4] ॥ ७५ ॥
जायते देवदेवेशि काव्यकर्ता क्षणेन तु ।
अतीतानागतं ज्ञानं वर्तमानं च पश्यति ॥ ७६ ॥
तस्मा**मुख्यभूता सर्वसिद्धिप्रदर्शिनी ।
* * चक्रं समालोच्य[5] यत्किञ्चित्कुरुते नरः ॥ ७७ ॥
तत्तदक्षय्यमायाति छिन्नविद्याप्रसादतः ।
कालीं विहाय[6] यः कश्चित् सिद्धिमिच्छति कामुकः[7] ॥ ७८ ॥
स चक्षुषा विना रूपं दर्पणे द्रष्टुमिच्छति ।
शक्तिं विहाय यः कश्चित् कालिकां द्रष्टुमिच्छति ॥ ७९ ॥
स भोजनं विना नूनं क्षुन्निवृत्तिमभीप्सति ।
कालीविद्या सिद्धविद्या महाविद्या प्रकीर्तिता ॥ ८० ॥
इयं विद्या त्रिधा[8] देवि जप्यते स्मर्यतेऽथवा ।
तदैव सिद्धिदा तस्य[9] सा चान्यस्य[10] वरप्रदा[11] ॥ ८१ ॥
तस्याः सकाशान्मन्त्रोऽयं ग्राह्यो यत्नेन पार्वति ।
पाणौ[12] विचिन्त्य[13] जप्तव्यः सिद्धिर्दिवसमात्रतः[14] ॥ ८२ ॥
कृष्णाष्टम्यां चतुर्दश्यां मङ्गले वासरे निशि ।
कृष्णपक्षे[15] विशेषेण कारयेत्सर्वदा गृहे ॥ ८३ ॥
मृदुचूडकयो** कोमले विष्टरेऽपि च ।
एकलिङ्गे शून्यदेशे[16] शून्यगेहे जलार्णवे ॥ ८४ ॥
श्मशाने कुलवृक्षे तु शवमुण्डे[17] रणाजिरे[18] ।
स्वयम्भूकुसुमं वापि अथवा * * जं च वा[19] ॥ ८५ ॥
एतेषु कालिका देवि स्वय तिष्ठति[20] निश्चितम् ।
एतान् स्थानान् शुभान् विद्धि महाकौलवरप्रदान् ॥ ८६ ॥

[1] B °लं । [2] B °हं; U °दं । [3] B श्रोत्रेण । [4] D द्राक्षारसा परा । [5] U °क्य । [6] U adds देवेशि । [7] A कामतः; U omits. [8] B स्त्रिया । [9] A तस्मात् । [10] U सैवान्यस्य । [11] A स्मरणादरात् । [12] A योनौ । [13] B विवीक्ष्य । [14] B °र्देवि समासतः [15] B °वारे । [16] U °न्यागारे; D पुण्यदेशे । [17] AB रविमुण्डे । [18] D वने गिरौ । [19] B जीवया; D त्वचा । [20] A वसति ।

श्मशानं तु समाश्रित्य यः यश्चित्कालिकां जपेत् ।
तस्य काली प्रसन्नाऽस्ति नात्र कार्या विचारणा ॥ ८७ ॥

* * शवे श्मशाने वा कालिकां दशधा जपेत् ।
तस्य काली प्रसन्नाऽस्ति नात्र कार्या विचारणा ॥ ८८ ॥

मुनिदिननरमुण्डं साधनार्हं सुशस्तम्
शशिदिननवमुण्डं[1] दैवतं नोत्तमं च ।

हुतग्रहदिन[2]मुण्डं मालिकाद्येषु शस्तम्
तपनदिनसु[3]मुण्डं मध्यमं कार्यपात्रे ॥ ८९ ॥

हायनायनमासैश्च कलामुत्पत्तिचन्द्रमा (?)।
साध्यादि क्रमतो सायं[4] दिक्पात्रं[5] परमेश्वरि ॥ ९० ॥

एवं सर्वं तु विज्ञाय मुण्डं लक्षणपूर्वकम् ।
साध्यं सिद्धं सुसिद्धं च सुसिद्धेयं[6] तथैव च ॥ ९१ ॥

वीरं च दैवतं[7] दिव्यं क्रमेण परिकीर्तितम् ।
इति संक्षेपतः प्रोक्तं शृण्वेतत्साधनं शुभम् ॥ ९२ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे शक्तिसङ्गमरहस्यकथनं नाम सप्तत्रिंशतिः पटलः ।

[1] A शशिचन्द्रदिनानां च । [2] B निज°; U नर° । [3] U °नृ° । [4] B सेयं । [5] B दिकाद्यं । [6] A °न्ये । [7] A दैवतकं ।

# अष्टात्रिंशतिः पटलः ।

### श्रीशिव उवाच

यः कश्चित् कुरुते वीरसाधनं सुसमाहितः ।
स प्राप्नोति परां सिद्धिं देवैरपि सुदुर्लभाम् ॥ १ ॥
तस्मात् सर्वप्रयत्नेन कर्त्तव्यं सुसमाहितैः ।
मञ्जु[1]घोषे चीन[2]मार्गे स्नाननत्या[3]दिकं शृणु ॥ २ ॥
जानुभ्यामवनीं धृत्वा शिरसा स्पृश्य मेदिनीम् ।
उत्थाय नमनं कुर्य्यात् स्थित्वा वा परमेश्वरि ॥ ३ ॥
एष[4] एव नमस्कारश्छिन्नमस्ताविधौ शिवे ।
मणिबन्धा[5]दधः पाणिः पादौ गुल्फादधः शिवे ॥ ४ ॥
मुखं प्रक्षाल्य मन्त्रेण स्नानं छिन्नाविधौ स्मृतम् ।
साधनायामिदं स्नानं कर्त्तव्यमादिकारणम् ॥ ५ ॥
कथ्यते चैव वेदोक्तं नहि[6] ध्यानमनुत्तमम् ।
भैरवेन पुरा प्रोक्तं सर्वसिद्धिकरं परम्[7] ॥ ६ ॥
तस्मात् सर्वप्रयत्नेन कर्त्तव्या वीरसाधना ।
न स्यात्[8] परतरं किञ्चित् विद्यते शीघ्रसिद्धिदम्[9] ॥ ७ ॥
चितासाधनयोगेन मृतकारोहणेन[10] वा ।
मृदुकोमलयोर्वाऽपि चूडकाचूड़केऽपि वा ॥ ८ ॥
* * त्वचि[11] त्रिमुण्डे वा पञ्चमुण्डेऽथवा प्रिये ।
साधनेयं महेशानि एतेषु परिकीर्तितम् ॥ ९ ॥
श्रीविद्यायां कालिकायां[12] तारिण्यां भैरवी[13]मनौ ।
चण्ड[14]के बगलायाञ्च साधनेयं प्रकीर्तिता ॥ १० ॥
वज्रोदके समारभ्य[15] स्वरक्षान्तं[16] महेश्वरि ।
रुद्रसंख्याऽत्र मनवो मञ्जुघोषे[17]ति पार्वति ॥ ११ ॥
एतज्[18] ज्ञात्वा महेशानि विशेषज्ञानमाचरेत् ।
ज्ञात्वा स्वगुरुवक्त्रात्तु[19] मन्त्राचारकुलक्रमात् ॥ १२ ॥
वीरसाधनमात्रेण सर्वसिद्धिर्भवे[20]द् ध्रुवम् ।
सम्पाद्य सामिषान्नं तु स्वगेहे बलिमाहरेत् ॥ १३ ॥
मधुमांसं गुडमांसं महिषच्छागकुञ्जरैः ।
ततो[21] बलिप्रयोगार्थं पिष्टं पुष्पाद्यनेकधा ॥ १४ ॥

[1] A °न्त्र° । [2] A वीत° । [3] D स्तुत्या° । [4] A क । [5] B °वेधा । [6] A नदी° । [7] D प्रदायकं । [8] BU तस्मात् । [9] A सिद्धिदोऽपि च । [10] A °मेव । [11] B चिन्तां; D त्वक् । [12] B °कापि । [13] U रोचनी । [14] D °ण्डि° । [15] A °साद्य । [16] B °र्थं । [17] A °शेषे° । [18] B °ते । [19] D °चक्रान्ते; B °वक्रान्ते । [20] D °द्धिं लभे° । [21] D एते ।

गोदुग्धसंप्लुतं[1] सर्वं कृत्वा यामोर्द्धतः शिवे ।
सार्धयामोत्तरं देवि परितः सकृदेव[2] च ॥ १५ ॥

शस्त्रपाणिर्निर्भयश्च चितास्थानं विशेषतः ।
अन्यानवे[3]क्षकान् दूरे स्थाप्य निर्भयमानसः ॥ १६ ॥

महावीरोरुचित्तश्च जितक्रोधो जितेन्द्रियः ।
महाबलो दयालुश्च रक्षकोऽयं नरो भवेत् ॥ १७ ॥

चितावरुणदिग्भागे चोपविश्य महेश्वरि ।
प्राङ्मुखोदङ्मुखो वापि यथोक्ताचमनं[4] चरेत् ॥ १८ ॥

दत्त्वा मूलबलिं चादौ श्रीकरालस्य सम्मते ।
ये के चात्र स्थिता देवा राक्षसाश्च भयानकाः ॥ १९ ॥

ते प्रयच्छन्तु मां सिद्धिं ममत्वेनानुकम्पया ।
मन्त्रेणानेन तान् दत्वा षट्पात्रेषु बलिं हरेत्[5] ॥ २० ॥

[6]एकैकेन च संस्थाप्य देयं यत्नेन पार्वति ।
चतुःपात्रं चतुर्द्वारे उदगारभ्य पार्वति ॥ २१ ॥

प्रदक्षिणक्रमेणैव पश्चिमान्तं महेश्वरि ।
बलिं दद्याद्यथोक्तेन दुग्धेनोत्सर्गमाचरेत् ॥ २२ ॥

गोदुग्धेन विशेषेण उत्सर्गं तं समाचरेत् ।
ॐ ह्रीं श्मशानेति जंभायेमं बलिं हरेत् ॥ २३ ॥

[7]गृह्ण गृह्णापयद्वन्द्वं सर्वविघ्ननिवारणम् ।
कृत्वा बलिं प्रयच्छेति द्वन्द्वं स्वाहा तता बलिः ॥ २४ ॥

श्मशानजम्मदेवाय बलिं दत्त्वा प्रयत्नतः ।
ॐ ह्रीं भैरवभयानके[8]ति श्मशानाधिप इत्यपि ॥ २५ ॥

सामिषादिं पूर्ववत्स्यात् स्वाहान्तो बलिरीरितः ।
ॐ हूं स्मशानदेवेति इममित्यादि पूर्ववत् ॥ २६ ॥

ॐ ह्रीं महाकाल श्मशानाधिप इत्यपि ।
इममित्यादि देवेशि पूर्ववत्तु समुच्च[9]रेत् ॥ २७ ॥

ॐ हूं[10] कालपदं प्रोच्य भैरवेति स्मशान वै ।
साधनाधिपमुच्चार्य इममित्यादि पूर्ववत् ॥ २८ ॥

प्रणवं कूर्चबीजं च स्मशानवासिनीति च ।
महाभीमे[11] महाघोर[12] स्वने[13]ति च गृहाण वै ॥ २९ ॥

[1] AU संयुतं । [2] B °दवेक्ष°; D °दपेक्ष° । [3] D °न् च र° । [4] D °क्तगमनं । [5] U साधकेन महेश्वरि । [6] ABD omit this line. [7] A omits two lines. [8] A श्मशानेति । [9] D °द्ध° । [10] D चूँ । [11] D °भये । [12] B कालघोर° । [13] A शते° ।

इमं बलिं मातर्देहि सिद्धिमनुत्तमां[1] वदेत् ।
ह्रीं कालिका वह्निजाया इममित्यादि पूर्ववत् ॥ ३० ॥
महाकालसमीपे तु ततश्छागबलिद्वयम्[2] ।
ततो यथोक्तविधिना दिक्पालेभ्यो बलिं चरेत् ॥ ३१ ॥
स्वस्वविद्याङ्गदेवेभ्यो बलिं दत्त्वा प्रयत्नतः ।
यथोक्तेन विधानेन प्राणायामं समाचरेत् ॥ ३२ ॥
षडङ्गाद्यं पूर्ववत्स्या[3]त्स्वेष्टदेवं विचिन्त्य च ।
अव्यग्रचित्तः प्रजपेन्निर्भयः साधकोत्तमः ॥ ३३ ॥
एकाक्षरे दिक्सहस्रं द्व्यक्षरे वसुसंख्यकम् ।
सहस्रं देवदेवेशि त्र्यक्षरे नियुतार्द्धकम् ॥ ३४ ॥
अष्टोत्तरसहस्रं च महामन्त्रे प्रकीर्तितम् ।
देवता यदि प्रत्यक्षा तदैव जप[4]मुत्सृजेत् ॥ ३५ ॥
देवतापूजनं कृत्वा यदा देहीति भाषते ।
देववाणी तु सा देवि तदा छागबलिं[5] हरेत् ॥ ३६ ॥
तदभावे महेशानि गुडपायसयोर्बलिः ।
वरं गृहीत्वा देवेशि सुखेन विहरेद्भुवि[6] ॥ ३७ ॥
अत्रैव मृतके देवि पञ्चवर्षमिते शिवे ।
इयञ्च साधना कार्या महावीरमतोदिता ॥ ३८ ॥
सार्धयामोत्तरं रात्रौ मृतकस्थल[7]संगतः ।
चतुष्पथे नदीतीरे श्मशाने वापि पार्वति ॥ ३९ ॥
अधोमुखं तु[8] तं कृत्वा तदाऽऽवाहनकृन्मनुः ।
मायाबीजेन यजनं[9] हूंबीजेनोपवेशनम् ॥ ४० ॥
तस्योपरि महेशानि पूर्वोक्तमण्डलाष्टकम्[10] ।
देवीपूजादिकं कृत्वा ततो बल्यादिकं चरेत् ॥ ४१ ॥
नीलक्रमेण कर्तव्यं दिक्सहस्रं जपं चरेत् ।
मन्त्रमात्रे महेशानि जपान्ते देवता वरा ॥ ४२ ॥
प्रत्यक्षे सति देवेशि ततश्छागबलिं हरेत् ।
देहीति भाषेत द्वंद्वं वरं गृह्य द्विधा वदेत् ॥ ४३ ॥
संस्कृतं वक्ति या चाग्रे सा देवी कीर्तिता मया ।
वीरार्गलाघोरयोश्च चक्रपाशुपतौ तथा ॥ ४४ ॥
जयदुर्गान्तं देवेशि पञ्चमन्त्राः प्रकीर्तिताः ।
सिद्ध[11]वीरक्रमो देवि मन्त्रषट्के प्रकीर्तितः ॥ ४५ ॥

[1] D °त्रयं । [2] A बलिं हरेत; U °लिं विमं; B त्वमुं । [3] D भूतशुद्ध्यादिकं कृत्वा । [4] B मन्त्र° । [5] B तच्छागबलिमा° । [6] B °द्विभुः । [7] D स्थान° । [8] B °खातु । [9] AB जपनं । [10] U °युक् । [11] U साध्य°; D सिद्धि° ।

गणेशे क्रूरमन्त्रे च क्रमोऽयं परिकीर्तितः ।
नीलक्रमो[1] वा देवेशि महाचीनक्रमश्च[2] वा ॥ ४६ ॥

गन्धर्वाख्यक्रमो[3] वापि सौभाग्यार्चनकोऽपि वा ।
क्रममेतत्पुरस्कृत्य त्रैलोक्यविजयी भवेत् ॥ ४७ ॥

महानील[5]क्रमे स्नानं मुखं प्रक्षाल्य यत्नतः ।
कण्ठाधः स्नानमासाद्य मस्तके मार्जनं[6] चरेत् ॥ ४८ ॥

वीरस्नानमिदं प्रोक्तं वीराणां सिद्धिदायकम् ।
वीरगुरोर्महाविद्यां प्राप्य कालानल[7]प्रभाम् ॥ ४९ ॥

वीरजापं[8] च देवेशि तेन सिद्धीश्वरो भवेत् ।
दिव्यगुरोर्महाविद्यां कालीं[9] कादम्बरीनिभाम् ॥ ५० ॥

दिवाजापेन सिद्धिः स्यान्नात्र कार्या विचारणा ।
पशुगुरोर्महाविद्यां महाकालाभ्रसन्निभाम् ॥ ५१ ॥

पशुजापेन देवेशि कलौ सिध्यति वा न वा[10] ।
रहस्यातिरहस्यञ्च मयोक्तं गोप्यतां[11] शिवे ।
इति संक्षेपतः प्रोक्तं मालाभेदं शृणु प्रिये ॥ ५२ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे वीरसाधनं नामाष्टात्रिंशतिः[12] पटलः ।

[1] D °मी । [2] D °मी च; U मोऽपि । [3] D °मी । [4] A तोऽपि; B सोऽपि । [5] D °चीन° । [6] D मज्जनं । [7] D कालघन° । [8] U °पे तु । [9] U °ली° । [10] D °न्ति मानवाः । [11] A गोपितं । [12] D एकचत्वारिंशत् ।

## एकोनचत्वारिंशतिः पटलः ।

[1] श्रीदेव्युवाच

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।
मुण्डासन[2]मिदं ब्रूहि यद्यहं तव वल्लभा ॥ १ ॥

श्रीशिव उवाच

रहस्यातिरहस्यं च तव स्नेहात्प्रकाश्यते ।
चन्द्रत्रिपञ्चमुण्डानि वसुरन्ध्राभिधानि च ॥ २ ॥
दशमुण्डानि देवेशि रुद्रमुण्डानि पार्वति ।
दिक्विदिक्क्रमयेगेन कीलान्यारोप्य साधयेत् ॥ ३ ॥
महामुण्डं मध्यभागे[3] परितो मुण्डसञ्चयः ।
कालरात्रिदिने देवि वीररात्रिदिने तथा ॥ ४ ॥
मोहरात्रिदिने देवि शिव[4]रात्रिदिने तथा ।
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ॥ ५ ॥
मुण्डसाधनकं कृत्वा माला[5]पात्रादिकं चरेत् ।
यन्त्रं वा कारयेद्देवि त्रैलोक्याधिपतिर्भवेत् ॥ ६ ॥
[6]अचूडकप्रकारेण वीरासनक्रमेण च ।
मृतासनक्रमेणापि साधयेद्वीरसाधनम्[7] ॥ ७ ॥
मृद्वासनं पूर्वभागे[8] चूडकं दक्षिणे भवेत् ।
कोमलं पश्चिमे प्रोक्तं मुण्डमुत्तरगोचरम् ॥ ८ ॥
वीरासनं मध्यभागे जप्त्वा[9] त्रैलोक्यनायकः ।
एकवीरं त्रिवीरं वा पञ्चाष्टनववीरकम् ॥ ९ ॥
दशवीरं रुद्रवीर[10]मासनाय[11] प्रकल्पयेत् ।
मुण्डपक्षेऽपि देवेशि मध्ये वीरं महोत्तमम् ॥ १० ॥
मृद्वादिमध्ययोगेन साधनाभेदभाजनम् ।
श्मशानं वा[12] चिता शस्ता चास्थिभूम्यासनं तथा ॥ ११ ॥
योनित्वगासनं देवि दशाहमृतकासनम् ।
एवं क्रमेण देवेशि आसनानि बहूनि च ॥ १२ ॥
एषामेकतमं कृत्वा कालीं तारां प्रसाधयेत् ।
एकान्ते शून्य[13]सदने पर्वते विपिने वने ॥ १३ ॥
प्रान्तरे शिवशून्ये च मातृगेहे सरित्तटे ।
एकलिङ्गे शून्यदेशे श्मशाने रणमण्डले ॥ १४ ॥

[1] A omits a long portion of the book from this point. [2] D °ण्डमाल° । [3] B °मार्गे । [4] U वीर° । [5] D मनोः । [6] U आ° । [7] B °ने । [8] B °वे । [9] D जाप्यात् । [10] D °संख्यं । [11] U साधनाय । [12] D °नाय । [13] D पुण्य° ।

कुलवृक्षे एकवृक्षे यद्वा चित्राङ्किते स्थले ।
गङ्गागर्भे चतुर्मार्गे[1] त्रिपथे देवतालये ॥ १५ ॥

वेश्यालये वा देवेशि साधयेद्वीरसाधनम् ।
कीलान्यारोप्य यत्नेन दिक्पालेभ्यो बलिं क्षिपेत्[2] ॥ १६ ॥

शू[3]लस्थाने स्वयं गत्वा वीरवेषो महोत्तमः ।
संविद्दुग्धं बलिद्रव्यं पञ्चगव्यं[4] रसं तथा ॥ १७ ॥

खड्गं गृहीत्वा देवेशि स्वयं कर्त्तन[5]माचरेत् ।
तत्र स्थित्वा जपं कृत्वा त्रैलोक्यं साधयेत्ततः ॥ १८ ॥

इति संक्षेपतः प्रोक्तं किमन्यद्बहुजल्पितैः[6] ।

**श्रीदेव्युवाच**

देवेश श्रोतुमिच्छामि रहस्यं पूर्वसूचितम् ॥ १९ ॥

**श्रीशिव उवाच**

रहस्यातिरहस्यं च कथ्यते श्रृणु साम्प्रतम् ।
शैवे शाक्ते गाणपत्ये चान्द्रे सौरे तथार्हते ॥ २० ॥

वैष्णवे वेदिके देवि नैवेद्यविनियोजनम् ।
स्वर्णरत्नानि[7] चान्यानि नानावस्त्राणि[8] पार्वति ॥ २१ ॥

अनेकरससम्भोगं[9] गुरवे विनिवेदयेत् ।
गुरुपुत्राय तत्पत्न्यै तत्सुतायै निवेदयेत्[10] ॥ २२ ॥

ब्राह्मणाय प्रदातव्यमभावे तु जले क्षिपेत् ।
कूपेऽरण्ये[11] गुहामध्ये तडागे[12] वा क्षिपेत्प्रिये[13] ॥ २३ ॥

महादेवस्य नैवेद्यं निर्माल्यत्वं प्रगच्छति ।
भक्तायामृतरूपो हि नैवेद्यः परिकीर्तितः ॥ २४ ॥

अन्येषां चैव नैवेद्यं भक्षयेद्दापयेत्तथा[14] ।
शालिग्रामे बाणलिङ्गे नैवेद्यो नैव दूष्यति ॥ २५ ॥

बलिद्रव्याणि देवेशि द्विधा भिन्नानि कारयेत् ।
[15]प्रयोगकाले देवेशि ब्राह्मणान्पूजयेद्व्रती ॥ २६ ॥

तावत्क्वापि न गन्तव्यं यावत्सिद्धिर्न जायते ।
आरम्भान्तं समाप्याऽथ प्रायश्चित्तं ततश्चरेत् ॥ २७ ॥

अङ्गाङ्गिभावमासाद्य सर्वं संसाधयेद्व्रती ।
कार्यमध्ये पुनः कार्यमङ्गाङ्गित्वं भवेच्छिवे ॥ २८ ॥

[1] U °र्भागे । [2] B हरेत् । [3] D मू° । [4] D गुडार्द्रक° । [5] B कर्तृस । [6] D °ल्पनैः । [7] D रूप्यानि । [8] D रत्नानि । [9] U °म्भारं । [10] D सुतायामपि वा ददेत् । [11] D °पमध्ये । [12] D तदभावे । [13] U विनिक्षिपेत । [14] B °दथ; D त्ततः । [15] D omits three lines.

पूर्वपीठं पुरा ज्ञात्वा विघ्नानुत्सार्य यत्नतः ।
कार्याणि साधयेद्देवि चान्यथा नारकी भवेत् ॥ २९ ॥

कार्यान्तरे समारब्धे तत्र कार्यं न वै भवेत् ।
न्यायाधिकरणं[1] ज्ञात्वा पीठिकाज्ञानपूर्वकम् ॥ ३० ॥

अङ्गाङ्गित्वं पुरा ज्ञात्वा सर्वकार्याणि साधयेत् ।
न हि कर्मणि कर्मणामारम्भस्तु क्वचिद्भवेत् ॥ ३१ ॥

कर्मणामपि चारम्भस्त्वङ्गाङ्गित्वाद्भविष्यति ।
कार्ये जातेऽपि[2] देवेशि सन्ध्यापू[3]र्तिं समाचरेत् ॥ ३२ ॥

संकल्पबाधको[4] भूयादन्यथा परमेश्वरि ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ३३ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे मुण्डासनकथनं नामैकोनचत्वारिंशतिः[5] पटलः ।

[1] D °कारिणं । [2] D ज्ञातेऽपि । [3] U °मू° । [4] D °साधको । [5] D द्विचत्वारिंशत् ।

## [1]चत्वारिंशतिः पटलः ।

श्रीशिव उवाच ।

अथ मालाविधानं च कथ्यते शृणु पार्वति ।
माला बहुविधा प्रोक्ता महाशङ्खादिभेदतः ॥ १ ॥
महाशङ्खमयी माला दन्तमाला स्वयम्भुजा ।
वर्णमाला तथा देवि सर्वकार्यार्थसाधिनी ॥ २ ॥
वर्णमाला त्रिधा प्रोक्ता तत्क्रमं शृणु पार्वति ।
पञ्चाशन्मणिभिर्माला पञ्चाशद्वर्णयोगतः ॥ ३ ॥
एतद्द्वयं[2] समुद्धृत्य ह्यनुलोमविलोमतः ।
माला शतमयी प्रोक्ता सर्वकार्यप्रदायिका ॥ ४ ॥
अकचटतपयशास्त्वष्टवर्गाः[3] प्रकीर्त्तिताः[4] ।
अष्टवर्गं प्रकल्प्याथ त्वष्टोत्तरशती भवेत् ॥ ५ ॥
अष्टोत्तरशती[5] माला सर्वकार्यार्थसिद्धिदा ।
गुरोः पञ्च गणेशस्य त्रयं च परिकीर्त्तितम् ॥ ६ ॥
शेषमिष्टाय स[6]न्दद्यात्तेन सिद्धीश्वरो भवेत् ।
त्रयं गुरौ त्रयं देवि गाण[7]पे परिकीर्त्तितम् ॥ ७ ॥
न्यूनातिरिक्ते द्वितयं शेषमिष्टाय योजयेत् ।
अष्टोत्तरशती माला कथिता तव वल्लभे ॥ ८ ॥
[8]अनुलोमविलोमेन मातृकार्णं शतं भवेत् ।
मायावाक्कामश्रीयोगात् मातृकावर्णयोगतः ॥ ९ ॥
अनुलोमविलोमेन त्वष्टोत्तरशतं भवेत् ।
मायाद्याद्यन्तसम्भेदात् पराबीजं नियोजयेत् ॥ १० ॥
माला पञ्चविधा प्रोक्ता सर्वसिद्धिप्रदायका ।
सप्तकीलितसंरुद्धाः छिन्ना व्याकीर्णयोनयः ॥ ११ ॥
धनिवैरी व्ययी हीनः काणखञ्जादयोऽपि च ।
तेऽपि सिद्धा भवन्त्येव नात्र कार्या विचारणा ॥ १२ ॥
महाशङ्खमयी माला तथा दन्ताख्यमालिका ।
न देया यस्य कस्यापि गोप्या तु मातृजारवत् ॥ १३ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे मालाविधानं नाम चत्वारिंशतिः पटलः ।

[1] This chapter is omitted in D. । [2] U adds तु । [3] B °र्गः । [4] B °तः । [5] U °तं । [6] B °सनं । [7] B °णा° । [8] B omits up to the end and the colophon. ।

# एकचत्वारिंशतिः पटलः ।

**श्रीदेव्युवाच ।**

[1]देवेश श्रोतुमिच्छामि मालाग्रथन[2]निर्णयम् ।
कया कश्च[3] प्रजप्तव्यो न जप्तव्यश्च को मनुः ॥ १ ॥
सर्वं कथय देवेश यद्यहं तव वल्लभा ।

**श्रीशिव उवाच ।**

ध्रुवेण ग्रथनं कार्यं प्रत्येकं मणिकाक्रमात् ॥ २ ॥
सर्वमन्त्रमयी माला सर्वसिद्धिकरी परा ।
तन्मन्त्रे देवतारूपं ध्यात्वा तु मालिकान्तरे[4] ॥ ३ ॥
सर्वे मन्त्राः प्रजप्तव्याः सर्वकार्यार्थसिद्धये ।
अथवा मातृकाभिश्च ग्रथनं कारयेत् प्रिये[5] ॥ ४ ॥
पञ्चाशन्मणिभिर्माला[6] क्षकारो मेरुसञ्ज्ञि[7]कः ।
अनुलोमविलोमेन माला शतमयी भवेत् ॥ ५ ॥
अष्टवर्गं प्रकल्पाथ माला त्व ष्टोत्तरं शतम् ।
मातृकामालया जापः सर्वत्रैव[9] प्रशस्यते ॥ ६ ॥
रुद्राक्षस्फाटिकादीन् वै समानीय प्रयत्नतः ।
ग्रथनं मातृकाभिश्च कारयेद्यत्नतः शिवे ॥ ७ ॥
सर्वदेवमयी माला द्रुतसिद्धिकरी परा ।
[10]तत्तन्मन्त्रमयीं देवीं तत्र ध्यात्वा जपक्षणी[11] ॥ ८ ॥
जपं कुर्यात्प्रयत्नेन नात्र कार्या विचारणा ।
सर्वसिद्धिप्रदा माला सर्वकार्यकरी परा ॥ ९ ॥
[12]शक्तिमन्त्रेण संग्रथ्य शिवमन्त्रं जपेच्छिवे ।
शिवमन्त्रेण संग्रथ्य शक्तिमन्त्रं जपेच्छिवे ॥ १० ॥
शिवशक्त्यो[13]रभेदेन माला कार्यकरी परा ।
दन्ताख्यं चैव मुण्डाख्यं मत्स्यस्यापि मणिं प्रिये ॥ ११ ॥
नाड्या संग्रथनं कार्यं त्रिशक्तिमालिका मता ।
काली तारा तथा छिन्ना स्वरूपा मालिका परा ॥ १२ ॥
सर्वसिद्धिपरा भूमिः सर्वदेवमयी परा ।
ये[14]नैव ग्रथ्यते देवि तमेव[15] प्रजपेन्मनुम् ॥ १३ ॥

[1] B omits three lines. [2] U ग्रन्थवि° । [3] U कपालश्च । [4] D °कां ततः; B °कोत्तरं । [5] D शिवे । [6] D मणिमालानां । [7] D °ज्ञ° । [8] B म° । [9] U °मन्त्रे; D °तन्त्रे । [10] D omits three lines. [11] U जपेत् क्षणे । [12] U omits three lines. [13] B °क्तो° । [14] U ते° । [15] B मानवे ।

इत्युक्तं च मया पूर्वं किं त्वया विस्मृतं प्रिये[1] ।
इदानीमन्यथा प्रोक्तं संशयोऽस्ति मम प्रिये[2] ॥ १४ ॥

मातृकातारभिन्नानां शिवशक्तिविहीनके ।
मालिकायामिदं नोक्तमन्यमालाविधौ मतम् ॥ १५ ॥

अन्यप्रकारग्रथने येनैव ग्रथनं चरेत् ।
तमेव प्रजपेन्मन्त्रं नान्यमन्त्रं जपेच्छिवे ॥ १६ ॥

मातृकाद्[3]ावपि शिवे मालां तन्मन्त्ररूपिणीम् ।
ध्यात्वा जीवं प्रविन्यस्य नान्यथा सिद्धिरोधकृत् ॥ १७ ॥

इति सक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ।

**श्रीदेव्यु[4]वाच ।**

[5]देवेश श्रोतुमिच्छामि रहस्यं परमाद्भुतम् ॥ १८ ॥
मालारहस्यं परमं कथयस्व महेश्वर ।

**श्रीशिव उवाच ।**

पूर्वोक्तानां मणीनाञ्च त्वभावे परमेश्वरि ॥ १९ ॥

गन्धरूपाश्च मणयो दन्तस्फाटिकसम्भवाः ।
मणयो[7] यत्नतः कार्याः सर्वसिद्धिमभीप्सुभिः ॥ २० ॥

मुण्डाभावे नारिकेलैर्मुण्डाद्यो मणयश्च वा ।
गज[9]हारिणखड्गाख्यस्वर्णसाम्बर[10]शृङ्गजाः ॥ २१ ॥

रौप्यजास्ताम्रजाः कांस्य[11]सीसनागमयाश्च वै[12] ।
मुण्डरूपाश्च मणयः सर्वसिद्धिमयाः स्मृताः ॥ २२ ॥

अथ विद्यामयी देवि मालिका कार्यसाधिनी ।
वैडूर्यनीलकाचा[13]ख्या मणयः सर्वकार्यदाः ॥ २३ ॥

बीजकीलकशक्तीनां मणयो द्रुत[14]सिद्धिदाः ।
कुल्लुकामालिका[15] देवि विद्या[16] वश्यकरी स्मृता ॥ २४ ॥

बीजाद्या वीर्यसंसिद्ध्यै कीलैर्निष्कीलने[17] स्मृता ।
शक्तियुक्ता सर्वसिद्ध्यै जीवमात्रास्थिमुण्डधृक् ॥ २५ ॥

अस्थिमुण्डमयी माला शिवरूपप्रदायिनी ।
तदाकारविशिष्टा या तत्तत्कार्यकरीष्टदा[18] ॥ २६ ॥

[1] B प्रभो । [2] B प्रभो । [3] D °द्वा° । [4] B शिवो° । [5] B omits this line. [6] D °स्वरूपा । [7] D मालाया । [8] U °द्या । [9] U °ण° । [10] U °स्वाम्बर°; D °सीवर° । [11] D कांस्यादि° । [12] D सनागमणयश्च वै । [13] B °श्वा° । [14] D तत्र । [15] B °तृका । [16] B °धि° । [17] U °नै । [18] U च षट् ।

ताराकालीमयी माला ताराछिन्नामयी परा ।
कालीछिन्नामयी वा या[1] त्रितयं[2] मुण्डबीजजा[3] ॥ २७ ॥

सर्वसिद्धिपरा[4] भूमि[5]रनिरुद्धसरस्वती ।
रत्नमात्र[6]मयी माला रत्नमात्र[7]समुद्भवा ॥ २८ ॥

रक्तचन्दनमुण्डोत्था तथाष्टगन्धमुण्डजा ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २९ ॥

श्रीदेव्युवाच ।

मातृकावर्ण रूपा च माला संसूचिता वद ।

श्रीशिव उवाच ।

रहस्यमपि वक्ष्यामि वर्णबीजस्वरूपतः ॥ ३० ॥

मातृकावर्ण[9]रूपां च मालिकां[10] कारयेच्छिवे ।
जपस्तेन प्रकर्तव्यः सर्वदेवस्वरूपिणी ॥ ३१ ॥

सौवर्णताम्रतारोत्था खड्गोत्था गजदन्तजा ।
रत्नजा स्फाटिकोत्था वा मातृका वर्णमालि[11]का ॥ ३२ ॥

स्वर्णमाला[12] सर्वसिद्ध्यै रौप्यजा सकेलष्टदा ।
ताम्रमाला सर्वशान्त्यै खड्गजा पितृमोक्षदा ॥ ३३ ॥

गजदन्तमयी माला सिद्धिदा बिल्वजार्थदा ।
अर्कवृक्षभवा पूर्वा शत्रोरुच्चाटकर्मणि[13] ॥ ३४ ॥

एवं सम्पाद्य मालां तु जपेद्देवे समर्पयेत् ।
देवस्य प्रतिमायन्त्रं दिव्यचक्रं विशेषतः ॥ ३५ ॥

पूजिते प्रतिमायन्त्रे धारणीयं द्वयं शिवे ।
रत्नाढ्यमङ्गुलौ धार्यं स्वर्णरत्नमयं हृदि ॥ ३६ ॥

मुद्रारूपं हाररूपं कृत्वा यत्नेन धार[14]येत् ।
सर्वसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ॥ ३७ ॥

तत्रोपचारदेवा[15]नां नामानि श्रृणु पार्वति ।
अन्नस्य देवता लक्ष्मीर्वैष्णवे तु प्रजापतिः ॥ ३८ ॥

सुवर्णं वह्निदैवत्यं रजतं चन्द्रदैवतम् ।
हीरकं वारुणं ज्ञेयं रसानां पृथिवी स्मृता ॥ ३९ ॥

1 D माला; U चान्या । 2 D °यी । 3 D °का । 4 B omits परा; D करा ।
5 D भूता । 6 B °त्रा । 7 D °त्रा । 8 D °र्णव° । 9 U °र्णव° । 10 U मणिकां ।
11 D °तृ° । 12 B °त्रा । 13 U °के मणिः । 14 D साध° । 15 B °वी° ।

जलस्य वरुणो देवो वीर्याणां वारुणेश्वरी ।
कृश्र[1]रस्य रमा देवी परमान्नस्य कालिका ॥ ४० ॥

घृतदीपे महाविष्णुस्तलदीपे वनस्पतिः ।
गन्धर्वेश्च तथा धूपे घृतं सूर्याग्निदैवतम् ॥ ४१ ॥

मधु वै वारुणं ज्ञेयं दधिक्षीरं महेश्वरः ।
वानस्पत्यं महापुष्पं वैष्णवो गन्ध ईरितः ॥ ४२ ॥

मालायाञ्च तथा दुर्गा सर्वं देवीमयं च वा ।
प्रतिमां पूजयेत् ज्ञात्वा नान्यथा सिद्धिरोधकृत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ४३ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे मालाग्रथनं नामैकचत्वारिंशतिः[2] पटलः ।

[1] D °श्र° । [2] D त्रयश्चत्वारिंशत् ।

# द्वाचत्वारिंशतिः पटलः ॥

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि येन देवीमयो भवेत् ।

ईश्वर उवाच[1] ।

रहस्यातिरहस्यं च कथ्यते शृणु साम्प्रतम् ॥ १ ॥
दशविद्याक्रमेणैव पञ्चायतनमार्गतः ।
तथा दर्शनमार्गेण पूजनं सिद्धिदं कलौ ॥ २ ॥
तत्तद्देवस्यायुधानि[2] तन्मुद्राबीजदर्श[3]णम् ।
कर्तव्यं यत्नतो देवि तदाचारपरो भवेत् ॥ ३ ॥
सर्वतोभद्रपीठं च देवीपीठं[4] प्रकीर्तितम् ।
एकाब्जं[5] योगिनीपात्रे पञ्चाब्जं[6] क्षेत्रपालके ॥ ४ ॥
नवाब्जं गाणपे प्रोक्तं बटुके लिङ्गचिह्नितम्[7] ।
पञ्चवा मण्डलान्यत्र पूजापीठे महेश्वरि ॥ ५ ॥
कालिकां वा[8] तथा मायां बिन्दुचन्द्रविभूषिताम्[9] ।
एकाक्षरीं स्पर्शमणिं भालदेशे लिखेच्छिवे ॥ ६ ॥
तारातनौ[10] बिन्दुमायां चन्द्रेण परिभूषिताम् ।
एकाक्षरीं स्पर्शमणिं भालदेशे लिखेच्छिवे ॥ ७ ॥
छिन्नाक्रोधो बिन्दुचन्द्रभूषितैकाक्षरी भवेत् ।
त्रिपिष्टपहरौ मायां बिन्दुचन्द्रेण भूषिताम् ॥ ८ ॥
एकाक्षरीं स्पर्शमणिं[11] भालदेशे लिखेत्सदा ।
काली तारा तथा छिन्ना त्रितयं विलिखेच्च वा[12] ॥ ९ ॥
द्वयमेकं च[13] वा लेख्यं तेन तद्रूपभाग्भवेत् ।
लक्ष्मीह[14]रौ बिन्दुमायाकलाभूषितमस्तकौ ॥ १० ॥
एकाक्षरीं स्पर्शमणिं भालदेशे लिखेत्सदा ।
सौः सुन्दरीं स्पर्शविद्यां भालदेशे लिखेत्सदा ॥ ११ ॥
ऐं भैरवीं स्पर्शमणिं[15] भालदेशे लिखेत्सदा ।
धूँ धूम्राख्यां[16] स्पर्शविद्यां भालदेशे लिखेत्सदा ॥ १२ ॥
ब्लूँ स्पर्शाख्यां वसोर्धारां भालदेशे लिखेत्सदा ।
द्री[17]माकर्षकरीं विद्यां भालदेशे लिखेत्सदा ॥ १३ ॥

[1] B omits this line. [2] D यद् ध्यानं । [3] B °र्पं° । [4] B देवपीठे । [5] U एकत्वं । [6] U पंचत्वं । [7] U वह्निलिङ्गजं । [8] B °करौ । [9] U°षणं । [10] U °तारे; B °तारौ । [11] B विद्यां । [12] U °च्छिवे । [13] D °मेकत्र । [14] D °स° । [15] B °विद्या । [16] B क्षं । [17] U म्री° ।

[1]ॐ सम्पत्करणीं विद्यां ह्रूँ वश्यकारिणीं कलाम् ।
अमाकर्षकरीं विद्यां भालदेशे लिखेत्सदा ॥ १४ ॥
ह्रूँ[2] स्तम्भनकरीं विद्यां भालदेशे लिखेत्सदा ।
ह्सौ[3]परां षोडशीं विद्यां भालदेशे लिखेत्सदा[4] ॥ १५ ॥
अन्यमन्त्रविधौ देवि बीजशक्ति च वा लिखेत् ।
काली तारा छिन्नमस्ता सुन्दरी बगलामुखी ॥ १६ ॥
पञ्चविद्याविधौ देवि दीक्षाहीनो गुरुर्यदि ।
पूर्णाभिषेकिनं वीक्ष्य पुन[5]र्दीक्षां समाचरेत् ॥ १७ ॥
ऊर्ध्वाम्नायैश्च[6] सम्पन्नः प्राप्यते चे[7]त्प्रियंवदे ।
पुन[8]र्दीक्षां चरेद्देवि पूर्णरूपोऽपि पार्वति ॥ १८ ॥
निर्वाणदीक्षिते प्राप्ते दीक्षणं सर्वथा चरेत् ।
षट्शाम्भवसमायुक्तः प्राप्यते निर्गुणैरपि ॥ १९ ॥
शाम्भवं दीक्षणं कृत्वा शम्भुरूपो नरोऽन्यथा ।
दरिद्रो विकलो भूयान्नात्र कार्या विचारणा ॥ २० ॥
मेधादीक्षासमायुक्तः कलौ दुर्लभ एव च ।
मेधादीक्षासमायुक्तः प्राप्यते वा न वा प्रिये ॥ २१ ॥
मेधादीक्षासमायुक्तः शिवात्परतरो मतः ।
साम्राण्मेधासमायुक्तः कालीतारामयो ध्रुवम् ॥ २२ ॥
दिव्यसाम्राज्यसंयुक्तो ब्रह्मरूपः सनातनः ।
प्राप्यते चेन्महाभाग्यं[9] साधकस्यात्र निश्चितम् ॥ २३ ॥
दिव्यमेधान्तसंयुक्तो यस्मिन्देशे विराजते ।
स देशः कालिकातुल्यस्तारा तत्रैव तिष्ठति ॥ २४ ॥
तत्सकाशादीक्षणं[10] चेत्किं तपस्याफलं शिवे ।
न वक्तुं शक्यते देवि शिवो जानाति नान्यथा ॥ २५ ॥
गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २६ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे पूजासिद्धिकथनं नाम द्वाचत्वारिंशतिः[11] पटलः ।

[1] B omits two lines. [2] D क्रीं° । [3] D ह्सौः° । [4] B omits this line. [5] D पूर्ण° । [6] B °कं° । [7] D तत् । [8] D पूर्ण° । [9] B °व्यं । [10] D णां । [11] D चतुश्चत्वारिंशत् ।

## त्रयश्चत्वारिंशतिः पटलः ॥

**श्रीदेव्युवाच ।**

देवदेव उमाकान्त प्राणात्प्राणतर प्रभो ।
त्वया संसूचितं पूर्वं विद्यानां सिद्धिनिर्णयम् ॥ १ ॥
तन्मे कथय देवेश यद्यहं तव वल्लभा ।

**श्रीशिव उवाच ।**

सारात्सारतरं देवि रहस्यमपि गोपितम् ॥ २ ॥
तव प्रीत्या महेशानि कथ्यते शृणु साम्प्रतम् ।
काली तारा छिन्नमस्ता वीरसाधनमार्गतः ॥ ३ ॥
याममात्रेण सिध्यन्ति नात्र कार्या विचारणा ।
साधनारहिते देवि वर्णलक्षद्वये शिवे ॥ ४ ॥
कालिका सिद्धिदा प्रोक्ता तारा श्रीशैवतत्त्वके[1] ।
छिन्नमस्ता चतुःषष्टिलक्षजापेन सिध्यति ॥ ५ ॥
चतुरशीतिलक्षैस्तु सुन्दरी सिद्धिदा क्वचित् ।
बाला कोट्यर्धजापेन बगला पञ्चसप्ततिः ॥ ६ ॥
श्रीमहाराजमातङ्गी वर्णलक्षैस्तु सिध्यति ।
सिद्धविद्या महेशानि मासलक्षेण सिध्यति ॥ ७ ॥
महालक्ष्मीश्च भुवना तथा धूमावती प्रिये ।
विद्यागुणनयोगेन सिध्यन्त्येव न चान्यथा ॥ ८ ॥
विद्यामात्रं महेशानि विद्यानामा[2]र्णयोगतः ।
मातकार्ण[3]कृतेनैव गुणानां भाजनं चरेत् ॥ ९ ॥
तावल्लक्षैर्महेशानि सिध्यत्येव न चान्यथा ।
भैरवस्य तु योगेन शाबरं सिद्धिदायकम् ॥ १० ॥
निर्मित[4] नवनाथैस्तु आदिनाथस्तु[5] भैरवः ।
दशविद्याक्रमे देवि दशधा फलमीरितम् ॥ ११ ॥
एको मनुश्चेत्संसिद्धस्तदा सर्वेऽपि सिद्धिदाः ।
षट्पञ्चाशद्देशभेदैः शाबरे भेदभाजनम् ॥ १२ ॥
भैरवस्य तु संयोगाच्छाबरं सिद्धिदायकम् ।
महाकालस्य संयोगाद् बटुकस्य च योगतः ॥ १३ ॥
शाबरं सिद्धिदं देवि[6] तच्च वै द्विविधं भवेत् ।
[7]नाथोक्तं शम्भुसम्प्रोक्तं नाथोक्तं द्विविधं भवेत्[8] ॥ १४ ॥

[1] D °लक्षकैः । [2] D °म° । [3] D °र्णं । [4] D °ते । [5] U °श्च । [6] D वरं सिद्धिं ददेद्देवि । [7] D omits this line. । [8] U देशभेदतः ।

[1]शिवोक्तरूपभेदेन तत्र नाथाभिधे शिवे ।
चतुरशीतिसिद्धोक्तं नाथोक्तं द्विविधं भवेत् ॥ १५ ॥

एका चेद्देवता सिद्धा तदा सिद्धं जगत्त्रयम् ।
तत्रापि बटुकेनैव सिद्धं स्थावर[2]जङ्गमम् ॥ १६ ॥

अथाद्यो हेतुबटुको द्वितीयो बटुकः स्मृतः ।
त्रिपुरान्तकबटुकस्तृतीयः परिकीर्तितः ॥ १७ ॥

[3]वह्निवेतालबटुकश्चतुर्थः परिकीर्तितः ।
अथाग्निजिह्वबटुकः पञ्चमः परिकीर्तितः ॥ १८ ॥

श्रीकालबटुको देवि करालबटुकस्तथा ।
तथैक[4]पादबटुको श्रीभीम[5]बटुकस्तथा ॥ १९ ॥

त्रैलोक्यबटुकश्चैव श्रीसिद्धबटुकस्तथा ।
दश वै बटुकाः ख्याताः कलौ प्रत्यक्षसिद्धिदाः ॥ २० ॥

मातृकासुत[6]संज्ञाख्या[7] बटुकाः पूर्वमीरिताः ।
महाक्रोधस्य योगेन सिध्यन्ति किन्नरी[8]गणाः ॥ २१ ॥

कालिकायां महाकालश्चाक्षोभ्यस्तारिणीमनौ ।
त्रिपुरायां तु राजेशो बगलायाञ्च त्र्यम्बकः ॥ २२ ॥

मातंग्यां तु महेशश्च भुवनेश्यां महेश्वरः ।
नारायणो महालक्ष्म्यां महादेवोऽथ वा[9] प्रिये ॥ २३ ॥

छिन्नायां तु करालः स्यात्सिद्धायां कुक्कुटेश्वरः ।
धूम्रायां तु अघोरः स्यादिति संक्षेपतो मतम् ॥ २४ ॥

शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते ।
शिवं विना चित्कलायां न कला[10]त्वं क्वचिद्भवेत् ॥ २५ ॥

बीजाङ्कुरन्याययोगात् शिवशक्त्यात्मकं महः[11] ।
सदा जागर्ति देवेशि नानारूपाणि दर्शयन् ॥ २६ ॥

सर्व[12]भावे तु बटुको महाकालस्तथैव च ।
तारिण्यां बटुकः प्रोक्तः काल्यां कालः प्रकीर्तितः ॥ २७ ॥

श्रीक्रोधमण्डलं देवि पातालाम्नायगोचरम् ।
यथा पराख्यमन्त्रे तु शिवशक्त्यात्मकं महः ॥ २८ ॥

सदा जागर्ति देवेशि व्याप्य ब्रह्माण्डमण्डलम् ।
बिन्दुयुक्ता भवेच्छैवी सर्गान्ता शक्तिसंज्ञिका ॥ २९ ॥

[1] B omits two lines. । [2] B स्थाच्चर° । [3] D omits this line. । [4] B °व । [5] D भूत° । [6] D दश° । [7] D °ख्याता । [8] D योगिनी° । [9] D °वः शृणु । [10] D काल° । [11] U °हत् । [12] D °र्वा ।

बिन्दुसर्गान्वि[1]तायां तु शिवशक्तिमयी कला ।
बीजाङ्कुरन्याययोगात्सदा तिष्ठति तिष्ठति ॥ ३० ॥

वीरसाधनमार्गेण शिथिलो[2]ऽपि च सिध्यति ।
शक्तिमन्त्रे[3] शम्भुमन्त्रे[4] शाबरे गाणपे तथा ॥ ३१ ॥

कौले बौद्धे वैदिके च क्रूरमन्त्रेऽपि पार्वति ।
महाविद्याक्रमे देवि सिद्धविद्याक्रमे तथा ॥ ३२ ॥

विद्याक्रमेऽपि देवेशि वीरसाधनमार्गतः ।
सर्वं सिध्यति देवेशि नात्र कार्या विचारणा ॥ ३३ ॥

[5]जीवहीने यथा जीवो मृतसञ्जीवनीक्रमात् ।
पुनर्जीवो[6] यथा भूयात्तथा साधनयोगतः ॥ ३४ ॥

सर्वं सिध्यति देवेशि नात्र कार्या विचारणा ।
मन्त्रमात्रे[7] महेशानि वीरसाधनमाचरेत् ॥ ३५ ॥

बटुके हनुमन्मन्त्रे गारुडे चेटकेऽपि च ।
वेताले धूम्रवेताले वीरसाधनमाचरेत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ३६ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे विद्यासिद्धिनिर्णयो नाम त्रयश्चत्वारिंशतिः[8] पटलः ।

[1] B चि° । [2] D मिथुनो । [3] U °मात्रे । [4] U °मात्रे । [5] D omits three lines. । [6] B पूजनीयो । [7] D °तन्त्रे । [8] D पंचचत्वारिंशत् ।

## चतुश्चत्वारिंशतिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि सुन्दरीसाधनक्रमम् ।

**श्रीशिव उवाच ।**

रहस्यातिरहस्यं च तव स्नेहात्प्रकाश्यते ॥ १ ॥
गोपनीयं गोपनीयं गोपनीयं स्वयोनिवत् ।
सिद्धमन्त्रपरो[1] भूत्वा वीरसाधनमाचरेत् ॥ २ ॥
सर्वेषां जीवहीनानां जन्तूनां फलकृद् भवेत्[2] ।
नान्यत् सिद्धिप्रदं देवि वीरसाधनवर्जितम् ॥ ३ ॥
श्रीविद्या शिथिला देवि क्लेशसाध्या कलौ ध्रुवम् ।
अल्पाचाराद्धर्मत्वाद् भ्र[3]ष्टत्वादपि पार्वति ॥ ४ ॥
कलौ पापसमाकीर्णे कस्य वै निश्चलं मनः ।
सर्वदोषैः[4] समायुक्तो वीरसाधनसंयुतः ॥ ५ ॥
स एव सिद्धिदो देवि नात्र कार्या विचारणा ।
न वै सिद्धिर्न वै सिद्धिर्वीरसाधनमन्तरा ॥ ६ ॥
महापातकसंयुक्तो वीरसाधनसंयुतः ।
स एव सिद्धिदो लोके सर्वदेवनमस्कृतः ॥ ७ ॥
याम[5]मात्रेण[6] संसिद्धिर्वीरसाधनयोगतः ।
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ॥ ८ ॥
सार्धयामोत्तरं देवि वीरसाधनमाचरेत् ।
तरुणं सुन्दरं शूरं संमुखे रसवर्तिनम् ॥ ९ ॥
पलायनविशून्यं च महावीरशवं हरेत् ।
यष्टिविद्धं शूलविद्धं सर्पदष्टं पयोमृतम् ॥ १० ॥
खड्गविषहतं विद्धं चाण्डालाद्यभिभूतकम् ।
शीघ्रसिद्धिप्रदं देवि पूर्वोक्ताष्टशवं त्यजेत् ॥ ११ ॥
वीरवेषं समासाद्य वीरचर्य्यां[7] समाचरेत् ।
[8]पूर्ववत् तिलकं कृत्वा बलिद्रव्याणि चाहरेत् ॥ १२ ॥
[9]मंत्रं वा साधयिष्यामि देहं वा पातयाम्यहम् ।
प्रतिज्ञामीदृशीं कृत्वा बलिद्रव्यानि संग्रहेत् ॥ १३ ॥
मेषमाहिषमार्जारछागकुक्कुटकुञ्जरान् ।
गुडपायससंपातो[10] मोदकान् पूपलड्डुकान्[11] ॥ १४ ॥

[1] B °रा । [2] B °द्द्रुतम् । [3] D °हु° । [4] D °ष° । [5] B पाप° । [6] B °मन्त्रेण । [7] B °विद्यां; D सिद्धिभावं । [8] D omits three lines. । [9] B omits two lines. [10] U सम्पाद्य । [11] U °कान् शिवे ।

जम्बीरपनसादीनि नाना स्वादूनि पार्वति ।
फलानि चाहरेद्देवि ताम्बूलाद्यैः समन्वितः[1] ॥ १५ ॥
जातीपत्रं तत्फलं च कङ्को[2]लं विजया[3] तथा ।
कस्तूरीकुङ्कुमादीनि भक्ष्यद्रव्याणि यानि च ॥ १६ ॥
तानि सर्वाणि संगृह्य यथोक्तं स्थानमाचरेत् ।
बिल्वमूले प्रान्तरे वा शून्यागारे नदीतटे ॥ १७ ॥
समुद्रे विपिने घोरे श्मशाने चत्वरे तथा ।
गङ्गागर्भे तडागे च कामिनीमण्डलेऽपि च ॥ १८ ॥
एकलिङ्गे विशेषेण वन[4]मध्ये विशेषतः ।
वीरवेषं समासाद्य वीरसाधनमाचरेत् ॥ १९ ॥
सिद्धमन्त्रं पुरस्कृत्वा देवतादर्शनोत्सुकः ।
सार्धयामोत्तरं देवि वीरसाधनमाचरेत् ॥ २० ॥
खदिरानष्टकीलाद्यैर्वितस्तैर्वा[5] हरेच्छिवे ।
दशदिक्षु क्षिपेद्देवि दिक्पालेभ्यो बलिं हरेत् ॥ २१ ॥
दिग्बन्धनं समाचर्य साम्राज्य[6]मण्डलक्रमात् ।
विद्यामण्डलमार्गेण महाविद्यादिमार्गतः ॥ २२ ॥
श्मशान[7]देवताभ्यो हि बलिं यत्नेन दापयेत् ।
राजराजेश्वरायाऽथ बलिं यत्नेन दापयेत् ॥ २३ ॥
ततः श्रीकुरु[8]कुल्लायै चाण्डाल्यै तदनन्तरम् ।
बटुकयोगिनीक्षेत्रपालगाणपभूतये[9] ॥ २४ ॥
देवता ललिता[10]धीशः[11] सर्वेभ्यो बलिमाहरेत् ।
बलिदानं समभ्यर्च्य[12] वीरसाधनमाचरेत् ॥ २५ ॥
वीरं संक्षाल्य यत्नेन[13] सिन्दूराङ्कितभालकः ।
कज्जलमञ्जनं तैलं कस्तूरीकुङ्कुमान्वितम् ॥ २६ ॥
ताम्बूलं मुखमध्यं च दुग्धेनोत्सर्गमाचरेत् ।
वीरं संक्षाल्य[14] यत्नेन कारणेन सुरेश्वरि ॥ २७ ॥
मासप्रधानं नैवेद्यं मत्स्या[15]न्मुद्रां तथैव च ।
[16]दत्त्वा यत्नेन देवेशि लवङ्गैलादिसंयुतः ॥ २८ ॥
कर्पूरवासितं धूपं [17]गन्धाद्यष्टौ च पञ्च च ।
षोडशाङ्गं दशाङ्गं वा अष्टादशसमन्वितम् ॥ २९ ॥

[1] U °तैः । [2] U °क्को° । [3] D °यं । [4] B °रण° । [5] BD वितृतैश्च । [6] D संमार्ज्य । [7] D °ने । [8] B क्रूर° । [9] B °तयाः ; D °पयोः । [10] U कालिका° । [11] D वेशे । [12] U °मार्य° । [13] D मूलेन । [14] B °संज्ञा प्र° । [15] U °त्स्यो । [16] U omits two lines.। [17] B त्रिग° ।

श्रीखण्ड[1]धूपो देवेशि तथा चागुरुसम्भवः ।
गुग्गुलं लोह[2]बाणश्च रालश्च देवदारुकः ॥ ३० ॥
लाक्षा गूड[3]श्च वा देवि गोघृतं शर्कराश्च[4] वा ।
मांसीनखं च वा देवि कर्पूरमेकमेव वा ॥ ३१ ॥
श्रीखण्डमगुरुं चापि गन्धसारं शिलारसम् ।
मलयोद्भव[6]सारञ्च विद्याया युग्मभेदतः ॥ ३२ ॥
दशविद्याक्रमेणैव कीर्तितन्तु मया तव ।
देवदारुमयो धूपः[7] सर्वभूतविनाशकः[8] ॥ ३३ ॥
एवं सन्धूप्य यत्नेन खड्गहस्तो भवेद् ध्रुवम् ।
मुक्तकेशो दिशावासो दूरे चोत्तरसाधकान् ॥ ३४ ॥
दीपं प्रज्वाल्य यत्नेन न च विघ्नैः समाकुलः ।
मध्ये वीरं तु संस्थाप्य झु[9]टिकाबन्धनं चरेत् ॥ ३५ ॥
पृष्ठदेशे लिखेद्यन्त्रं पादबन्धनमाचरेत् ।
मुखबन्धं मुखे दत्त्वा हयारोहक्रमेण च ॥ ३६ ॥
अचूडकं पूर्वभागे मृदु दक्षिणगोचरे ।
कोमलं पश्चिमायां च त्रिमुण्डमुत्तरे भवेत् ॥ ३७ ॥
ततो मृतकमन्त्रेण मृतकं पूजयेत्क्रमात् ।
वीरार्गलाघोरमन्त्रैश्चक्रपाशुपतास्त्रकैः ॥ ३८ ॥
जयदुर्गाख्यमन्त्रोऽपि वीरप्रार्थनकृन्मनुः ।
तिलोऽसीति यत्राख्यो हि[10] मनवः परिकीर्तिताः ॥ ३९ ॥
स्वस्वस्थाने नियुञ्जीत यथो[11]क्तेन तु वर्त्मना ।
ऋषिच्छन्दादिकं ज्ञात्वा यथोक्तं ध्यानमाचरेत् ॥ ४० ॥
स्वेष्टदेवं[12] तु सम्पूज्य साङ्गं सावरणं प्रिये ।
पञ्चोपचारैर्वा पूज्य जपं कुर्यादनन्यधीः ॥ ४१ ॥
भयं न कुर्यादेवेशि स्वप्नवद्भावयेज्जगत् ।
देवताः खेचराः सिद्धा भैरवा यातुधानकाः ॥ ४२ ॥
आयान्ति छलनार्थं च भयं तत्र न कारयेत् ।
व्याघ्राः शस्त्राणि सर्पा[13]द्या वृश्चिकाः क्रूरजन्तवः ॥ ४३ ॥
वक्र[14]क्रूराणि रूपाणि समुद्रस्वर्गपातनम् ।
मृताश्च पूर्वजाः सर्वे राजकीयातनास्तथा ॥ ४४ ॥
नीलं वा[15] प्राप्यते देवि कुक्कुटं चामृतं च वा ।
तृणीकृत्य च तत्सर्वं दृढभावसमन्वितः ॥ ४५ ॥

1 B °षट्° । 2 D हर° । 3 D °गुरू° । 4 D कर्कटी च । 5 D °खवचा । 6 D °द्भूत° । 7 B भूपः । 8 D °तो विनायकः । 9 U छु; B गु° । 10 D °पि । 11 B मयो° । 12 D इष्टदेवीं । 13 B °म्पा° । 14 DU वह्नि° । 15 D नीलाया ।

प्रजपेद्यत्नतो देवि देवता वरदा भवेत् ।
संस्कृतं[1] वक्ति या चाग्रे सा देवी परिकीर्तिता ॥ ४६ ॥

तस्या वरस्तु संग्राह्यस्त्रिवारं वक्ति सा शिवा ।
ब्राह्मणः संस्कृतं वक्ति भैरवः सम्प्रकीर्तितः ॥ ४७ ॥

तया यदुच्यते देवि या बलिर्याच्यते तया ।
तान् दद्याद्यत्नतो देवि नरकुञ्जरमाहिषान् ॥ ४८ ॥

शालीपिष्टमयान् कृत्वा यवक्षोदमयानपि ।
दिनान्तरे तु तद्दद्याद् वरं गृह्य सुखी भवेत् ॥ ४९ ॥

वीरादि सर्वसामग्रीं गर्तमध्ये विनिक्षिपेत् ।
वीरयुद्धं तत्र भूयात् दृढस्तत्र नरो भवेत् ॥ ९० ॥

एकविंशद्दिनं यावत्तावत्संगोपयेत्स्वयम्[2] ।
[3]गीतं श्रुत्वा तु बधिरः स्त्रीसङ्गाद् रोगभाग् भवेत् ॥ ९१ ॥

होमहीने न सिद्धिः स्याद् द्विजभोजविहीनके ।
दरिद्रस्तु भवेद्देवि सर्वं संसाधयेद् ध्रुवम् ॥ ९२ ॥

बिल्वपत्रोदकं[4] पीत्वा सर्वं संसाधयेद् ध्रुवम्[5] ।
अष्टादशविधो[6] देवि शक्तिपातः प्रजायते ॥ ९३ ॥

षष्टिसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ।
अणिमाद्यष्टसिद्धीनामधीशो[7] धार्मिकः कृती ॥ ९४ ॥

ब्रह्माण्डगोलके या च या काचिज्जगतीतले ।
समस्ताः सिद्धयो देवि तस्य पादे व्यवस्थिताः ॥ ९५ ॥

भैरवाः खेचरा यक्षाः किन्नराश्चाप्सरोगणाः ।
यातुधानास्तथा नागा दानवा दैत्यराक्षसाः ॥ ९६ ॥

कुष्माण्डाश्च तथा भूताः पिशाचाः प्रेतजातयः ।
निवात[8]कवचाश्चान्ये तथैव ब्रह्मराक्षसाः ॥ ९७ ॥

वेतालाश्च तथा साध्याः सिद्धाश्च यक्षिणीगणाः ।
रा[9]किनीकिन्नरीसंघा[10] भूतिनीचेटकादयः ॥ ९८ ॥

महेन्द्रजालमिन्द्रादिजालं पादगतं भवेत् ।
[11]सुरयोत्सर्गमासाद्य तेन सिद्धीश्वरो भवेत् ॥ ९९ ॥

[1] B °स्तुतं । [2] D सुधीः । [3] D omits three lines. [4] D °त्रादिकं । [5] D सुधीः । [6] B °धा । [7] U °धिपो । [8] U निर्वाण° । [9] U शा°; D डा° । [10] D °न्ध्या । [11] D omits this line.

गुडार्द्रकरसेनैव सुरा तु ब्राह्मणस्य च ।
गोपनीयं गोपनीयं गोपनीयं स्वयोनिवत् ॥ ६० ॥

रहस्यातिरहस्यञ्च रहस्यातिरहस्यकम् ।
प्राणा देयाः शिरो देयं न देया साधना वरा ॥ ६१ ॥

इति विद्याविधौ प्रोक्ता[1] श्रीविद्यायां विशेषतः ।
बटुके क्षेत्रपालेऽपि गाणपे शाङ्करेऽपि च ॥ ६२ ॥

साधनेयं मया प्रोक्ता गोपनीयं स्वयोनिवत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ६३ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे सुन्दरीसाधनं नाम चतुश्चत्वारिंशतिः[2] पटलः ।

[1] B °क्तः । [2] D षट्चत्वारिंशत ।

## पञ्चचत्वारिंशतिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश शङ्कर[1] स्वामिन्सुरादिकारणोत्तम ।
त्वया संसूचितं पूर्वं वरासनविनिर्णयम् ॥ १ ॥

[2]देवताऽवाहनं देवि सूतकद्वयनिर्णयम् ।
यन्त्रप्राणनिर्णयं च [3]विसर्जनविनिर्णयम् ॥ २ ॥

शिवशक्तिक्रमेणैव सम्प्रदायविनिर्णयम् ।
दशविद्याक्रमेणैव दशधूपविनिर्णयम् ॥ ३ ॥

पूर्वं संसूचितं नाथ न मह्यं तु प्रकाशितम् ।
तत्सर्वं कथय स्वामिन्[4] यद्यहं तव वल्लभा[5] ॥ ४ ॥

**श्रीशिव उवाच ।**

[6]रहस्यातिरहस्यं ते कथं च[7] कथयाम्यहम् ।
तथापि तव संप्रीत्या कथ्यते श्रृणु साम्प्रतम् ॥ ५ ॥

सर्वादिभूतरूपत्वात् सूतकस्य विनिर्णयम् ।
वरासनं[8] चान्यभागे[9] सर्वं संकथ्यते श्रृणु ॥ ६ ॥

जातसूतकमादौ स्याचदन्ते मृतसूतकम् ।
सूतकद्वयसंयुक्तः स मन्त्रो नैव सिध्यति ॥ ७ ॥

गुरुकुण्डलिनीध्यानं विवाहः[10] परिकीर्तितः ।
द्विरागमो भवेत्स्नानं संयोगस्तर्पणं भवेत् ॥ ८ ॥

अर्घ्यदानं भवेद्गर्भो गायत्री त्वष्टमासिकम् ।
भूतशुद्ध्यादि प्राणान्तं तत्रावयवकल्पनम् ॥ ९ ॥

देहावाप्तिर्मातृक[11]या प्राणायामस्तु संस्क्रिया ।
ध्यानोच्चारे महेशानि बालकोत्पत्तिरीरिता ॥ १० ॥

मन्त्रोच्चारणतो देवि जातसूतकमीरितम्[12] ।
जातसू[13]तस्य दोषस्य शमनार्थं महेश्वरि ॥ ११ ॥

दश विंशति[14] पञ्चाशद्य[15]थाशक्त्या जपेच्छिवे ।
दशाङ्गादि पुरश्चर्या संस्कारा दश वै शिवे ॥ १२ ॥

इदमादि मया[16]दिष्टमन्तिमं श्रृणु साम्प्रतम्[17] ।
संस्काराः सप्तनवका[18]स्तथा जाड्यं हृदि शिवे ॥ १३ ॥

[1] D शाङ्गाकर° । [2] D omits four lines. [3] B adds यन्त्र° । [4] D °स्वाद्य । [5] D सूतकस्य विनिर्णयं । [6] D omits रहस्याति....रूपत्वात् in the third line. [7] B °च्चित् । [8] B °ने । [9] B °वं । [10] D विहाय । [11] DU का° । [12] D द्विजातिस्तत्र सेवितं । [13] D °स्प । [14] D त्रिंशत् । [15] D °च्चशतं । [16] D समा° । [17] D सादरं । [18] U °ता ।

प्रसन्नाञ्जलिस्तु तच्चक्रं[1] तत्सिद्धिसाधनं तथा ।
सोऽहं[2] भावो मातृकाप्तिः पञ्च चैतन्यमेलनम् ॥ १४ ॥
अङ्गज्ञानञ्च तादात्म्यं[3] तदनन्तरमीरितम् ।
विसर्जनं महेशानि मृतसूतकमीरितम् ॥ १५ ॥
मृतसूतकशान्त्यर्थं दशविंशति वा जपेत् ।
तेन तस्य निवृत्तिर्हि भवत्येव न संशयः ॥ १६ ॥
केरलश्चैव काश्मीरो गौड़मार्गस्त्रयात्मकः ।
सम्प्रदायत्रये प्रोक्तं त्रितयं त्रितयं भवेत् ॥ १७ ॥
शैवकेरलकं देवि शक्तिकेरलकं तथा ।
शिवशक्तिकेरलाख्यं त्रितयं परिकीर्तितम् ॥ १८ ॥
शुद्धोग्रगुप्तभेदेन नवधा केरलं भवेत् ।
नवधा चैव काश्मीरं गौडं च नवधा भवेत् ॥ १९ ॥
विलासा[4]ख्यस्त्रिधा देवि भेदाश्चान्ये भवन्ति च ।
केरलाख्ये सम्प्रदाये हृदये च विसर्जनम् ॥ २० ॥
मनुहृद्देवतां शम्भुं[5] सहस्रारे विसर्जनम्[6] ।
[7]काश्मीराख्ये सम्प्रदाये सहस्रारे विसर्जनम् ॥ २१ ॥
गौड़मार्गे महेशानि हृदये च विसर्जनम् ।
विसर्जनं च सम्प्रोक्तं निर्णयं सूतकस्य च ॥ २२ ॥
श्रृणु यत्नेन देवेशि रहस्यं कथ्यते मया[8] ।
मन्त्रस्य सूतकं प्रोक्तं मनुष्यस्य यथा भवेत् ॥ २३ ॥
जातसूतकमादौ च तदन्ते मृतसूतकम् ।
द्वित[9]ये सूतके देवि न मन्त्रो[10]च्चारमाचरेत् ॥ २४ ॥
सन्ध्यां च मानसीं कुर्यादध्यान्तीं[11] परमेश्वरि ।
शालिग्रामं च प्रतिमां न स्पृशेत्कर्हिचित्प्रिये ॥ २५ ॥
स्पर्शात् पापी नरो[12] भूयान्नात्र कार्या विचारणा ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २६ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे सूतकविनिर्णयो नाम पञ्चचत्वारिंशतिः[13] पटलः ।

[1] B क्रमश्च । [2] D मोह° । [3] D तदर्धं । [4] D °नाशा° । [5] D तान्तं च । [6] D ° येत् । [7] D omits this line. [8] B शृणु । [9] D °ती° । [10] D वेदो° । [11] B °न्तं; U °नां । [12] U त्यागीश्वरो । [13] D सप्तचत्वारिंशत् ।

# षट्चत्वारिंशतिः पटलः ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।
तन्मे कथय देवेश पूर्वं यत्सूचितं त्वया ॥ १ ॥
पूर्वं त्वयोक्तं देवेश मन्त्रत्यागे दरिद्रता ।
दीक्षोत्तरं महेशान प्रत्यहं प्रजपेन्मनुम् ॥ २ ॥
प्राणान्तेऽपि न वै त्याज्यस्त्यागाच्छापमवाप्नुयात् ।
जपपूजां ततो जापं[1] कुर्याद्यत्नेन नित्यशः ॥ ३ ॥
पूजान्ते प्रजपेन्मन्त्रं न मन्त्रं केवलं जपेत् ।
इत्याद्युक्तं त्वया नाथ कथं त्याज्यः स वै मनुः ॥ ४ ॥

श्रीशिव उवाच ।

पूर्वकल्पः पशूनाञ्च वैष्णवानां विशेषतः ।
सन्ध्या तु वैदिकी प्रोक्ता मानसी तु तथा तव ॥ ५ ॥
त्रिसन्ध्यां तान्त्रिकीं कुर्याच्छक्तिमन्त्रे महेश्वरि ।
पूर्णाभिषेकहीने तु पूजा पञ्चोपचारिका ॥ ६ ॥
पूजोपचारैः सम्पूज्य दीपे कुड्ये[2] जले प्रिये ।
दर्पणे श्रीगुरौ देवि पशुपक्षे मनस्त्विदम् ॥ ७ ॥
पूर्णाभिषेकसंयुक्तः पूर्णरूपः स वै भवेत् ।
को वा देही कस्य देहः सुखं दुःखं च कस्य वै ॥ ८ ॥
को जातः को मृतो देवि सर्वं ब्रह्मस्वरूपकम् ।
नामपारायणं देवि [3]मन्त्रपारायणं तथा ॥ ९ ॥
नाडीपारायणं देवि चक्रपारायणं तथा ।
यन्त्रपारायणं देवि सन्ध्यानां च चतुष्टयम् ॥ १० ॥
प्रस्ताराख्यसहस्राणि तथोपस्थानरूपिणी ।
आवर्णा[4]ख्यसहस्राणि[5] विद्याकल्पलता तथा ॥ ११ ॥
द्वाविंशतिक्रमेणैव दीक्षासोपानमालिका ।
षडाम्नायस्य विज्ञानी[6] श्रीमहापञ्चिकाक्रमी ॥ १२ ॥
कादिहादिमताधीशस्तस्य वै सूतकं कुतः ।
ऊर्ध्वाम्नायी तथा देवि तथा च[7]रणदीक्षितः ॥ १३ ॥
चतुश्चरणसम्पन्नः षडन्वयक्रमी[8] तथा ।
मेधादीक्षादिसंयुक्तः साम्राज्यमेधया[9] पुनः ॥ १४ ॥

[1] D यागं । [2] U कुण्डे । [3] U omits मन्त्र°......पारायणं in the third line. [4] B °रणा° । [5] D °णां । [6] U विजानीयात्; B किंज्ञानी । [7] U °व° । [8] D षडङ्गषट्क्रमी । [9] B मध्यया; D मध्यगा ।

श्रीगुरोः पादुकाज्ञानी[1] श्रीमहापादुका तथा ।
[2]निर्वाणपादुकाज्ञानी[3] श्रीमूर्तिपादुका तथा ॥ १९ ॥

वाराहीपादुका देवि मातङ्गीपादुका तथा ।
शाम्भव्याख्यपादुकाया: श्रीमेधापादुकान्वितः[4] ॥ १६ ॥

सूतकं तस्य कुत्रास्ति पूर्णरूपः स एव तु ।
यस्मिन्काले भवेद्देवि मन्त्रदेवस्य विस्मृतिः ॥ १७ ॥

तदैव मरणं प्रोक्तं मरणं[5] मरणं नहि ।
जीवनं तु तदैव स्याद्यस्मिन् काले तु सम्भ्रमः ॥ १८ ॥

चतुर्वेदास्तूप[6]वेदाः श्रीचक्रद्वारि सन्ति च[7] ।
पूर्णाभिषेकी देवेशि यस्मिन् देशे विराजते ॥ १९ ॥

स देशो धन्यतां याति समन्तात्कोटियोजनम् ।
न व्याधिर्न च वै मृत्युर्न शत्रु[8]र्न भयं क्वचित् ॥ २० ॥

पूर्णरूपः शिवः प्रोक्तः शिव एव न संशयः ।
बहुमन्त्रवतः[9] पुंसः का कथा शिव एव सः ॥ २१ ॥

पूर्णाभिषेकी देवेशि दशविद्याविधौ स्मृतः ।
तूर्यभेदा हादिमते कादौ भेदचतुष्टयम् ॥ २२ ॥

पञ्चरत्नेश्वरी द्वेधा हादिकादिक्रमेण च ।
उग्रा का[10]दिक्रमेणैव सौम्या हादिक्रमेण च ॥ २३ ॥

कादिहादिक्रमेणैव उग्रसौम्यद्वये शिवे[11] ।
अभिषेकः शुभः प्रोक्तः सर्वसाम्राज्यदायकः ॥ २४ ॥

**श्रीदेव्युवाच ।**

अभिषेकविहीनस्य ग्रहणक्रमगस्य[12] च ।
पुरश्चर्याप्रयु[13]क्तस्य कथं भवति तद्वद ॥ २९ ॥

**श्रीशिव उवाच ।**

सूर्यग्रहणकालाद्धि नान्यः कालः प्रशस्यते ।
सूर्यचन्द्रग्रहे यद्यत्[14] कृतं वा कारितं च वा ॥ २६ ॥

तत्तदक्षय्यमायाति विद्या[15] सिद्धिप्रदा मता[16] ।
जातशौचं मृताशौचं ग्रहणे नास्ति पार्वति ॥ २७ ॥

सूर्याशौचं[17] महेशानि नान्यत्सञ्चरति क्वचित् ।
स्नानं दानं जपो होमो मार्जनं तर्पणं तथा ॥ २८ ॥

[1] U °ने । [2] B omits two lines. [3] U °ने । [4] D कां तथा । [5] D °णे ।
[6] D °स्त्रयो । [7] D °त्वं विशन्ति च । [8] D °न्नूणां । [9] D देवमनुरतः । [10] B हा° ।
[11] D प्रिये । [12] U स्वग्रहक्रमगस्य; D ग्रहक्रमरतस्य । [13] D °मु° । [14] D यच्च ।
[15] D इच्छा° । [16] B प्रसादतः । [17] D सूर्यसोमौ ।

द्विजभोज्यं शक्तियोगात्कर्तव्यं परमेश्वरि ।
संकल्पमात्रात्सिद्धिः स्याच्चन्द्रसूर्यग्रहे शिवे ॥ २९ ॥

दीक्षायोगः पीठजपो मन्त्रपारायणं तथा ।
नामनाडीचक्रम[1]न्त्रपारायणविधिर्भवेत् ॥ ३० ॥

पूर्णाभिषेकदीक्षा तु चन्द्रसूर्यग्रहे शिवे ।
सूतकेऽपि भवत्येव पूर्णस्य सू[2]तकं कुतः ॥ ३१ ॥

होमादिकं सूतकान्ते मोण:[3] प्रतिनिधिः स्मृतः ।
काली तारा छिन्नमस्ता सुन्दर्याः परमेश्वरि ॥ ३२ ॥

विशेषात् सूतकं नास्ति सर्वकालं जपेच्छिवाम् ।
अभिषेकाद्भवेच्छुद्धः सर्वरूपः सनातनः ॥ ३३ ॥

अभिषेकः पूर्णरूपः सर्वसिद्धिफलप्रदः ।
अनेकक्रमयोगेन त्वभिषेकः प्रकीर्तितः ॥ ३४ ॥

[4]पूर्णाभिषेकसंयुक्तश्चाण्डालोऽपि भवेद्यदि ।
स ब्रह्मर्षिर्महेशानि नात्र कार्या विचारणा ॥ ३५ ॥

पूर्णाभिषेकहीनोऽयमृ[5]षिवर्योऽपि पार्वति[6] ।
स ब्राह्मणाधमः प्रोक्तस्त्वभिषेके[7] द्विजोत्तमः ॥ ३६ ॥

अभिषेकाद्भवेच्छ्रेष्ठो वयोधिक्यान्न वै प्रभो
श्रीवृद्धो दीक्षया हीनो बालो दीक्षासमन्वितः ॥ ३७ ॥

पूर्णरूपो[8] भवेच्छ्रेष्ठो न वयो[9] हेतुरत्र तु ।
अपि चाण्डालजातिस्थः पूर्णदीक्षासमन्वितः ॥ ३८ ॥

स एव शिवरूपः[10] स्यान्नात्र कार्या विचारणा ।
जपपूजां तपो[11] होमं तथा ब्राह्मणभोजनम् ॥ ३९ ॥

कारयेद्यत्नतो देवि नान्तरायं[12] समाचरेत्[13] ।
आदौ मानसिकीं[14] पूजां महापूजां ततः शिवे ॥ ४० ॥

कारयेद्यत्नतो देवि नात्र कार्या विचारणा ।
पूर्णाभिषेकहीनानां पशूनां जप एव च ॥ ४१ ॥

क्वचित्प्रोक्तो महेशानि स जपो[15] हि निरर्थकः ।
यद्यप्यस्ति त्रिकालज्ञस्त्रैलोक्याकर्षणक्षमः ॥ ४२ ॥

1 D य° । 2 D मृ° । 3 BD मार्जनं । 4 B omits two lines. 5 D यः ऋ° ।
6 U °षयोऽपि च । 7 BD °की । 8 U पूर्वात्परो; D पूर्णः परो । 9 D वृद्धो ।
10 D °कल्पः । 11 U °था । 12 B नारायणं । 13 B समं चरेत् । 14 D तु मानसीं ।
B °मयो ।

लौकिकाचारं मनसाऽपि न लङ्घयेत् ।
न्ता[1]परो यस्तु तस्य पूजा महेश्वरि ॥ ४३ ॥

ात् गुरुभ्रातुस्तथाचार्यस्य हस्ततः ।
ग प्रयत्नेन न मन्त्रं केवलं जपेत् ॥ ४४ ॥

मन्त्रजापस्तु नाम इत्यभिधीयते ।
। गोपनीयं गोपनीयं स्वयोनिवत् ।
क्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ४९ ॥

ाक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
मन्त्रजापविधानं नाम षट्चत्वारिंशतिः[2] पटलः ।

four
[1] D ... न्ता° । [2] D अष्टचत्वारिंशत् ।

## सप्तचत्वारिंशतिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि यन्त्रस्थापननिर्णयम् ।

**श्रीशिव उवाच ।**

स्फाटिकं[1] स्वर्णजं रौप्यं यन्त्रं च कारयेत् प्रिये ॥ १ ॥
यन्त्रं तु गृ[2]हमित्युक्तं यन्त्रं पीठं प्रकीर्तितम् ।
यन्त्रे तु[3] पूजिता देवि सहसैव प्रसीदति ॥ २ ॥
शालिग्रामे बाणलिङ्गे जीवचक्रे महेश्वरि ।
स्थिरयन्त्रे[4] प्रतिकृतौ नावाहनविसर्जनम् ॥ ३ ॥
प्रतिष्ठाप्य महायन्त्रं न तद्यन्त्रं विसर्जयेत् ।
यन्त्रप्रतिष्ठामासाद्य विद्यां तत्र विभावयेत् ॥ ४ ॥
जीवन्यासं तत्र कृत्वा विद्यां तत्रैव[5] भावयेत् ।
[6]यन्त्रप्रतिष्ठां कृत्वादौ देवं तत्र प्रतिष्ठयेत् ॥ ५ ॥
तदा विसर्जनं नास्ति न चावाहनमेव च ।
अन्तः कालं प्रविन्यस्य[7] यन्त्रमेवं प्रतिष्ठयेत् ॥ ६ ॥
मूर्तिं स्वहृद्गतां तत्र ध्यात्वा पूज्य[8] विसर्जयेत् ।
देवप्रतिष्ठा चेद्भूयात्तदा नैव विसर्जनम् ॥ ७ ॥
इति संक्षेपतः प्रोक्तं दशविद्याक्रमेण च ।
दशधूपान् शृणु प्राज्ञे सावधानमना भव[9] ॥ ८ ॥
लोहबाणः[10] षोडशाङ्गः श्रीविद्यायां प्रकीर्तितः ।
कालीविद्याविधौ देवि अगुरुश्च दशाङ्गकः ॥ ९ ॥
अष्टादशाङ्गं श्रीखण्डं ताराविद्याविधौ स्मृतम् ।
छिन्नाविद्याविधौ देवि पञ्चाङ्गो गुग्गुलुस्तथा ॥ १० ॥
कृष्णागुरुः पीतसारो ब्रह्मास्त्रमनुगोचरः ।
आलोड्यागुरुधूपं[11] च मातंग्यां[12] परिकीर्तितम् ॥ ११ ॥
कस्तूरी चैव कर्पूरमष्टगन्धं तथैव च ।
भैरव्यां कीर्तितं देवि न विनैव शिलारसम् ॥ १२ ॥
भुवनेश्यां मया प्रोक्तं श्रीखण्डं कमलामनौ[13] ।
लाक्षागुडो हि धूम्रायां सिद्धविद्याविधौ शिवे ॥ १३ ॥
सर्वधूपस्तु संप्रोक्तः शृणु देवि वरासनम् ।
वरासनानि देवेशि कथ्यन्ते सुमुखी भव ॥ १४ ॥

[1] U की । [2] B ग्र° । [3] D °षु । [4] D °चन्द्रे । [5] B °त्र वि° । [6] D omits this line. [7] B अतः कालस्याविनाशात्; U अन्तकाले स्थितिर्यस्मात् । [8] B तत्र । [9] D भवाधुना । [10] B °णौ । [11] D °माज्यं । [12] D °ग्याः । [13] B °ननौ; U °नने ।

बाणदुन्दुभि[1]वीणादि भेरीवादित्रवेणवः ।
शङ्खघण्टापताकादि त्रिशतं पञ्चविंशतिः ॥ १५ ॥
वरासनप्रयोगो हि सर्वत्र दुर्लभो मतः[2] ।
स्तोत्रपाठश्च कवचं नामसाहस्रकं तथा ॥ १६ ॥
पूजाजपस्तथा देवि वर[3]योगे प्रकीर्तितम् ।
यदैव कार्यमुत्पन्नं यत्र कुत्रापि पार्वति ॥ १७ ॥
जपः क्वचिद्भवेद्देवि होमपूजा क्वचि[4]द्भवेत् ।
यत्र यल्लभते देवि तत्र तच्च समाचरेत् ॥ १८ ॥
तर्पणं च क्वचित्कार्यं पाठश्चैव क्वचिद्भवेत् ।
पूजाहोमौ क्वचित्कार्यौ क्वचिद् ब्राह्मणभोजनम् ॥ १९ ॥
यथालाभेन कर्तव्यं शाबरादौ विशेषतः ।
वरप्रयोगे देवेशि द्विधा वाऽसनसंहतिः ॥ २० ॥
देहासनानि देवेशि परिभाषासनानि च ।
[5]भद्रादीनि महेशानि देहजानि भवन्ति च ॥ २१ ॥
व्याघ्रमुण्डं कम्बलाश्च चर्माणि मेषजान्यपि ।
उष्ट्रजासनरूपाणि कुशादीनि यथाक्रमात् ॥ २२ ॥
परिभाषासनान्येव कथितानि मया तव ।
प्रत्येकं द्विविधो भेदस्त्वासनानां[6] महेश्वरि ॥ २३ ॥
निर्जीवानि सजीवानि सर्वसिद्धिकराणि च ।
सजीवानामभावे तु निर्जीवानि महेश्वरि ॥ २४ ॥
मुख्यानि तु सजीवानि रहस्यानि महेश्वरि ।
अश्वासनं गजश्चैव पल्की मानुषस्त[7]था ॥ २५ ॥
महिषो वृषभश्चेति भल्लुको वानरस्तथा ।
व्याघ्रश्चजम्बुको देवि मेषाजौ परमेश्वरि ॥ २६ ॥
उष्ट्रश्च मृगभेदश्च कुशमृत्प्रकृतिश्च वा ।
कुक्कुरः कुक्कुटो देवि मक[8]रः शरभस्तथा ॥ २७ ॥
गवयः शूकरश्चैव शिविरः[9] शबरः स्मृतः ।
तरणिश्च रथश्चैव शकटश्च सुखासनम् ॥ २८ ॥
दण्डि[10]का दोलिकाचक्रं चक्रदोला गृहाभिधा ।
पादासनमथारोहो नारिकेलासनं तथा ॥ २९ ॥
पूगो मधुकश्चाम्रश्च[11] वटोश्वत्थसतालकौ ।
खर्जुरः पिप्पलः प्लक्षः शमी जंबुस्तथैव च ॥ ३० ॥

[1] B °दण्डादि° । [2] D °भः स्मृतः । [3] D चर° । [4] U °द्भिर्भ° । [5] U omits four lines. [6] B शवासनानि । [7] D °षं त° । [8] U °यू° । [9] B शबरः । [10] U °ण्ड ? । [11] D °जाश्चाम्र° ।

तारा काली छिन्नमस्ता श्रीविद्याकल्पवृक्षज[1]म् ।
कुक्कुरः[2] कच्छपः खड्गी गजाख्यं च सुखासनम् ॥ ३१ ॥

गजाश्वासनकं देवि तथा नर[3]रथं शिवे ।
वृषभाख्यो हयाख्यश्च[4] महिषा[5]ख्योऽपि पार्वति ॥ ३२ ॥

नरयानं राजयानं छत्रयानञ्च पार्वति ।
तथा नरपतेर्यानं[6] अश्वनाथाभिधं तथा ॥ ३३ ॥

गजनाथाभिधं देवि साम्राज्याख्य[7]रथस्तथा ।
वरासनानि देवेशि कथितानि मया तव ॥ ३४ ॥

शतं सप्त[8]ति देवेशि भेदांस्तेषां शृणु प्रिये ।
ब्रह्मक्षत्रियविट्शूद्रजातिभेदैश्चतुर्विधाः ॥ ३९ ॥

देशभेदैर्महेशानि[9] संख्यां शृणु महेश्वरि ।
अश्वाः पञ्चविधाः प्रोक्ता जातयोष्टादश स्मृताः ॥ ३६ ॥

वाह्लीका[10]श्चव काम्बोजाः कोंकणे[11]राकसम्भवाः ।
वनजोत्थाः[12] पञ्चमाः स्युर्वर्णास्तेषां[13] शृणु प्रिये ॥ ३७ ॥

सर्वेऽपि सूर्यहयाः[14] स्युर्वर्णभेदाद् ग्रहत्वता ।
सूर्यः सोमस्तथा भौमो बुधश्च गुरुरेव च ॥ ३८ ॥

शुक्रः शनिस्तथा राहुः केतुश्च नवमः स्मृतः ।
नववर्णक्रमेणैव[15] पञ्चवर्णक्रमेण च ॥ ३९ ॥

प्रत्येकसंकरत्वेन नवति[16]श्चन्द्रन्यूनता[17] ।
पञ्चवर्णक्रमेणैव पञ्चविंशतिभेदभाक् ॥ ४० ॥

सपादशत[18]संख्या तु श्यामकर्णसमागमात् ।
अन्योन्यसंसृष्टिभेदात्त्रिशतं पञ्चसप्ततिः ॥ ४१ ॥

फलमेषां महेशानि कथ्यते शृणु साम्प्रतम् ।
सूर्यवर्णं समारुह्य विंशत्साहस्रकं जपेत् ॥ ४२ ॥

त्रैलोक्य[19]विजयी भूयान्नात्र कार्या विचारणा ।
कवचे स्तोत्रपाठे च नामसाहस्रके तथा ॥ ४३ ॥

संख्या सामान्यतः प्रोक्ता गजान्तकसहस्रकम् ।
सोमवर्णं समारुह्य दिक्सहस्रं शिवां जपेत् ॥ ४४ ॥

कीर्तिल[20]क्ष्मीपतिर्भूयान्नात्र कार्या विचारणा ।
भौमवर्णं समारुह्य त्रिसहस्रं मनुं जपेत् ॥ ४९ ॥

1 U °क° । 2 U °क्कुटः; B °वरः । 3 D °त्र° । 4 D °ख्यश्च महिषो । 5 D घोटका° ।
6 B °श्चैव । 7 B भेषजाख्य; D मया योक्ष्य° । 8 D° मे° । 9 D °दे आसनानां ।
10 B वह्लिका° । 11 U कोकरो°; D टाकणै° । 12 U पवनोत्थाः ; D यवनाख्यः ।
13 D र्नामान्येषां । 14 U रूपाः । 15 D° मयेनैव । 16 D °भि° । 17 U पूतता ।
18 D °दश° । 19 U स लोके । 20 D क्रान्तिल° ।

दरिद्रोऽपि धनाढ्यः स्यान्नात्र कार्या विचारणा ।
बुधवर्णे समारुह्य त्रिंश[1]त्साहस्रकं जपेत् ॥ ४६ ॥
रोगी रोगात्प्रमुच्येत दरिद्रो धनमाप्नुयात् ।
गुरुवर्णे समारुह्य नवसाहस्रकं जपेत् ॥ ४७ ॥
नवनिधीश्वरो भूयान्नात्र कार्या विचारणा ।
[2]भृगुवर्णे समारुह्य लक्षसंख्यं जपं चरेत् ॥ ४८ ॥
सर्वसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ।
शनिवर्णे समास्थाय[3] त्रिसहस्रं जपेत्सदा ॥ ४९ ॥
सर्वबाधाविनिर्मुक्तो मानवः स्यात् सुरो[4]पमः ।
राहुवर्णे समास्थाय सहस्राणां तु सप्ततिः ॥ ५० ॥
प्रजपेन्मानवो यस्तु स च[5] लक्ष्मीपतिर्भवेत् ।
केतुवर्णे समारुह्य पञ्चविंशत्सहस्रकम् ॥ ५१ ॥
प्रजपेन्मानवो यस्तु परराज्यजयी भवेत् ।
श्वेतवर्णे समारुह्य लक्षसंख्यं मनुं जपेत् ॥ ५२ ॥
शत्रुसेनां विनिर्जित्य राज्यभोक्ता नरो भवेत् ।
अश्वव्याघ्रासनं कृत्वा दिक्साहस्रं जपं चरेत् ॥ ५३ ॥
स्तोत्रं वा कवचं नाम यत्किंचित् प्रजपेच्छिवे ।
वाञ्छा[6]कामी नरो भूयात् त्रैलोक्यविजयी भवेत् ॥ ५४ ॥
जीवा[7]सनानि देवेशि भवन्त्येतानि निश्चितम् ।
यद्यत्कामयते कामं तत्तदाप्नोति निश्चितम् ॥ ५५ ॥
जपमात्रे पाठ[8]मात्रे होमादौ कल्पितानि च ।
श्वेत[9]रौप्यासनं कृत्वा त्रिलक्षं प्रजपेद्विभुः ॥ ५६ ॥
इन्द्रादीन् समरे जित्वा विजयी भुवि जायते ।
श्वेतवर्णासनं कृत्वा[10] सूर्यसाहस्रकं जपेत् ॥ ५७ ॥
त्रैलोक्यविजयी राजा किंकरो निधिभुग्भवेत्[11] ।
श्वेतचित्रासनं कृत्वा मन्त्रमात्रं जपेच्छिवे ॥ ५८ ॥
रक्तवर्णे नरः स्थित्वा सहस्रं प्रत्यहं जपेत् ।
शत्रुसेनां विनिर्जित्य मासाद्रा[12]ज्यमवाप्नुयात् ॥ ५९ ॥
कृष्णवर्णे समास्थाय पञ्चसाहस्रकं जपेत् ।
शत्रवो दासतां यान्ति कालीताराप्रसादतः ॥ ६० ॥
पीतवर्णे समास्थाय मन्त्रं[13] लक्षमितं जपेत् ।
राजराजो नरो भूयान्नात्र कार्या विचारणा ॥ ६१ ॥

[1] B शत° । [2] B omits two lines. [3] U °मुत्थाय । [4] B च्छुको° । [5] B शक्र° । [6] D राज्य° । [7] DU वृक्षा° । [8] D पीठ° । [9] D अति° । [10] B adds मन्त्रमात्रं जपेच्छिवे । रक्तवर्णे नरः स्थित्वा । [11] U °ति विभुर्भवेत् । [12] D साम्राड् रा° । [13] B पंच° ।

नीलवर्णाश्वमास्थाय[1] लक्षार्धं जपमाचरेत् ।
सर्वसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ॥ ६२ ॥
हरिताश्वे नरः स्थित्वा लक्षद्वयमिदं जपेत् ।
पृथ्वीपतिपदं प्राप्य त्रैलोक्यभोग[2]भाग्भवेत् ॥ ६३ ॥
धूसराश्वं[3] समाश्रित्य नित्यं पञ्चसहस्रकम् ।
मास[4]मात्रेण वेतालः किङ्करो भवति ध्रुवम् ॥ ६४ ॥
श्यामवर्णं समासाद्य[5] चत्वारिंशत्सहस्रकम् ।
प्रजपेन्मानवो यस्तु विष्णु[6]रेव न संशयः ॥ ६९ ॥
कपिलाश्वं समारुह्य लक्षं जपति भूमिपः[7] ।
विकलाश्वे नरः स्थित्वा त्रिलोकं वशमानयेत् ॥ ६६ ॥
कर्बुराश्वे समारुह्य विश्वं जयति जापतः ।
त्रिशतं प्रजपेन्नित्यं मासमात्रेण सिद्धिकृत् ॥ ६७ ॥
धूम्रवर्णं समारुह्य सर्वज्ञः साधको भवेत् ।
नानावर्णे नरः स्थित्वा प्रत्यहं शतमात्रकम् ॥ ६८ ॥
शतमात्रप्रजापेन मासाद्देवी वरप्रदा ।
द्वित्रिवेदबाणषट्कवर्णैः स्थित्वाऽयुतं जपेत् ॥ ६९ ॥
धनभोगं तथा राज्यं लोकेशत्वं[8] विभुत्वता ।
क्रमेण फलमेतद्धि[9] कथि[10]तं परमेश्वरि ॥ ७० ॥
चतुरासनयोगो हि सर्वत्र यदि चेद्भवेत् ।
साधकस्य सदा देवि किं तद्यन्न करे स्थितम् ॥ ७१ ॥
अष्टादशगतित्वेन[11] तावद्वाक्सिद्धिमाप्नुयात् ।
संकल्पमात्राद्देवेशि सिद्धिर्भवति निश्चितम् ॥ ७२ ॥
श्लक्ष्णाश्वानां[12] फलं प्रोक्तं कोङ्कणानां फलं शिवे ।
एतद्वै शून्यवादैश्च कीर्तितं परमेश्वरि ॥ ७३ ॥
काम्बोजानां[13] पक्षमात्रान्सिध्यति जपमात्रतः ।
बाह्लीकानां फलं देवि दिवसत्रयगोचरम् ॥ ७४ ॥
फलं तु पार्वतीयानां मासाद्भवति निश्चितम् ।
वर्णानां साम्यता देवि पञ्चानां च वियुज्यते ॥ ७९ ॥
गत्या पञ्चविभत्वञ्च पर्वतानां[14] विशेषतः ।
गुणिताः पञ्चसंख्याभिस्त्रयस्त्रिंशत्सहस्रकम् ॥ ७६ ॥

1 D °र्णं समारुह्य । 2 B भाग्य° । 3 D धूम्राश्वं च । 4 D जप° । 5 U °श्रित्य । 6 U °भु° । 7 U °पतिः । 8 B स्वत्त्वं; D मखेशत्वं । 9 D °तु । 10 U °लि° । 11 B °शातितत्त्वेन । 12 D श्वेताश्वानां; B श्वानीफलं । 13 B कीबोजानी । 14 B पार्वती ।

तथाष्टशतसंख्यानां मया प्रोक्ता महेश्वरि ।
नानालयप्रभे[1]देन कलौ त्वर्बुदसंख्यकाः ॥ ७७ ॥

अश्वाः प्रोक्ता मया[2] देवि पक्षच्छेदस्तदा कृतः ।
कवचं स्तोत्रपाठश्च नामसाहस्रं कीर्तितम् (?) ॥ ७८ ॥

जपमात्रेऽपि कर्तव्यं सर्वसिद्धिमभीप्सुभिः ।
शङ्कराणां फलं देवि ह्येव[3]मेव भवेद् ध्रुवम् ।
अश्वासनं तु सम्प्रोक्तं शृणु त्वं कुञ्जरासनम् ॥ ७९ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे अश्वासनं नाम सप्तचत्वारिंशतिः[4] पटलः ।

[1] D °नयन° । [2] D °हा° । [3] U °क° । [4] D ऊनपंचाशत् ।

## अष्टचत्वारिंशतिः पटलः ॥

श्रीशिव उवाच ।

पुरा स्वर्गे सुखेनासन् कामगाः खेचरा गजाः ।
मुनिशापाद् गता भूमौ कलौ जाता वनेचराः ॥ १ ॥
भद्रो मन्दो मृगो मिश्रश्चतुर्द्धा जायते गजः ।
पूर्वोत्तरतथायाम्यदिक्क्रमेण महेश्वरि ॥ २ ॥
पूर्वे गणेश्वरो देवि[1] तूत्तरे नीलकण्ठ[2]तः ।
पूर्वभागे गजाः प्रोक्ता दक्षिणे द्विविधा गजाः ॥ ३ ॥
अत्युच्च[3]श्चातिनीच[4]श्च द्विविधः परिकीर्तितः ।
अत्युच्चो मलयाद्दक्षे नीचो नीरविसम्भवः ॥ ४ ॥
सलोमश्चातिलोमश्च तत्रापि द्विविधः स्मृतः ।
पूर्वोत्तरक्रमेणैव वसुसंख्या प्रकीर्तिता ॥ ५ ॥
दक्षिणेऽष्टविधः प्रोक्तस्त्वेवं षोडशधा स्मृतः ।
गजासनं समासाद्य लक्षयुग्मं जपेच्छिवे ॥ ६ ॥
सार्वभौमो नरो भूयाद्यथायोग्यपदक्रमात् ।
भद्रासनं समासाद्य लक्षार्धं प्रजपेन्नरः ॥ ७ ॥
[5]अपि देवीं वशीकृत्य त्रैलोक्यविजयी भवेत् ।
मृद्वासने नरः स्थित्वा त्रिसहस्रं जपं चरेत् ॥ ८ ॥
मनसाऽत्र प्रयोगेन त्रैलोक्यपदमाप्नुयात् ।
मृगासने नरः स्थित्वा सहस्रं प्रत्यहं जपेत् ॥ ९ ॥
भैरवादीन् वशीकुर्यान्नात्र कार्या विचारणा ।
मिश्रा[6]सने नरः स्थित्वा नन्द[7]साहस्रकं जपेत् ॥ १० ॥
[8]षण्मासाभ्यासयोगेन किं तद्यन्न करे स्थितम् ।
दक्षदेशे गजे स्थित्वा प्रत्यहं त्रिशतं जपेत् ॥ ११ ॥
शिवतुल्यः सिद्धिदाता भवत्येव न संशयः ।
नीरविस्थ[9]गजे स्थित्वा शतजप्तं जपेत्सदा ॥ १२ ॥
[10]त्रिमासेन महेशानि राज्यलक्ष्मीमवाप्नुयात् ।
पूर्वदेशे गजे स्थित्वा स्तोत्रं वा कवचं पठेत् ॥ १३ ॥
यः कुर्यान्मानवो देवि शत्रुहन्ता भवेद् ध्रुवम् ।
उदग्देशे[11] गजे स्थित्वा सहस्रं प्रत्यहं जपेत् ॥ १४ ॥
इन्द्रतुल्यो रणे जित्वा भवेच्छरभ[12]सन्निभः ।
प[13]लकीं तु समारुह्य सर्वकालं जपेद् ध्रुवम् ॥ १५ ॥

[1] B °शदग्रे । [2] D °र्णे° । [3] B अन्त्यश्च° । [4] B नान्त्य° । [5] B omits two lines. [6] U °त्रा° । [7] B तत्र । [8] B omits two lines. [9] D °धेश्च । [10] B omits two lines. [11] B उदा दश° । [12] D शक्र° । [13] B श° ।

भूमिपालो नरो भूत्वा त्रैलोक्यविजयी भवेत् ।
गण्डकीं[1] तु समाराध्य त्रिसन्ध्यं प्रजपेच्छिवे ॥ १६ ॥
अपि दासकुले जातः सोऽपि राजा भविष्यति[2] ।
मानुषासनमासाद्य कालीमन्त्रं जपेत् सदा ॥ १७ ॥
नरनाथो भवेद्देवि नात्र कार्या विचारणा ।
महिषासनमासाद्य सहस्राणां तु सप्ततिः ॥ १८ ॥
प्रजपेत्परमेशानि शत्रुसंहारको[3] भवेत् ।
विजये मानुषे देवि विद्वेषे वृषभे जपेत् ॥ १९ ॥
वृषभासनमासाद्य दिक्सहस्रं जपेच्छिवे ।
शिवतुल्यो नरो भूयान्नात्र कार्या विचारणा ॥ २० ॥
भल्लु[4]कासनमासाद्य भैरवं प्रत्यहं जपेत् ।
वेतालसिद्धिमासाद्य शत्रुहन्ता[5] नरो भवेत् ॥ २१ ॥
सुग्रीवासनमासाद्य[6] नवसाहस्रकं जपेत् ।
राक्षसं वशगं कृत्वा शत्रुनाशकरो भवेत् ॥ २२ ॥
हनुमदासनमासाद्य लक्षमात्रं जपेच्छिवे ।
लक्ष्मीपतिसमो भूत्वा स भू[7]पालो भवेद् ध्रुवम् ॥ २३ ॥
जाम्बुवन्तं[8] समाश्रित्य जपेल्लक्षार्धमादरात् ।
रत्ना[9]धिपो नरो भूया[10]न्महामन्त्रवरो भवेत् ॥ २४ ॥
नीलासनं समाश्रित्य सहस्रार्धक[11]मादरात्[12] ।
तथा नलासने देवि तथैव चाङ्गदा[13]सने ॥ २५ ॥
राजवर्यो[14] नरो भूयान्महाविक्रमवान् भवेत् ।
व्याघ्रासनं समाश्रित्य सर्वकालं जपेच्छिवे[15] ॥ २६ ॥
[16]देवीतुल्यो नरो भूयान्नात्र कार्या विचारणा ।
व्याघ्रा दशविधाः प्रोक्तास्तत्क्रमं शृणु पार्वति ॥ २७ ॥
चित्रव्याघ्रं समासाद्य[17] कालीमन्त्रं जपेत्सदा ।
वाक्सिद्धिर्विविधा भूयान्नात्र कार्या विचारणा ॥ २८ ॥
अष्ट[18]व्याघ्रे महेशानि त्रैलोक्याधिपतिर्भवेत् ।
लक्षमात्रं जपेद्देवि वल्लीव्याघ्रं शृणु प्रिये ॥ २९ ॥
वल्लीव्याघ्रासने स्थित्वा सर्वकालं जपं चरेत् ।
माससमात्रेण सिद्धिः स्याद्देवानामपि दुर्लभा ॥ ३० ॥

[1] A पल्लकीं । [2] D भवेद्ध्रुवं । [3] B रिका । [4] B °ल्लि° । [5] B शक्रकर्त्ता । [6] D °स्थाय । [7] U क्षमा° । [8] D सिंहासनं । [9] B °सा° । [10] D भूत्वा । [11] U °ष्टक; D र्धं तु । [12] D मानवः । [13] D °जा° । [14] D °राज्यो । [15] D सुधीः । [16] D omits three lines. [17] U °श्रित्य । [18] D अथ° ।

धूसरासनमारुह्य[1] त्रिसन्ध्यं त्रिशतं जपेत् ।
त्रिकालज्ञो नरो भूयान्नात्र कार्या विचारणा ॥ ३१ ॥
अथ बिन्दुमतो[2] व्याघ्रं समाश्रित्य जपेत्सदा ।
शत्रुराज्यं विनिर्जित्य सर्वान्[3] कामानवाप्नुयात् ॥ ३२ ॥
पक्षमात्रप्रयोगो हि महाव्याघ्रं शृणु प्रिये ।
महाव्याघ्रासने स्थित्वा महाविद्यां जपेत्सदा ॥ ३३ ॥
मासमात्रेण सिद्धिः स्यात्साधकः खेचरो भवेत् ।
रोम[4]व्याघ्रासने स्थित्वा[5] त्रिसन्ध्यं त्रिसहस्रकम् ॥ ३४ ॥
पक्षाभ्यासेन[6] देवेशि खेचरत्वमवाप्नुयात् ।
कृष्णे[7] राजासने स्थित्वा प्रत्यहं शतमात्रकम् ॥ ३५ ॥
शतमात्रप्रजापेन यक्षिणीनायको भवेत् ।
महाराजव्याघ्र[8]रूपे स्थित्वा जपति कालिकाम् ।
इति संक्षेपतः प्रोक्तं शिवाख्यं शृणु पार्वति ॥ ३६ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे गजव्याघ्रासनं नामाष्टचत्वारिंशतिः पटलः ।

[1] D धूम्रासनं समारुह्य । [2] D °मता । [3] B °र्वं° । [4] D व्योम° । [5] B गत्वा ।
[6] D °सनेन । [7] B °ष्णो । [8] D पथा ।

## एकोनपञ्चाशतिः पटलः ।

**श्रीशिव उवाच ।**

शिवासनं समाश्रित्य कालीं तारां जपेत्सदा ।
सम्राट् भोक्ता नरो भूयान्नात्र कार्या विचारणा ॥ १ ॥

**श्री देव्युवाच ।**

शिवा देवी शिवा काली शिवारूपाऽहमेव हि ।
पूर्वमुक्तं त्वया नाथ विस्मृतं किं त्वया प्रभो ॥ २ ॥
शिवाबलिश्च दातव्या शिवा पूज्या[1] निरन्तरम् ।
इत्याद्युक्तं त्वया नाथ कथमारोहणं चरेत् ॥ ३ ॥

**श्रीशिव उवाच ।**

शिवापरिचयं कृत्वा शिवां पूज्य प्रयत्नतः ।
जपेन्मन्त्रं[2] महेशानि प्रोक्तमेतच्छिवासनम् ॥ ४ ॥
एषामारोहणाभावे योग्यता वाहने[3] नहि ।
तेषां[4] सङ्गे समूहे च तैः समं भोजनं चरेत् ॥ ५ ॥
तदभावे महेशानि त्वङ्निःसारणयोग्यता ।
वर्त्तते चेन्महेशानि कुलाचारक्रमेण च ॥ ६ ॥
सर्वं विज्ञाय यत्नेन हये वा शकटे रथे ।
पल्यङ्क्यां सुखया[5]ने वा गजे वाऽपि रथेऽपि वा ॥ ७ ॥
अन्यमासनमादाय तत्र स्थित्वा जपं चरेत् ।
शोधनं व्याघ्रवत्कार्यं प्रकृतं कथ्यते शृणु ॥ ८ ॥
मेषा[6]सनं समारुह्य दिवारात्रं जपेन्मनुम् ।
षण्मासाभ्यासयोगेन शाकिनी वरदा भवेत् ॥ ९ ॥
अजासने नरः स्थित्वा[7] निशि जप्यादिने दिने ।
मासपञ्चकयोगेन पञ्चकाम[8]समो भवेत् ॥ १० ॥
उष्ट्रासनं समारुह्य ताम्बूलपूरिताननः ।
मन्त्रमात्रं जपेद्देवि मासत्रयं[9] निरन्तरम् ॥ ११ ॥
दुष्टसत्त्व[10]विनाशश्च भवत्येव न संशयः ।
मृगासने नरः स्थित्वा सर्वकालं जपेच्छिवे ॥ १२ ॥
राजराजसमो भूयाद्वायु[11]तुल्यपराक्रमः ।
एतेषाञ्च कुशे[12]नैव प्रकृतिं कारयेत्प्रिये ॥ १३ ॥
तत्र स्थित्वा जपं कुर्यादेतदेव फलं लभेत् ।
मृत्तिकाप्रकृतिं कृत्वा प्राणस्थापनमाचरेत् ॥ १४ ॥

[1] B पूजा; U ज्योति° । [2] U प्रजपेत्तत्; D °त्तत्र । [3] B °रोहणे । [4] D एषां । [5] B मा° । [6] D °धा । [7] D समारुह्य । [8] U °य° । [9] D °मात्रं । [10] U °त्य च । [11] D °राम° । [12] D °ले° ।

तत्र स्थित्वा जपेद्देवि फलमेतद्भवेद् ध्रुवम् ।
कुक्कटा[1]सनमारुह्य[2] सर्वकालं जपेन्मनुम् ॥ १९ ॥
वेतालः किङ्करो भूयाद् भैरवः सुप्रसीदति[3] ।
कुक्कुटा[4]सनयोगेन किं तद्यन्न करे स्थितम् ॥ १६ ॥
कुक्कुरा[5]सनमारुह्य जपेदिष्टमनुं[6] शिवे ।
सर्वकामानवाप्नोति नात्र कार्या विचारणा ॥ १७ ॥
म[7]यूरासनमासाद्य मासमात्रं जपेन्मनुम् ।
कार्त्तिकेयसमो भूयान्नात्र कार्या विचारणा ॥ १८ ॥
शरभासनमारुह्य अहोरात्रं जपेच्छिवे ।
सर्वसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ॥ १९ ॥
गवयासनमारुह्य सर्वदुःखानि[8] नाशयेत् ।
शूकरासनमासाद्य त्रिकालं प्रजपेन्मनुम् ॥ २० ॥
सर्वपापविनिर्मुक्तो मानवो भवति ध्रुवम् ।
शबरा[9]सनमारुह्य मन्त्रमष्टसहस्रकम् ॥ २१ ॥
गन्धर्वाधिपतिर्भूयान्नात्र कार्या विचारणा ।
शबरासनमारुह्य मन्त्रं लक्षमितं जपेत् ॥ २२ ॥
अणिमां लभते धीरो नात्र कार्या विचारणा ।
तरणीं[10] तु समारुह्य सर्वकालं जपेच्छिवे ॥ २३ ॥
महाविद्येश्वरो भूयान्नात्र कार्या विचारणा ।
महानौकां समाश्रित्य कामिनी* * * चरेत् ॥ २४ ॥
* * सनमासाद्य त्रैकालज्ञानमाप्नुयात् ।
रथमारुह्य प्रजपे[11]ल्लक्षसंख्यं मनुं शिवे ॥ २९ ॥
लक्षजापेन देवेशि चक्रवर्तित्वमाप्नुयात् ।
रथासनं समारुह्य कामिनी * * * चरेत् ॥ २६ ॥
* * सनयोगेन ब्रह्माण्डनायको भवेत् ।
शकटासनमासाद्य[12] सर्वकालं जपेच्छिवे ॥ २७ ॥
मासत्रय[13]प्रयोगेण त्रैलोक्यं वशमानयेत् ।
शकटासनमारुह्य का[14]मिनी * * * चरेत् ॥ २८ ॥
* * * * * * देवि कालिकारूपभाग्भवेत् ।
सुखासने नरः स्थित्वा चतुर्यामं[15] निरन्तरम् ॥ २९ ॥
जपं कुर्यान्महेशानि सर्वसिद्धीश्वरो भवेत् ।
सुखासने * * कृत्वा भैरवीं[16] प्रजपेत्सदा ॥ ३० ॥

[1] D °रा° । [2] B ° साद्य । [3] U नात्र कार्या विचारणा । [4] D °रा° । [5] D °टा° । [6] D °दिगम्बरः । [7] D मा° । [8] U ° खं वि° । [9] B शरभा° । [10] B तारिणीं । [11] U °प्नू । [12] D °रुह्य । [13] D °मात्र° । [14] B भा° । [15] B °मी । [16] D °वं ।

त्रैलोक्यविजयी भूयान्नात्र कार्या विचारणा ।
दण्डिका[1]रोहणं कृत्वा जपेद्दशसहस्रकम् ॥ ३१ ॥
सर्वशत्रून् विनिर्जित्य सर्वत्र जयमाप्नुयात् ।
दोलासनं समाश्रित्य त्रिसन्ध्यं च सहस्रकम् ॥ ३२ ॥
देवीं ध्यात्वा जपेन्मन्त्र[2]मिष्टसिद्धिमवाप्नुयात् ।
दोलासने नरः स्थित्वा * * कृत्वा प्रवीक्ष्य[3] च ॥ ३३ ॥
प्रजपेद्यदि देवेशि भवेत्स्पर्शमणिर्यथा ।
चक्रासने नरः स्थित्वा त्रिसहस्रं जपेन्मनुम् ॥ ३४ ॥
त्रैलोक्यभ्रामरी शक्तिस्तस्य हस्ते व्यवस्थिता ।
दोलाचक्रासने स्थित्वा कालिकां वा जपेत्सदा ॥ ३५ ॥
सर्वसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ।
पादासनं समारुह्य सर्वकाल[4]मसंख्यकम् ॥ ३६ ॥
मन्त्रमात्रं जपेद्देवि वाञ्छा[5]सिद्धिमवाप्नुयात् ।
पादासनपरो भूत्वा कामिनीध्यानतत्परः ॥ ३७ ॥
कामिनीकान्तया संगे[6] हस्ताहस्तिकया शिवे ।
लक्षमात्रं जपेन्मंत्रं सर्वसिद्धीश्वरो भवेत् ॥ ३८ ॥
कामिनीपृष्ठमाश्रित्य * * * प्र[7]दापयेत् ।
पृष्ठे रुद्रं प्रलाप्याऽथ लक्षमात्रं जपेच्छिवे ॥ ३९ ॥
सर्वसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ।
पृष्ठतो धावनं कृत्वा कामिन्या सह पार्वति ॥ ४० ॥
सर्वसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ।
कुररासन[8]मारुह्य निशि जप्याद्दिने दिने ॥ ४१ ॥
डाकिनीमेलनं भूयान्नात्र कार्या विचारणा ।
कच्छपासन[9]मारुह्य सर्वदा प्रजपेन्मनुम्[10] ॥ ४२ ॥
सर्वबाधाविनिर्मुक्तः[11] सर्वसिद्धीश्वरो भवेत् ।
खड्गासनं समारुह्य त्रिसन्ध्यं प्रजपेन्मनुम् ॥ ४३ ॥
सर्वसिद्धिसमायुक्तो गुटिकां लभते ध्रुवम् ।
सुखासने गजाख्ये तु स्थित्वा जपति शङ्करः[12] ॥ ४४ ॥
सुखासने गजाख्ये तु कामिनी * * * ।
प्रजपेद्यत्नतो देवि सृष्टि[13]कर्त्ता भवेद् ध्रुवम् ॥ ४५ ॥
गजाख्यासनके स्थित्वा त्रिसन्ध्यमयुतं जपेत् ।
महीपतिर्नरो भूयान्नात्र कार्या विचारणा ॥ ४६ ॥

1 U दोलिका° । 2 D °न्नित्यं । 3 B °विश्य । 4 U । °म° 5 D दीक्षा° ।
6 D °पात्रधामाङ्ग° । 7 U °न दा° । 8 U कूर्मासने स° । 9 D काष्ठासनं स° । 10 B °न्नरः ।
11 D °नाशाय । 12 B । शाङ्करि 13 U शक्र° ।

स्थित्वा नररथे देवि विद्या[1]स्तोत्रं जपेत्तदा ।
सर्वदेवेश्वरो भूयान्नात्र कार्या विचारणा ॥ ४७ ॥
स्थित्वा नररथे देवि कामिनी * * * * * * ।
त्रैलोक्यराज्यं लभते यदि सा चञ्चला यदि ॥ ४८ ॥
पञ्चवर्णवृषे देवि तद्रथे शकटे प्रिये ।
फलं तु हयवत् प्रोक्तं विशेषं शृणु पार्वति ॥ ४९ ॥
वलीवर्द्दरथे स्थित्वा सर्वकालमसंख्यकम् ।
प्रजपेन्मनवो यस्तु किङ्करोऽपि धनी भवेत् ॥ ५० ॥
वलीवर्द्दरथे स्थित्वा * * * * * * चरेत् ।
* * * * जपेद्देवि त्रिकालज्ञो नरो भवेत् ॥ ५१ ॥
तथा वाजिरथे स्थित्वा मन्त्रमिष्टार्थदायकम् ।
इष्टार्थसिद्धिर्देवेशि भवत्येव न संशयः ॥ ५२ ॥
तथैव सुरथे गत्वा * * * * * * * ।
वाक्सिद्धिर्लभते देवि नात्र कार्या विचारणा ॥ ५३ ॥
महिषाख्ये रथे स्थित्वा त्रिलक्षाल्लोकनायकः ।
तुषारमहिषे स्थित्वा लक्षं जपति शत्रुजित् ॥ ५४ ॥
महानरपतेर्याने स्थित्वा जपति मानवः ।
महाहयपतेर्याने स्थित्वा पञ्चसहस्रकम् ॥ ५५ ॥
प्रजपेद्यत्न[2]तो देवि इच्छासिद्धिर्भवेद्[3] ध्रुवम् ।
महागजपतेर्याने स्थित्वा चैव त्रिसन्ध्यकम् ॥ ५६ ॥
त्रिसहस्रं जपेद्देवि सर्वसाम्राज्यनायकः ।
मेषाख्यरथमारुह्य जपाद्विद्वेषकर्मकृत् ॥ ५७ ॥
अजाख्यरथमारुह्य महाप्रीतिकरो भवेत् ।
सुखासने गजे वापि सर्वाः सिध्यन्ति सिद्धयः ॥ ५८ ॥
यथा पायसहोमेन सर्वकामानि सं[4]लभेत् ।
तथा गजासने स्थित्वा सर्वकार्याणि साधयेत् ॥ ५९ ॥
स[5]रभे देवदेवेशि परराज्यजयी[6] भवेत् ।
करिण्यां तु महेशानि परकन्यावशं नयेत् ॥ ६० ॥
अश्विन्यां व[7]रमाराध्य सर्वकामप्रकामकृत् ।
सुखासनं समारुह्य जपेद् भैरवमादरात् ॥ ६१ ॥
सर्वसङ्कटमुत्तीर्णो मासमात्रे[8] भवेन्नरः ।
गजासनं समारुह्य जपेत्सप्तशतीस्तवम् ॥ ६२ ॥

[1] B त्रिवा; D omits विद्या°......देवि in the third line. [2] B वलतो । [3] B °र्लभे° । [4] D°मफलं । [5] D क° । [6] U °यो । [7] B प° । [8] D °त्रयाद् ।

सर्वबाधाविनिर्मुक्तः पक्षावर्त्तनयोगतः ।
सर्वाणि साधयेद्देवि कीर्त्तितान्यासनानि च ॥ ६३ ॥

व[1]रप्रयोगा देवेशि शाबरे सर्वसिद्धिदा ।
अश्वा[2]सने नरः स्थित्वा त्रिशक्तिं प्रजपेत्सदा ॥ ६४ ॥

[3]त्रैलोक्यविजयी भूयात् सर्वकार्याणि साधयेत् ।
एतेषामस्थिसारेण मालिकां कारयेद्बुधः ॥ ६५ ॥

तेन जापः प्रवर्तव्यस्तत्रारुह्य जपं चरेत् ।
तत्र तस्यासने स्थाप्य त्रैलोक्याधिपतिर्भवेत् ॥ ६६ ॥

संख्या सामान्यतः प्रोक्ता सर्वकर्माणि साधयेत् ।
वी[4]रासनानि देवेशि गदितानि मया तव ॥ ६७ ॥

जपसंकल्पपू[5]र्तिस्तु भवेन्मा भवतु प्रिये ।
तथाप्यासनयोगेन शीघ्रसिद्धिर्भवेद् ध्रुवम् ॥ ६८ ॥

जीवचक्रे यथा सिद्धिस्तथा जीवासने प्रिये ।
रहस्यातिरहस्यं च गोप्तव्यं पशुसङ्कटे ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ६९ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे शिवासनादि नामैकोनपञ्चाशतिः पटलः ॥

[1] B च°। [2] D °श्रा°। [3] D omits three lines. [4] B च°। [5] U मू°।

## पञ्चाशतिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि पूर्वोक्तानां विनिर्णयम् ।

**श्रीशिव उवाच ।**

रहस्यातिरहस्यं च कथ्यते शृणु पार्वति ॥ १ ॥
[1]नारिकेलं समारभ्य जंबुपर्यन्तमेव च ।
कदलीमण्डलं कृत्वा कदलीवनमेव च ॥ २ ॥
प्रजपे[2]द्यत्नतो यस्तु तारासिद्धिमवाप्नुयात् ।
कुलवृक्षास्ततो देवि सर्वेषां फलमुच्यते ॥ ३ ॥
नारिकेलै[3]र्लभेद्राज्यं पूगैश्चैव मनोरथान् ।
मधुके कामिनीप्राप्तिश्चाम्रे सर्वज्ञता मता ॥ ४ ॥
[4]वटे त्रैकाल्यविज्ञानमश्वत्थे सर्वकामना: ।
तालवृक्षे जयावाप्तिः खर्जूरे राज्यमानता ॥ ५ ॥
पिप्पले सर्ववश्यत्वं प्लक्षे चावर्षणं परम् ।
राज्यलक्ष्मीः शमीवृक्षे जम्बुवृक्षे धनागमः ॥ ६ ॥
दिक्सहस्रं जपेद्देवि सर्ववृक्षे निरन्तरम् ।
समारुह्य जपेद्देवि नात्र कार्या विचारणा ॥ ७ ॥
श्लेष्मान्तककरंजाख्यबिल्वाश्वत्थकदम्बकम् ।
निम्बो वटोदु[5]म्बरश्च चम्पकः केस[6]रो दश ॥ ८ ॥
दशवृक्षं समासाद्य प्रत्येकं दिक्सहस्रकम् ।
प्रजपेद्यत्नतो देवि अणिमाद्यष्टकं तथा ॥ ९ ॥
मोक्षकामः क्रमेणैव लभते नात्र संशयः ।
कालीवृक्षाः समुद्दिष्टाश्छिन्नावृक्षान् शृणु प्रिये ॥ १० ॥
श्लेष्मान्तकं विभीतं च शाखो[7]टं खर्जुरं तथा ।
पिप्पलं च वटञ्चैव सुपुष्पां च सुवासिनीम् ॥ ११ ॥
निम्बाश्वत्थं करञ्जं च श्लेष्मान्तककदम्बकौ[8] ।
बिल्वं वटं शालतालौ शाखोटं[9] खर्जुरं तथा ॥ १२ ॥
ताराविद्याविधौ[10] प्रोक्ताः श्रीविद्यायां शृणु प्रिये ।
पूर्वं द्वादशसंख्यातास्तथैव श्रीविधौ[11] स्मृताः ॥ १३ ॥
एतेषामपि देवेशि फलं तु पूर्ववद्भवेत् ।
इति संक्षेपतः प्रोक्तं[12] देवतासननिर्णयम् ॥ १४ ॥

[1] B omits this line. [2] U पूजये° । [3] B °रै° । [4] D omits three lines. [5] D °ड्ड° । [6] B °श° । [7] U °ह्यो°; D °को° । [8] D करञ्जकौ । [9] U °ह्योटं°; D ताराया: । [10] D ताराविधौ तु सं° । [11] D °स्ताश्चयस्तद्विधौ । [12] D adds किमन्यच्छ्रोतुमिच्छसि । इति ते कथितो देवि ।

कथ्यते देवदेवेशि यथावदवधारय ।
श्रीविद्या देवदेवेशि पञ्चप्रेतासनस्थिता ॥ १९ ॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
एते पञ्च महाप्रेताश्चतुष्कं पादगोचरम्[1] ॥ १६ ॥
सदाशिवस्तु कशिपुः कामेशश्छादनं[2] भवेत् ।
तत्रस्था सुन्दरी देवि कालिकायां[3] शृणु प्रिये ॥ १७ ॥
अतिकालः करालश्च विकरालः कपालधृक् ।
चतुष्टयं पादरूपं[4] संहारः कशिपुः स्मृतः ॥ १८ ॥
महाकालश्[5]छादनं स्यात्तद्हृदिस्था तु कालिका ।
* * * * प्रोक्ता श्रीमहाकालिकाम्बिका ॥ १९ ॥
महाश्मशाननिलया प्रत्यालीढपदा वरा ।
शव[6]सिंहासनगता महोग्रतारिणी मता ॥ २० ॥
श्मशाननिलया छिन्ना शवविष्टरसम्मता ।
शवरूपकरालस्य हृदयोपरि संस्थिता ॥ २१ ॥
* * * * स्वयम्भूपुष्पसंयुता ।
छिन्ना विद्या महेशानि महाकालकलां शृणु ॥ २२ ॥
श्मशानप्रज्वलद्घोरमहाप्रलयसंयुतम् ।
शवोपरि स्थितं देवं महासंहारभैरवम् ॥ २३ ॥
तेन सार्धं * * * * श्रीमहाकाम[7]कालिका ।
एवमन्येऽपि काल्यां स्युर्बगलां शृणु पार्वति ॥ २४ ॥
स्वर्णसिंहासनस्था वा[8] पञ्चप्रेतस्थिता पि च ।
द्विविधा गदिता देवि सिद्धविद्यां शृणु प्रिये ॥ २५ ॥
[9]प्रेतासनगतां देवि उच्छिष्टभोजनोद्यताम् ।
राजमातंगिनीं देवीं कदम्बवनमध्यगाम् ॥ २६ ॥
सिंहासनगतां रम्यां भैरवीं शृणु पार्वति ।
प्रेतपञ्चकसंयुक्तां श्रीमहाकालभैरवीम् ॥ २७ ॥
धूमावतीं मलिनाङ्गीं[10] काकासनसमन्विताम् ।
पद्मासनस्थां श्रीलक्ष्मीं भुवनेशीं पराम्बिकाम् ॥ २८ ॥
रत्नसिंहासनगतां भुवनेशीं पराम्बिकाम् ।
योगकालीं महाविद्यां महाप्रलयकारिणीम् ॥ २९ ॥
शुष्कमांसां चोपविष्टां तडागजठरां शिवाम् ।
कुक्कुटासनमारूढां शवोपरि समास्थि[11]ताम् ॥ ३० ॥

[1] D °राः । [2] U °शो नन्दनं; D °शाच्छादनं । [3] U °याः । [4] BD °पे ।
[5] D °ला° । [6] D नर° । [7] U °ल° । [8] D °स्थायां । [9] B omits two lines.
[10] D °मसीमाङ्गी । [11] U °श्रि°

दक्षपाणौ[1] खर्परञ्च[2] दक्षजङ्घोपरि स्थितम्[3] ।
वामपाणौ[4] खर्परञ्च अधोमुखसमन्वितम् ॥ ३१ ॥
ब्रह्माण्डसंहतिं कृ[5]त्वा शून्यखर्पर[6]धारिणी ।
[7]नाहं तृप्ता वदन्तीति शवास्फालनतत्परा ॥ ३२ ॥
कोटराक्षी नागभूषा नागकङ्कणधारिणी ।
कुण्डले मुकुटे[8] चैव नागो चैव गले हृदि ॥ ३३ ॥
बिभ्रती परमा देवी हृदि वृश्चिकसंयुता ।
संहारवृश्चिकं देवि हृदये बिभ्रती शिवा ॥ ३४ ॥
प्रलयानलसंकाशा मुखाम्भोजविकाशिनी ।
श्मशानशवसङ्घैश्च मुण्डशवै[9]र्निनादिता[10] ॥ ३५ ॥
मृगयोद्युक्तहृद्ब्रह्मरुद्रविष ादिभक्षिणी[11] ।
प्रातर्बाला तु मध्यान्हे तरुणी रूपधारिणी ॥ ३६ ॥
सायाह्ने वृद्धरूपा वा महाप्रलय[12]कारिणी ।
लम्ब[13]शुष्कस्तनी भक्ता वरदानमुखो[14]द्यता ॥ ३७ ॥
भक्तान्वेषणसंव्यग्रा वीरास्फालनिनादिनी ।
तेजःपुञ्जसमाकारा शून्यब्रह्माण्डवासिनी ॥ ३८ ॥
भक्तः क्वास्ति वरं ब्रूहि प्रसन्नास्मीति भाषिणी[15] ।
अनाद्यन्ता परातीता चिदग्निरूपधारिणी ॥ ३९ ॥
परब्रह्मेश्वरी विद्या श्रीमहायोगकालिका ।
घटीत्रितयसंतुष्टा स्मरणाद्वरदायिनी ॥ ४० ॥
वृषभस्थं महारुद्रं मूषकस्थं विनायकम् ।
मयूरस्थं कार्तिकेयं विष्णुं गरुडवाहनम् ॥ ४१ ॥
सर्प[16]स्थं गरुडं देवं सिंहस्थं च विनायकम् ।
सिंहस्थां श्रीपरां दुर्गां महामहिषमर्दिनीम् ॥ ४२ ॥
एकचक्र[17]स्थितं सूर्यं मृगस्थं चण्ड[18]दैवतम् ।
योगपीठस्थितं रामं पद्मासनसमन्वितम् ॥ ४३ ॥
वटवृक्षादधो भागे वीरासनगतं विभुम् ।
[19]श्रीमहादक्षिणामूर्तिं शवस्थं हनुमद्विभुम् ॥ ४४ ॥
वेतालं मुण्डपद्मस्थं भैरवाः शवसंस्थिताः[20] ।
द्वादशारे महापद्मे कर्णिका[21]शव[22]संयुते ॥ ४५ ॥

1 B दंष्ट्रपाणिः । 2 U कूर्परं च; D दर्पणं च । 3 D तदधः परिसंस्थिता । 4 B °पाणिः । 5 B हृ° । 6 B पर्वत° । 7 U omits two lines. 8 D कटके । 9 U °वीरै° । 10 U °दिनी । 11 U भाषिणी । 12 D जयजय° । 13 B लव° । 14 D °रतो° । 15 B °विनी । 16 B °वै° । 17 U °न्द्र° । 18 U चन्द्र° । 19 D omits this line. 20 U °संयुता । 21 D कालिका° । 22 B °शिव° ।

प्रवीणशवपृष्ठस्थं बटुकं सात्विकं[1] विभुम् ।
पद्मस्थं शवमूर्ध्निस्थं[2] हस्ताहस्तिकया युतम् ॥ ४६ ॥
तद्धस्तमुण्डपद्मस्थं बटुकं क्रूरकर्मणि ।
नौकारूढ़ो महानीलो गजारूढ़ो महापतिः[3] ॥ ४७ ॥
अन्तरिक्षासनगताः सर्वे देवाः प्रकीर्तिताः ।
ब्रह्मराक्षसनाथो हि वृक्षा[4]रूढः प्रकीर्तितः ॥ ४८ ॥
शवारूढो महाकालः सद्यःप्रेतस्थिता[5] शिवा ।
गुह्यकाली कुब्जिकाख्या महाविद्या प्रकीर्तिता ॥ ४९ ॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
इन्द्रश्च भैरवश्चैव सप्तप्रेताः प्रकीर्तिताः ॥ ५० ॥
गुह्यकाल्या[6]सनं प्रोक्तं शृणुश्व कुब्जिकासनम् ।
पञ्चप्रेतगता देवि कुब्जिका परमा कला ॥ ५१ ॥
अश्वासन[7]गता देवि वाराही परिकीर्तिता ।
[8]सम्पत्सरस्वती देवी रथारूढ़ा प्रकीर्तिता ॥ ५२ ॥
गोप[9]चक्ररथारूढ़ा अघोरा परिकीर्तिता ।
शवासना तु वाराही तत्तत्कार्ये प्रकीर्तिता ॥ ५३ ॥
नकुलस्था नकुलेशी[10] नरारूढ़ो धनेश्वरः ।
मकरस्था जाह्नवी स्यात् पद्मस्था मणिकर्णिका ॥ ५४ ॥
रेणुका एकवीरा[11]ख्या रत्नसिंहासनान्विता ।
श्वेताश्वस्था मधुमती त्रैलोक्यवक्त्रकंजगा[12] ॥ ५५ ॥
ब्राह्मी[13] हंसगता प्रोक्ता चामुण्डा शववाहिनी ।
गिरिचक्ररथारूढ़ा श्मशानभैरवी मता[14] ॥ ५६ ॥
इति संक्षेपतः प्रोक्तं विशेषः पूर्वमीरितः ।
गोपनीयं गोपनीयं गोपनीयं पुनः पुनः ॥ ५७ ॥
गोपनीयं गोपनीयं स्वयोनिरपरा यथा ।
रहस्यमपि संप्रोक्तं यन्न कस्यापि कीर्तितम् ।
इतः[15] परं किं वक्तव्यं[16] किमन्यच्छ्रोतुमिच्छसि ॥ ५८ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे देवतासननिर्णयो नाम पञ्चाशतिः पटलः ।

[1] D मासिकं । [2] U युग्मं च; D युक्तं च । [3] U अहस्पतिः; D महस्पतिः । [4] U यक्षा° । [5] U °तासना । [6] B °ह्या° । [7] U अथासना; D अश्वसेन° । [8] D omits this line. [9] B गेय° । [10] D नन्दनस्थलनन्दीश । [11] D °चक्रा° । [12] D °का । [13] D ब्रह्म° । [14] D स्मृता । [15] D अतः । [16] B किञ्च कथं ।

## एकपञ्चाशतिः पटलः ।

**श्रीदेव्युवाच**

सौभाग्याभरणं देव ममाग्रे कथय प्रभो ।

**श्रीशिव उवाच**

रहस्यं कथितं देवि गोप्याद् गोप्यतरं कुरु[1] ॥ १ ॥
पुरुषस्य तथा स्त्रीणां बालकानां विशेषतः ।
धारणात् सिद्धिदं देवि यन्त्रं च भूषणं भवेत्[2] ॥ २ ॥
कर्णयुग्मे च मुकुटे बाह्वोश्च मणिबन्धके ।
कराङ्गुलिषु पादाभ्यां धारणात्फलदं[3] शिवे ॥ ३ ॥

क्रमेण यन्त्रवर्याणि कथ्यन्ते शृणु पार्वति ।
कूर्म[4]पृष्ठं[5] समासाद्य कोष्ठानां नवकं लिखेत् ॥ ४ ॥
मध्यकोष्ठे भवेज्जीवश्चन्द्रेनैव मुखं भवेत् ।
बाहुद्वयं च परितः कुक्षियुग्ममधः शिवे ॥ ५ ॥
तदधः पाद[6]युग्मं स्यात्[7] गुह्यं तत्पादगोचरम् ।
विन्यासः कथितो[8] देवि साम्राज्यमुद्रिकामनोः[9] ॥ ६ ॥
साम्राज्यमुद्रिका नाम ताराकालीमयी परा ।
एतस्या धारणाद्देवि त्रैलोक्यविजयी भवेत् ॥ ७ ॥
[10]यद्यदिच्छति कामानि तत्तदाप्नोति मानवः ।
वामबाहौ विशेषेण पुरुषस्य महेश्वरि ॥ ८ ॥
स्त्रीणां दक्षकरे धार्यं बालानां हृदये शिवे ।
कराङ्गुलिषु सन्धार्य सर्वं जयति[11] मानवः ॥ ९ ॥

वाजिगत्या हस्तिगत्या मृगगत्या महेश्वरि ।
सर्पगत्या भेकगत्या मन्त्रिगत्यापि भृत्यतः ॥ १० ॥
एतद्गत्या महेशानि लिखेद्यन्त्रमनन्यधीः ।
गजगत्या जयार्थञ्च वाजिगत्या पराक्रमे ॥ ११ ॥
मृगगत्या शत्रुनाशे सर्पगत्या तु मारणे ।
भेकगत्या तु विद्वेषे मन्त्रिगत्या वि[12]मोहने ॥ १२ ॥
भृत्यगत्या सर्वकार्ये गतिरेषा[13] सनातनी ।
मध्यकोष्ठं समारभ्य विन्यासः कथ्यते शृणु ॥ १३ ॥
आदौ परा तत्परा[14] च तदतीता तृतीयका ।
चित्परा तु चतुर्थी च तत्परा पञ्चमी स्मृता ॥ १४ ॥

[1] D गुरुं । [2] B वदे; U च वै । [3] B त्पुत्रदं । [4] B कर्म° । [5] U कोष्ठं । [6] U शव° ।
[7] U °स्थं । [8] BD °च्यते । [9] D °सनाः । [10] B omits two lines. [11] B व्रजति ।
[12] D च । [13] D बोधा । [14] D परात्परतरा ।

तदतीता रसाख्या तु सर्वातीता तु सप्तमी ।
कलासप्तकसंयुक्तः प्रणवः परिकीर्तितः ॥ १५ ॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
शक्ति[1]श्च तदतीता च अकारोकार एव च ॥ १६ ॥
मकारो नादबिन्दुश्च ना[2]दातीता तदुत्तरम् ।
बिन्द्वतीता[3] सप्तमी स्यान्मध्यकोष्ठे समास्थिता ॥ १७ ॥
चन्द्रो मुखं[4] महेशानि टङ्कास्त्रं तच्च[5] कीर्तितम् ।
दक्षबाहौ महेशानि रुद्रसंख्या प्रकीर्तिता ॥ १८ ॥
हकारश्च रकारश्च ईकारश्च सबिन्दुमत् ।
बिन्द्वतीता तु षष्ठी स्याच्चैव[6]शाक्तक्रमेण च ॥ १९ ॥
गुह्यभागे महेशानि स्त्रीबीजान्वितरूपिणी ।
उग्रोग्रचण्डा चामुण्डा चण्डोग्रा[7] चण्डघण्टिका[8] ॥ २० ॥
महोग्रतारा[9] उग्रेशी त्रिजटैकजटा स्मृता ।
क्रूर[10]चण्डा घोरचण्डा वीरोग्रा वीरतारिणी ॥ २१ ॥
सर्वापत्तारिणी तीव्रा चीन[11]तारा सुरेश्वरी ।
सिद्धितारा रिष्टि[12]तारा घोरतारा परा[13] स्मृता ॥ २२ ॥
उग्रोग्रतारा देवेशि रणोग्रा चन्द्रगोचरा ।
त्रिकोणकोष्ठमालम्ब्य[14] स्त्रीबीजञ्च व्यवस्थितम् ॥ २३ ॥
वामपादं समारभ्य वामबाहूत्तरं शिवे ।
बीजद्वयं तु संव्याप्य सदा तिष्ठति पार्वति ॥ २४ ॥
चन्द्रघण्टा चण्डघण्टा वीरघण्टा सुघण्टिका ।
राज[15]घण्टा मोह[16]घण्टा घोरघण्टा रणाभिधा ॥ २५ ॥
शवघण्टा चीनघण्टा सिद्धिघण्टा तथा परा ।
घण्टोग्रघण्टा[17] मुण्डाख्या घण्टाविद्याभिधानतः[18] ॥ २६ ॥
[19]सैन्यघण्टा जयाख्या च मोहनाख्या[20] तथैव च ।
आकर्षणाख्या घण्टा तु विंशत्सङ्ख्याभिधानतः ॥ २७ ॥
सार्धपञ्चाक्षरं व्याप्य यन्त्रमेतत् सदा स्थितम्[21] ।
तत्रैव बटुकं व्याप्य सर्वं[22] तिष्ठति पार्वति ॥ २८ ॥
पंचा[23]वरणदेवाश्च सर्वे चात्र वसन्ति च ।
एतद्यन्त्रं तु सन्धार्य त्रैलोक्यविजयी भवेत् ॥ २९ ॥

1 D शान्ति° । 2 U त° । 3 B बिन्दुवती । 4 B °खे । 5 B तेषु । 6 D न्यसेत् । 7 D प्रचण्डा; U वज्रोग्रा । 8 U reads verse 19 after this instead of at its proper place. 9 B महातारा तु । 10 U कूट° । 11 B नाना° । 12 U ऋषि° । 13 B यदा । 14 D °नस्य । 15 D रक्त° । 16 D देह° । 17 B घण्टोद्घण्टा । 18 D °भिधं ततः । 19 U omits two lines. 20 B °वश्ये । 21 D यं यं तत्तत् सदा स्थितिः । 22 U वाञ्छा ! 23 U यन्त्रा° ।

त्रिपंक्तिक्रमयोगेन सर्पाख्य[1]गतिमागत[2]: ।
मायायुग्मं कुर्चयुग्मं कालीवीजत्रयं तथा ॥ ३० ॥
दक्षिणे कालिके माया बीजयुग्मं च कूर्चयुक्[3] ।
कालीविद्या[4] महाविद्या द्वाविंशतिविधा[5] मता ॥ ३१ ॥
काली[6]मारभ्य देवेशि कुटिलालकदेवताः ।
यावत्स्याद्देवदेवेशि ताव[7]द्व्याप्य प्रतिष्ठते ॥ ३२ ॥
तृतीयं द्वितीयं देवि त्रितयं तु क्रमेण च ।
व्याप्य श्रीकालिकाविद्या सर्वावरण[8]संगता ॥ ३३ ॥
साम्राज्यमुद्रिकां व्याप्य सदा तिष्ठति पार्वति ।
अधिष्ठात्री भवेत्तारा[9] काली प्रत्यधिदेवता ॥ ३४ ॥
आकर्षदेवता घण्टा त्रैलोक्यविजयाभिधा ।
प्रयोगविद्या देवेशि गदिता परमेश्वरि ॥ ३५ ॥
एतस्या धारणाद्देवि किं तद्यन्न करे स्थितम् ।
एतस्यावर्तनाद्देवि पृथ्वीपतिपदं लभेत्[10] ॥ ३६ ॥
सृष्टिकर्ता भवेद्देवि पञ्चलक्षक्रमेण च ।
कोट्यावर्तनमात्रेण कालीरूपो न संशयः ॥ ३७ ॥
अष्टवन्ध्यानाशनं च धारणान्नश्यति ध्रुवम् ।
ब्रह्माण्डगोलके या च या काचित्[11] जगतीतले ॥ ३८ ॥
समस्ताः सिद्धयो देवि तस्य हस्ते व्यवस्थिताः ।
अद्रौ भूमौ तथा मध्ये[12] ह्यब्धौ[13] यद्यपि तिष्ठति ॥ ३९ ॥
ईदृग्विधोऽपि देवेशि गर्भस्तिष्ठति निश्चितम् ।
बालको मरणासन्नस्तस्य यन्त्रं तु बन्ध[14]येत् ॥ ४० ॥
मृत्युबाधाविनिर्मुक्तश्चिरञ्जीवी भवेद् ध्रुवम् ।
वेदं प्रकाशयेद्धीमान् यत्र कुत्रापि पार्वति ॥ ४१ ॥
घण्टाख्यशृङ्खलां कृ[15]त्वा मणिबन्धकरद्वये ।
गले पादद्वये देवि बन्धं यत्नेन कारयेत्[16] ॥ ४२ ॥
प्रतिमां[17] बन्धयेद्वापि शृङ्खलां केवलां च वा ।
मुद्रिकां शृङ्खलां वापि मुद्रिकां केवलां च वा ॥ ४३ ॥
वामपञ्चाङ्गुलौ धार्या दक्षपञ्चाङ्गुले तथा ।
मस्तके च तथा बाहौ धारयेन्मुद्रिकामिमाम् ॥ ४४ ॥
त्रैलोक्यविजयी भूयान्नात्र कार्या विचारणा ।
शृङ्खलाधारणाद्देवि किं तद्यन्न करे स्थितम् ॥ ४५ ॥

1 B °र्वाख्या° । 2 D °वर्णत: । 3 D कूर्चकं । 4 U° त्रयं । 5 B °द्दला°; U द्दला° । 6 B कला° । 7 D तारा । 8 U °भरण° । 9 D त्रितारा तु । 10 U भवेत् । 11 B काली । 12 D ह्यधो । 13 D मध्ये । 14 B वेध° । 15 B धृ° । 16 U काम्यकृत् । 17 B प्रतीमं ।

श्रृङ्खलादुर्गसंयुक्ताः पुरुषाः कर्मणां चरेत् ।
तस्य स्वप्नगते देवि कर्मणां भवति ध्रुवम् ॥ ४६ ॥
तद्भवेद्विपरीतञ्च नात्र कार्या विचारणा ।
कर्णाभरणमध्ये तु रत्न[1]चक्राणि धारयेत् ॥ ४७ ॥
मुद्रिकां वा लिखे[2]द्देवि देवीरूपा तु सा भवेत् ।
दुर्भगा सुभगा भूया[3]त्सुभगा[4] देवता भवेत् ॥ ४८ ॥
त्रिवेण्यां[5] हृदये देवि तत्तद्भूषणरूपतः[6] ।
पूर्वसिद्धानि यन्त्राणि[7] धारयेत्परमेश्वरि ॥ ४९ ॥
सिद्धिरूपा भवेत्साऽपि नात्र कार्या विचारणा ।
गलस्थाभरणं हारं[8] कुक्कुटं सर्वसिद्धिदम् ॥ ५० ॥
सर्वावयवसंयुक्तं सर्वरत्नसमन्वितम् ।
यन्त्र[9]सिद्धानि रत्नानि धारयेन्निशि[10] पार्वति ॥ ५१ ॥
सर्वसौभाग्य[11]संयुक्ता लक्ष्मीरूपा भवेच्छिवे ।
हृदये सर्वदा धार्यं यन्त्रप्रतिकृतिं वराम् ॥ ५२ ॥
तेन सिद्धा जगन्माता सर्वकार्यार्थसाधिनी ।
बाहुमूले यन्त्रमेतत् श्रृङ्खलासंयुतं यदि ॥ ५३ ॥
यो धारयति देवेशि तस्य श्रीः सर्वतोमुखी ।
राज्यलक्ष्मीकीर्तिलक्ष्मीवल्लभः साधको भवेत् ॥ ५४ ॥
स्त्रीणां दीक्षा प्रदेया स्याद्यथायोगेन पार्वति ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ५५ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे यन्त्रधारणं नामैकपञ्चाशतिः पटलः ।

[1] B °क्त° । [2] D मुद्रि° । [3] D देवि । [4] D सा एव । [5] D निवसेत् । [6] D भुक्तितः । [7] B सिद्धित्रयं शार्ङ्गिन्; D सिद्धाः प्रशंसन्ति । [8] U महावराणि देवेशि । [9] D मन्त्र° । [10] B निधाय तानि । [11] B सम्भोग° ।

# द्विपञ्चाशतिः पटलः।

**श्रीदेव्युवाच।**

पूर्वोक्तं यद्रहस्यं च तन्मे कथय साम्प्रतम्।

**श्रीशिव उवाच।**

भर्त्रा दीक्षा प्रदेया स्यात्स्त्रीणां नान्येन[1] पार्वति[2]॥ १॥

दीक्षां दत्त्वा महेशानि तस्यै यन्त्रं वदेत्प्रिये।
तदैव यन्त्रसिद्धिः[3] स्यान्नात्र कार्या विचारणा॥ २॥

पञ्चावर्तनमात्रण[4] सर्वदुःखविनाशनम्।
रसावर्तनमात्रेण सर्वं जगति वश्यकृत्॥ ३॥

वसुमावर्त्तयेद्यन्त्रं क्षेत्रपालसमो भवेत्।
नवावर्तनमात्रेण नवनाथसमो भवेत्॥ ४॥

दशावर्तनमात्रेण पूर्वं दशमुखो यथा।
एकादशावर्तनात्तु सर्वभूतविनाशनम्॥ ५॥

पक्षावर्तनमात्रेण व्याघ्रभीतिविनाशनम्।
अष्टादशावर्तनात्तु सर्वबाधाविनाशनम्॥ ६॥

विंशद्वारं समावर्त्य सर्वं पश्यति चक्षुषा।
पञ्चविंशावर्तनात्तु ग्रहभीति[5]विनाशनम्॥ ७॥

त्रिंशदावर्तनाद्देवि ब्रह्म[6]राक्षसनाशनम्।
चत्वारिंशावर्तनात्तु क्षयरोगविनाशनम्॥ ८॥

मण्डलावर्तनात् सत्यं मण्डलेशो नरो भवेत्।
षष्टिरावर्तयेद् यस्तु[7] तस्य[8] सिद्धिर्भवेद् ध्रुवम्॥ ९॥

सप्तत्यावर्तनाद्देवि सप्तसप्तिस्वरूपधृक्।
अशीत्यावर्तनेनैव सर्वदुःखानि नाशयेत्॥ १०॥

नवत्यावर्तनादेव वाञ्छया कर्मसाधनम्।
शतावर्तनमात्रेण ह्यासनं परिकीर्तितम्॥ ११॥

द्विशतावर्तनाद्देवि सुभ[9]गत्वं नर भवेत्।
दुःखं तु न पतेद्देवि[10] शतपञ्चकयोगतः॥ १२॥

सहस्रावर्तनाद्देवि सहस्रं लभते ध्रुवम्।
त्रिसहस्रं लिखेद्यन्त्रं राजपत्नीं वशं नयेत्॥ १३॥

[1] D चैव न। [2] U शाम्भवि। [3] B यन्त्रसिद्धं। [4] B omits सर्वं जगति...... व्याघ्रभीतिविनाशनं in the sixth line. [5] D °जन्तु°। [6] U जल°। [7] B °व्यक्ति। [8] B सर्वं°। [9] B सूर्यं°। [10] U नयति देवेशि।

सहस्रपञ्चकेनैव[1] पृथिवीजयमाप्नुयात् ।
दिक्सहस्रावर्तनाद्धि शक्तिपातप्रयोगधृक् ॥ १४ ॥

पंचविंशत्सहस्रं तु यो मुद्रावर्तये[2]न्नरः ।
नारायणसमोऽपि स्याद्दासरूपो न संशयः ॥ १५ ॥

सहस्राणां तु पञ्चाशद्यन्त्रमावर्तयेद्यदि ।
अणिमाद्यष्टसिद्धीनामधीशो[3] जायते नरः ॥ १६ ॥

लक्षावर्तनमात्रेण त्रैलोक्यविजयी भवेत् ।
लक्षद्वयावर्तनात्तु चतुर्विंशतिसिद्धियुक् ॥ १७ ॥

पञ्चलक्षप्रयोगेण प्रेतप्रेतेश्वरो भवेत् ।
[4]दशलक्षं लिखेद्यन्त्रं सम्राट् भोक्ता नरो भवेत् ॥ १८ ॥

पञ्चलक्षं लिखेद्यन्त्रं सर्वं पश्यति चक्षुषा ।
पञ्चविंशतिलक्षैश्च वरदानमवाप्नुयात् ॥ १९ ॥

अन्यस्य वरदानत्वं तस्य हस्ते व्यवस्थितम् ।
शिरो देयं गृहं देयं राज्यं देयं पदे पदे ॥ २० ॥

न देयं यन्त्रवर्यं च कस्मैचिदपि पार्वति ।
एतस्य ज्ञान[5]मात्रेण त्रैलोक्यं जयति[6] प्रिये ॥ २१ ॥

अहो यन्त्रस्य माहात्म्यं मया वक्तुं न शक्यते ।
अहो धन्यमहो धन्यं यन्त्रज्ञानं निरन्तरम् ॥ २२ ॥

पुरश्चर्यायुतानाञ्च फलमेतन्मयेरितम् ।
दशसाहस्रकं देवि पुरश्चर्या प्रकीर्तिता ॥ २३ ॥

[7]उग्रापत्तारिणी यस्मादुग्र[8]तारा प्रकीर्तिता ।
तस्य प्रत्यक्षरूपत्वात्तारा उग्रा प्रकीर्तिता ॥ २४ ॥

साम्राज्यमुद्रा नाम्नी तु कालीताराममयी परा ।
भूर्जे वा कागजे[9] जाले ताम्बूले कदलीवने ॥ २५ ॥

प्रत्यहं विलिखेत्पत्रे[10] दशयन्त्राणि पार्वति ।
सर्वशत्रुविनाशित्वं कुर्यादेतदुपासकः ॥ २६ ॥

शत्रुसैन्यविनाशश्च नानारूपेण जायते ।
शिरःकम्पो ज्वरो दाहः कलहश्च परस्परम् ॥ २७ ॥

[1] D स्रावर्त्तनेनैव । [2] B मुद्रां च जपे°; D मुद्रां धारये° । [3] D °धिपो । [4] D omits this line. [5] D दान° । [6] D पतति; B तपति । [7] D omits this line. [8] B °दुर्गं । [9] U कंजरे । [10] B °दस्माद्°; D °न्मान्या ।

अग्निवायुभवा पीड़ा तथा मारी[1]भयं प्रिये ।
चतुर्दशदिने चैव कुर्यादेतदुपासकः ॥ २८ ॥

राज्यं जयति देवेशि प्रत्यहं शत[2]मात्रतः ।
सहस्रं प्रत्यहं लेख्यं[3] राज्यदाता भवेन्नरः ॥ २९ ॥

नवधा विलिखेद्देवि सर्वसिद्धीश्वरो भवेत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ३० ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे यन्त्रलेख्यं नाम द्विपञ्चाशतिः पटलः ।

[1] D वारि° [2] D दश° । [3] B जप्य ।

## त्रयःपञ्चाशतिः पटलः ।

**श्रीदेव्युवाच**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।

**श्रीशिव उवाच ।**

गोपितं त्रिषु लोकेषु तदेव कथ्यते श्रृणु ॥ १ ॥

भूमौ दशसहस्रं च यन्त्रं लिख्य प्रयत्नतः ।
प्रतिवारं मार्जयेद्धि वाञ्छासिद्धिमवाप्नुयात् ॥ २ ॥

भूमौ विलिख्य देवेशि यन्त्रान्ना मार्जयेत् कृती[1] ।
तमेवाकर्षयेद्देवि वर्षं मार्गस्थितोऽपि चेत्[2] ॥ ३ ॥

विशेषेण लिखेद्भूमौ[3] दाहयेदविचारयन् [4] ।
अष्टोत्तरसहस्रं च[5] कृत्वा रामां समाश्रयेत्[6] ॥ ४ ॥

सिन्दूरेण लिखेद् भूमौ तर्जन्या मार्जयेत्कृती ।
तर्जनीधारणाद्देवि यत्फलं परिकीर्तितम् ॥ ५ ॥

तत्फलं समवाप्नोति नात्र कार्या विचारणा ।
तच्च[7]त्स्थानेषु देवेशि लेखनाद्धारणादपि ॥ ६ ॥

मार्जनादपि देवेशि तदेव फलमाप्नुयात् ।
फलपत्रादिपुष्पाणां होमे यत्फलमीरितम् ॥ ७ ॥

तत्फलं पूजनेनापि[8] फलं नैवेद्यतोऽपि च ।
स्वस्याशक्तौ प्रतिनिधिद्वारा वा कारयेत्कृती ॥ ८ ॥

भ्राता पुत्रः पिता माता स्नुषा च रमणी तथा ।
पौत्रो गुरुस्तत्सुतश्च प्रोक्तः प्रतिनिधिर्नव[9] ॥ ९ ॥

भ्रात्रादिपौत्रपर्यन्तं दद्यादाभरणानि[10] च ।
सर्वस्वदानं गुर्वादौ अन्येषां तु[11] विशेषतः ॥ १० ॥

उपासनायां[12] देवेशि न च[13] प्रतिनिधिः स्मृतः ।
साम्राज्यहोमे देवेशि तथा पोषणकर्मणि ॥ ११ ॥

प्रोक्तः प्रतिनिधिर्देवि स्वेष्टकृत्यं[14] स्वयं चरेत् ।
यथाथर्वणहोमादौ[15] सूक्तं[16] सूक्तं[17] च होमयेत् ॥ १२ ॥

ऋग्विधौ ऋक् समाख्याता जपहोमविधौ तथा ।
यथा प्रतिनिधिः प्रोक्तस्तथाऽत्र न प्रकी[18]र्तितः ॥ १३ ॥

[1] B °येति च । [2] D सन् । [3] D °द्देवि । [4] D चाहरेद्देवतासनं । [5] B °स्रे च । [6] D वा राज्यमालभेत् । [7] B तत्र । [8] D तत्तत्फलं जलेनापि । [9] D निधिः प्रिये । [10] D शोभनानि । [11] D आर्यधातु । [12] U °र्थं । [13] B नत्र । [14] D °तं । [15] U °विद्यादौ । [16] B °क्ते । [17] D युक्ते युक्तं । [18] U नव की° ।

यन्त्रं संस्थापये[1]द्देवि सर्वसिद्धिप्रदायकम् ।
स्वर्णे रौप्ये शिरोवस्त्रे कटिवस्त्रे तथा मणौ ॥ १४ ॥

गारुडे पद्मरागे च पुष्परागे विशेषतः ।
गोमेदे हीरके नीले वैडूर्ये परिसेऽपि च ॥ १५ ॥

चतुर्विधे हीरके च तथा स्पर्शचतुर्विधे ।
प्रवाले धारयेद्देवि यथोक्तफलमाप्नुयात् ॥ १६ ॥

स्वर्णे सर्वार्थसंसिद्धिः रौप्ये सुतसमृद्धिमान् ।
वस्त्रे सन्धारणा[2]द्देवि दिव्यकामो नरो भवेत् ॥ १७ ॥

शिरोवस्त्रे तु सन्धार्यं त्रैलोक्यरक्षणाय च ।
त्रैलोक्यमोहनायापि[3] वैरिनिर्दलनाय च ॥ १८ ॥

कटिवस्त्रे लिखेद्देवि वायु[4]तुल्यो बली भवेत् ।
तथावरणवस्त्रेषु कामतुल्यः स्वरूपधृक् ॥ १९ ॥

त्रैलोक्यविजयि[5]त्वं च भवेद्गारुत्मते शिवे ।
पद्मरागे शत्रुहन्ता[6] जयकर्त्ता महामतिः ॥ २० ॥

महेन्द्रसदृशो भूयान्नात्र कार्या विचारणा ।
पुष्परागे लिखेन्मुद्रां धारयेत्पूर्ववत् प्रिये ॥ २१ ॥
सूर्यकोटिप्रतीकाशः प्रतापकीर्तिमान् भवेत् ।
गोमेदे विलिखेद्यन्त्रं धारयेद्दक्षिणे करे ॥ २२ ॥
सिद्धगन्धर्वतुल्यः स्यात्काव्ये वाचस्पतिर्यथा ।
हीरके धारयेद्यस्तु मुद्रां परमदुर्लभाम् ॥ २३ ॥
त्रैलोक्याकर्षको भूयाद् विद्या[7]मधुमतीजपात् ।
जङ्गमस्थावराणां च समुद्राकर्षणं चरेत् ॥ २४ ॥
नदीं पुरीं च रत्नानि हेमस्त्रीशैलभूरुहान् ।
अलभ्यान्यपि वस्तूनि दूराद् भूमितलादपि ॥ २५ ॥
त्रैलोक्याकर्षणकरो वज्रमुद्राविधारणात् ।
इन्द्रनीले लिखेन्मुद्रां धारयेत्करपङ्कजे ॥ २६ ॥
महेन्द्रसदृशो भूयाच्छक्र[8]कर्ता नरो भवेत्[9] ।
ऐश्वर्ये राजराजेशः प्रतापे भास्करो यथा ॥ २७ ॥
बुद्ध्या[10] नीलासमो लोके भवत्येव न संशयः ।
वैडूर्ये धारयेद्यस्तु किं तद्यन्न करे स्थितम् ॥ २८ ॥
परिसे धारणाद्देवि कालीतारामयो भवेत् ।
काली[11]तारा स्पर्शमणिः जपात्स्पर्शमणिं लभेत ॥ २९ ॥

[1] U धारये° । [2] D °रये° । [3] D °ने वापि । [4] D राम° । [5] U °य° । [6] U °र्त्ता ।
[7] B °द्दिवा । [8] B °क° । [9] D भवेत् शिवे । [10] D °द्धो । [11] B कला ।

इतोऽपि सिद्धिबाहुल्यं मया वक्तुं न शक्यते ।
प्रवाले वश्यसिद्धिः स्यात् स्फाटिके कीर्ति[1]रुत्तमा ॥ ३० ॥

धारणाद्यत्फलं प्रोक्तं दुर्गमुद्रासबीजकम् ।
फलमेतन्महेशानि रहस्यातिरहस्यकम् ॥ ३१ ॥

चतुर्विधेऽपि यन्त्रेऽपि फलमेतत्प्रकीर्तितम् ।
बीजयन्त्राण्यपि शिवे धारयेदेवमेव तु ॥
रहस्यातिरहस्यञ्च किमन्यच्छ्रोतुमिच्छसि ॥ ३२ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे मुद्रासंक्षेपो नाम त्रयःपञ्चाशतिः पटलः ।

[1] D सिद्धि° ।

## चतुःपञ्चाशतिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।
तन्मे कथय देवेश यद्यहं तव वल्लभा ॥ १ ॥

**श्रीशिव उवाच ।**

तव प्रीत्या महेशानि रहस्यमपि कथ्यते ।
मालाय[1]न्त्राणि सर्वाणि[2] दुर्गञ्चैव तृतीयकम् ॥ २ ॥
त्रयाणां[3] नहि भेदोऽस्ति रत्नलेखनधारणे ।
फलमेकं महेशानि द्रुतसिद्धिकरं भुवि ॥ ३ ॥
बिन्दु[4]रत्नविशीर्णाङ्गे कृमिकीटविवर्जिते[5] ।
दोषो न रत्ने देवेशि काश्मीरे मौक्तिके शिवे ॥ ४ ॥
प्रवाले कथितो दोषः साङ्गं जलयुतं[6] शुभम् ।
मौक्तिकानामष्टजातिर्विशादिक्रमयोगतः ॥ ५ ॥
त्रिविधानि प्रवालानि हीरस्पर्शौ चतुर्विधौ ।
अन्यो नियमो नास्त्यत्र[7] रत्नं बहुविधं भवेत् ॥ ६ ॥
बिन्दुत्रिबिन्दु[8]वर्णादि नवसङ्करजातितः ।
तत्रापि फलमेतद्धि कीर्तितं परशम्भुना ॥ ७ ॥
मध्यं[9] विद्धं कोणमष्टं वक्त्रे रेखा विजृम्भि[10]तम् ।
यद् भवेदष्ट[11]कोष्ठं तु तद्यन्त्रं दोषसंयुतम्[12] ॥ ८ ॥
न तद्यन्त्रं दोषकरं यत्सिद्धगुरुदर्शितम् ।
जापे वै केवला सिद्धा यन्त्राणां गणनायकाः[13] ॥ ९ ॥
स्वर्णे वर्षार्द्धमात्रेण फलं भवति निश्चितम् ।
रौप्ये वर्षोत्तरं देवि शिरोवस्त्रे द्विपक्षतः ॥ १० ॥
कटिवस्त्रे त्रिपक्षान्ते फलं यच्छति मुद्रिका ।
तथावरणवस्त्रे तु फलमत्रं[14] प्रकीर्तितम् ॥ ११ ॥
गारुत्मते पक्षमात्रात् सिद्धिर्भवति निश्चितम् ।
पद्मरागे सप्तदिनं व्याप्य सिद्धिः प्रवर्तते ॥ १२ ॥
पुष्परागे षड्दिनानां[15] युग्मात्[16] सिद्धिर्भवेद् ध्रुवम् ।
पञ्चरात्रेण गोमेदे मनोवांछितकामदा ॥ १३ ॥
हीरके त्रिदिनेनैव[17] वैडूर्ये दिनसप्ततः[18] ।
परिसे तत्क्षणादेव सिद्धिर्भवति निश्चितम् ॥ १४ ॥

1 B °म° । 2 U सिद्धानि । 3 D यन्त्राणां । 4 D विद्रुमं । 5 D °कङ्किते । 6 D साङ्गजं न युतं । 7 B अन्यानि यामलान्यत्र । 8 D त्रिविध । 9 D °ध्य° । 10 D °चित्रि° । 11 B °च्छित्र । 12 D °मता । 13 D च वा; U वै । 14 B यत्र; D °मात्रं । 15 D त्रिदलानां । D क्रमात् । 17 B °वे चैव । 18 D °तकैः ।

इन्द्रनीले वेद[1]दिनैः सिद्धिर्भवति निश्चितम् ।
प्रवाले मासदशकै[2]र्मौक्तिके वसु[3]मासतः ॥ १५ ॥

सिद्धिर्भवति देवेशि नात्र कार्या विचारणा ।
मुद्रा माला तथा दुर्गे नाल्पस्य तपसः फलम् ॥ १६ ॥

रुद्रप्रयोगे[4] देवेशि कर्त्ता हर्त्ता[5] प्रजायते ।
अन्ययोगं प्रवक्ष्यामि कामनाद्रव्यभेदतः ॥ १७ ॥

हरिद्रा[6]वत्सनाभेन दशयन्त्राणि लेखयेत् ।
त्रैलोक्यनिग्रहे शक्तिर्दशाहेन भवेद् ध्रुवम् ॥ १८ ॥

वत्सनाभं समानीय दीपाग्रे तु प्रदर्शयेत् ।
तैलं पतति यद्भूमौ तदान्यं[7] प्राणहोमतः ॥ १९ ॥

वत्सनाभं कृष्णवर्णं तैलाक्तं परमेश्वरि ।
तेन मुद्रात्रयं[8] लेख्य दीपे प्रज्वालयेन्नरः[9] ॥ २० ॥

त्रैलोक्याकर्षणं कुर्यान्मार्ज्य चोच्चाटनं[10] चरेत् ।
पुनर्लिख्य प्रतापाद्धि[11] पुनराकर्षयेद् ध्रुवम् ॥ २१ ॥

पुनर्मार्ज्य महेशानि त्रैलोक्याकर्षणं चरेत् ।
विषेण[12] प्रलिखेन्मुद्रां संपुटीकृत्य दीपके[13] ॥ २२ ॥

प्रत्यहं दाहयेद्देवि त्रैलोक्यनिग्रहो[14] भवेत् ।
विषा[15]ष्टकेन संलिप्य[16] दाहयेदविचारयन् ॥ २३ ॥

[17]यन्नाम्ना विलिखेद्देवि तमेव मारयेद् ध्रुवम् ।
रत्नपीठे लिखेद्देवि भावयेत् प्रतिविंबयेत् ॥ २४ ॥

ऊर्ध्वरेखा च वा देवि तथा पातालरेखिका ।
हीरके परिसे नीले यथैव विलिखेत्तथा ॥ २५ ॥

कारयेद्यत्नतो देवि लेखयेदपि पार्वति ।
रत्नेऽपि विलिखेद्देवि [18]यथाकामनया प्रिये ॥ २६ ॥

पुनर्लेख्य पुनर्मार्ज्य तदेव फलमश्नुते ।
अन्यपीठादपि शिवे फलमत्राधिकं[19] भवेत् ॥ २७ ॥

परिसे हीरके देवि कनिष्ठानां[20] च पर्वणः ।
मानं प्रोक्तं महेशानि गोमेदे स्यादनामिका ॥ २८ ॥

1 D दश° । 2 D मासके वापि । 3 D चैत्र । 4 D रुद्रयोगोऽयं; B द्रुतं पुंयोगो । 5 B कान्ताहस्तात् । 6 B हारिद्रे । 7 B तदन्यो ; D तदान्यो । 8 U °त्रिकं; D °दिकं । 9 D ल्य यत्नतः । 10 D मार्जारोत्पाटनं । 11 B °तन्याद्धि । 12 D नीरेण । 13 B °काम् । 14 U °ह्री । 15 D दिना° । 16 U °ल्प्य । 17 BD omit two lines. 18 D omits यथाकामनया......देवि in the fourth line. 19 U °मात्रादिकं । 20 D अङ्गुष्ठानां ।

गारुत्मते मध्यमायां मध्यपर्वार्धमुद्रिका ।
कारयेत्परमेशानि त्रैलोक्यविजयाय च ॥ २९ ॥

तर्जनी पूर्वंवद्वापि[1] पीठवैडूर्यसम्भवे ।
इन्द्रनीले मध्यमायां मध्यमार्धं[2] महेश्वरि ॥ ३० ॥

पद्मरागे तु तर्जन्या मध्यमे[3] न्यूनमेव च ।
पुष्परागे त्वनामाया मध्यं न्यूनानना[4] भवेत् ॥ ३१ ॥

वृद्धाया मध्यमा नामा न्यूना मुद्रा सुवर्णजा ।
तदस्या[5]द्धा सुवर्णे स्याद्रत्नव[6]ल्लयर्धरूपके[7] ॥ ३२ ॥

वर्तुलं चतुरस्त्रं वा वस्वस्त्रं वा षडस्त्रकम् ।
नवास्त्रं ध्वजरूपं वा पीठं प्रोक्तं मया तव ॥ ३३ ॥

न रत्नसदृशं पीठं न भूतं न भविष्यति ।
यन्त्रसिद्धं जीवचक्रं यथा कौले प्रकीर्तितम् ॥ ३४ ॥

यथा चीने कपालाख्यं यन्त्रपीठं सुसिद्धिदम् ।
यथा जैने दिव्यपीठं बार्हस्पत्ये तु कीलकम्[8] ॥ ३५ ॥

त[9]था मुद्रादुर्गविधौ पीठमेतत्प्रकीर्तितम् ।
अन्यत्र वर्षाद्या सिद्धिः सा रत्ने क्षणमात्रतः ॥ ३६ ॥

द्रुतसिद्धिकरं पीठं रत्नपीठं महेश्वरि ।
विंशत्यङ्के शताङ्के तु सहस्रदिक्सहस्रकम् ॥ ३७ ॥

समाङ्क[10]मात्रे[11] देवेशि कोष्ठके[12] नवकोष्ठके[13] ।
स ब्रह्मा स शिवः प्रोक्तः स स्वाराट् ईशतां व्रजेत् ॥ ३८ ॥

अहो ज्ञानवतां ज्ञानी[14] मुद्रादुर्ग[15]परायणः ।
शिव एव महेशानि नात्र कार्या विचारणा ॥ ३९ ॥

एतत्सिद्धे महेशानि क्षणादिन्द्रत्वकारकः ।
नवीनविष्णुनिर्माणं विधीनां दशपञ्चकम्[16] ॥ ४० ॥

कर्तुं शक्नोति देवेशि नात्र कार्या विचारणा ।
शिवताण्डवतन्त्रे तु यन्त्रं सिध्यमिधे परे ॥ ४१ ॥

अङ्कार्णवसर्वस्वे तु अङ्कचूडामणावपि[17] ।
अक्षोभ्यकक्षपुव्यां तु खेचरीसिद्धिनामनि ॥ ४२ ॥

संक्षेपेण मया प्रोक्तं विस्तरोऽत्र प्रदर्शितः[18] ।
नवकोष्ठे[19] समाङ्काख्ययन्त्राणि सिद्धिदानि च ॥ ४३ ॥

1 B च पर्वार्द्धं । 2 B मध्ये सार्धं । 3 BD °मो । 4 B °लो । 5 U °न्या° 6 U वे° । 7 D वेन्ना कुरूपके । 8 D कीनस । 9 U य° । 10 B समीप° । 11 D °मत्र । 12 D कोव्यके । 13 U कांकके; D कोव्यके । 14 U °नं । 15 U °र्गा° । 16 D च । 17 D एकार्णवे सकर्मा तु अङ्कचक्र प्रमाणतः । 18 D प्रकीर्त्तितः । 19 D °टि ।

पूर्वसिद्धानि कार्याणि ततश्च प्रत्ययं चरेत् ।
कोष्ठ्यङ्कयन्त्रं देवेशि लिख्य घर्मे प्रतापयेत् ॥ ४४ ॥
यन्नाम्ना तापयेद्देवि तमेवाकर्षयेद् ध्रुवम् ।
पद्माङ्क[1]मेतत् संलिख्य स्थापनीयमधोमुखम् ॥ ४५ ॥
तत्र स्थित्वा जपेच्छक्ति सर्वाकर्षणकृन्नर: ।
पञ्चाशत्पद्म[2]पर्यन्तं[3] समाङ्के फलमेककम् ॥ ४६ ॥
सर्वं हस्तगतं भूयान्नात्र कार्या विचारणा ।
जलस्थलगता लोका[4] यत्किञ्चिज्जगतीगतम् ॥ ४७ ॥
स्त्रीहेमरत्नखड्गादि पातालतलमप्यलम् ।
सर्वमाकर्षयेत्तूर्णं[5] कालीताराप्रसादत: ॥ ४८ ॥
कालीताराप्रसादेन महामधुमतीं लभेत् ।
मधुमत्या: प्रसादेन यत्किञ्चिद् गोलगोचरम् ॥ ४९ ॥
सर्वमाकर्षयेत्तूर्णं[6] नात्र कार्या विचारणा ।
गोपालसुन्दरी देवी यथा प्रोक्ता मया तव ॥ ५० ॥
कालीतारा मया प्रोक्ता ताराकाली तथा परा ।
काली कालो[7] कालकाली[8] ताराक्षोभ्यस्तथैव च ॥ ५१ ॥
अक्षोभ्यतारा देवेशि प्रत्येकं योजयेच्छिवे ।
तस्योच्चारो भवेदादौ तत्पीठमादिमं मतम्[9] ॥ ५२ ॥
कालीपीठे यजेत्तारां तारापीठे तु कालिकाम् ।
कालीपीठ यजेत्कालं तथैवाक्षोभ्यतारिणीम् ॥ ५३ ॥
मेधा वा कमला लक्ष्मी रामा संवश्यकर्मणि ।
इत्याद्यं प्रोक्तमाकर्षे * * * शक्तिपूजने ॥ ५४ ॥
पीठमेतन्मया प्रोक्तं रहस्यातिरहस्यकम् ।
गोपनीयं गोपनीयं गोपनीयं महेश्वरि ॥ ५५ ॥
अवाच्यं[10] कुरु देवेशि स्वयोनिरपरा यथा ।
इति संक्षेपत: प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ५६ ॥

इति श्रीशक्तिसङ्गमतन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे रत्नसङ्केतकथनं नाम चतु:पञ्चाशति: पटल: ।

[1] B पद्मिके । [2] D °पूर्व° । [3] B पर्वाङ्कं; D पद्मान्तं; । [4] B नौका । [5] D °न्नूनं । [6] D °न्नूनं । [7] D कलौ । [8] U कलौ काली कलौ काली । [9] D °संयुतं । [10] D आराध्यं ।

## पञ्चपञ्चाशतितमः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।

**श्रीशिव उवाच ।**

यन्न कस्यापि सम्प्रोक्तं तदेव कथ्यते शृणु ॥ १ ॥
तर्जन्यां रजतं धार्यं स्वर्णं धार्यमनामयोः[1] ।
एष एव कुशः प्रोक्तो न कुशो वनसम्भवः ॥ २ ॥
स्वर्णे शक्तिस्तु सन्धार्या[2] रजते बीजमीरितम्[3] ।
षट्कूर्च[4]धारणादेव षडै[5]श्वर्यमयो भवेत् ॥ ३ ॥
तर्जन्या[6] धारणादेव भूतादीन् त[7]र्जयेत् क्षणात् ।
दशविद्याक्रमेणैव दशधा रौप्यधारणम् ॥ ४ ॥
बीजं शक्तिः कीलकञ्च यथायोगक्रमेण च ।
सामान्योपासकेनैव कीलकं ले[8]ख्य धारयेत् ॥ ५ ॥
अङ्गाङ्गिमन्त्रयुक्तेन बीजधारणमाचरेत् ।
पूर्णदीक्षादिसंयुक्तः शक्तिधारणमाचरेत् ॥ ६ ॥
षट्पारायणसंयुक्तो द्वितयं[9] धारयेत्प्रिये ।
देवता त्वधिदेवी च तथा प्रत्यधिदेवता ॥ ७ ॥
अधिष्ठात्री च देवेशि प्रतिपूर्वा तु पञ्चमी[10] ।
केवलं मन्त्रजापो हि पञ्चधा परिकीर्तितः[11] ॥ ८ ॥
[12]अङ्गाङ्गिभेदयुक्तो हि साक्षाच्छिवमयो भवेत् ।
षट्कं षट्कं च सन्धार्य षडैश्वर्यसमो भवेत् ॥ ९ ॥
दशाङ्गुलिषु[13] बीजानां स्वर्णे सन्धारणा[14]त्प्रिये ।
दशविद्याधिपो भूयान्नात्र कार्या विचारणा ॥ १० ॥
कूर्चबीजं त्रिशक्तौ तु सुन्दर्यां च पराभिधम्[15] ।
बगलायां स्वबीजं च[16] कमलायां तु कामलम्[17] ॥ ११ ॥
भैरव्यां वाग्भवं धार्यं मातंग्यां कामबीजकम् ।
धूम्रायां च वसोर्धारां सिद्धविद्याविधौ स्वकम् ॥ १२ ॥
स्त्रीबीजं चा[18]ङ्कमात्रे तु परायां[19] तत्पराद्वयम् ।
राजराजेश्वरीविद्याविधौ शाम्भवमेव तु ॥ १३ ॥
पवित्रार्थं धारणीयं मुद्रारूपेण वा प्रिये ।
धार्यं पवित्ररूपेण केवलं नहि धारणा ॥ १४ ॥

[1] D °या । [2] D संकुर्यात् । [3] D विजयान्वितं । [4] BD °कर्म । [5] D शतै° । [6] D °नी । [7] B व° । [8] D लि° । [9] D °ये । [10] B °मा । [11] U °ता । [12] D omits this line. [13] U °ल्पेषु । [14] D °रयेत् । [15] B °धी । [16] U न । [17] U °लं; D कामनुं । [18] B या° । [19] B सुरापी ।

षडाम्नाये महेशानि बीजषट्कविधारणम् ।
षड्दर्शने[1] च षट्तारा: पंच आयतने भवेत् ॥ १५ ॥
शिवशक्तिप्रभेदेन केवलं शक्तिभेदत: ।
अङ्गाङ्गिमन्त्रभेदेन धारणं तु समाचरेत्[2] ॥ १६ ॥
अनामायां धारणाद्धि त्रैलोक्यविजयी कवि: ।
भाले बीजं चाङ्गुलौ तु[3] मुद्रां नाम हृदम्बुजे ॥ १७ ॥
करे तत्तन्मयी माला नाऽल्पस्य तपस: फलम् ।
दन्ताख्य[4]माला श्रीकाल्यां तारिणी नरशङ्खजा ॥ १८ ॥
छिन्नमस्ताविधौ शस्ता नरास्थिमालिका शुभा ।
रक्तचन्दनजा माला बीजाख्या त्रिपुराविधौ ॥ १९ ॥
स्वयम्भूमालिका देवि भैरव्यां[5] मालिकाविधौ ।
गुञ्जामाला तु मातंग्यां धूम्रायां खरदन्तजा ॥ २० ॥
हरिद्राख्या तु ब्रह्मास्त्रे कमलाख्या रमा[6]विधौ ।
वाण्यां श्रीभुवनेश्वर्यां स्फाटिकी परिकीर्तिता ॥ २१ ॥
श्वेतगुञ्जा सिद्धविद्याविधौ प्रोक्ता महेश्वरि ।
शङ्खमाला वैष्णवे तु रुद्राक्ष: शक्तिमात्रके ॥ २२ ॥
भद्राक्ष: शरभे प्रोक्तो गणेशे गजदन्तजा ।
त्रिपुरायां[7] पुत्रजीवो गोविन्दे तुलसी मता ॥ २३ ॥
सर्वमन्त्रे च रुद्राक्ष: शक्तिमंत्रे तु वा[8] नहि ।
रत्नस्वर्णरौप्यमयी तथा ताम्रमयी शिवे ॥ २४ ॥
औदुम्बरबीजमयी वटबीजमयी तथा ।
पूगीफलमयी माला जातीफलमयी तथा ॥ २५ ॥
मधुमत्याकर्षणार्थं वीर[9]विद्याविधावपि ।
प्रवाल: सूर्यमन्त्रे च मौक्तिकं[10] शक्तिमात्रके ।
इति संक्षेपत: प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २६ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे रत्नसङ्केतकं नाम पञ्चपंचाशति: पटल: ।

[1] D °नं । [2] D °रभेत् । [3] U च । [4] B °क्ष° । [5] D °वी । [6] B तु मा° ।
[7] D °टायां । [8] U दिवा । [9] D °भाव° । [10] B °के; U °का ।

# षट्पञ्चाशतिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि सर्वमालाफलानि च ।

**श्रीशिव[1] उवाच ।**

रहस्यातिरहस्यञ्च कथ्यते तव भक्तितः ॥ १ ॥

कुशग्रन्थ्या जपेद्विप्रः सुवर्णमणिभिर्नृपः ।
पुत्रजीवैर्जपेद्वैश्यः पद्माक्षैः शूद्र[2] एव च ॥ २ ॥

श्वेतपद्माक्ष[3]कैर्देवि विष्णुमन्त्रं जपेच्छिवे ।
रुद्राक्षैः सर्वकार्याणि पद्माक्षैः पुष्टिरुत्तमा ॥ ३ ॥

कान्तिः[4] श्रीखण्ड[5]मणिभिर्मौक्तिकैर्मुक्तिभा[6]ग्भवेत् ।
प्रवालैर्वश्यसिद्धिः स्यात् गुञ्जया मोहनं भवेत् ॥ ४ ॥

भद्राक्षैर्भाग्यसम्पत्ती रुद्रा[7]क्षै राज्यमुत्तमम् ।
धनधान्यं सुतावाप्तिर्भवेद्धि पुत्रजीवकैः ॥ ५ ॥

अरिष्टमाला विद्वेषे बदरी मारणे मता ।
मरीचैर्भीषणे माला पिचुमर्दै[8]र्विनाशने[9] ॥ ६ ॥

अकस्मादीप्सिता सिद्धिर्महाशङ्खाख्य[10]मालया ।
दन्ताख्यमालया देवि षष्टि[11]सिद्धीश्वरो भवेत् ॥ ७ ॥

रचिता चा[12]स्थिमणिभिः[13] सर्वशत्रुविनाशिनी[14] ।
खरदन्तैः शत्रुनाशो गजदन्तैर्गुरुर्भवेत् ॥ ८ ॥

कुचन्दनैः समाकर्षो हारिद्रैः स्तम्भनं भवेत् ।
स्वयम्भूकुसुमैर्देवि सर्वविद्येश्वरो भवेत् ॥ ९ ॥

चन्दनैः कीर्तिलक्ष्मीः स्यात्तेजः स्यात्कुश[15]मालया ।
तुलस्या मोक्षमाप्नोति लोहैर्मारणमादिशेत् ॥ १० ॥

ताम्रैः शान्तिर्लौहरौप्यैः सर्वसौख्यफलं[16] लभेत् ।
सौवर्णै राज[17]लक्ष्मीः स्यात् सर्वास्थिमालया रिपून् ॥ ११ ॥

त्रासयेन्नाशयेद्देवि नात्र कार्या विचारणा ।
वाक्सिद्धिः स्फाटिकैर्भूयात् शङ्खाभावेऽपि मालिका ॥ १२ ॥

अङ्गुलिपर्वभिः सर्वसिद्धिराज्यं स विन्दति ।
औदु[18]म्बरैर्भूतनाशः प्लक्षैर्दारिद्र्यनाशनम् ॥ १३ ॥

1 B रुद्र । 2 B सर्व° । 3 B °ल° । 4 U कीर्तिः । 5 LU °शंख° । 6 D °मान् । 7 DU °तिरिन्द्रा° । 8 U मन्दै° । 9 D °नं । 10 B °क्ष° । 11 B अष्ट°; D सृष्टि° । 12 B वा° । 13 D °मालाभिः । 14 B° नां । 15 B°कुसुम । 16 B °कलां । 17 D °ज्य° । 18 D °डु° ।

वट[1]बीजैर्यक्षिणी स्यात्कपर्दिभिर्महोदय: ।
शिवशक्तिमयी माला रुद्राक्षस्फाटिकैर्युता ॥ १४ ॥

रुद्राक्षस्वर्णसंयुक्ता माला हरिहरात्मिका ।
रुद्राक्षरौ[2]प्यसंयुक्ता माला विधिशिवात्मिका ॥ १५ ॥

रुद्राक्षैः शक्तिमन्त्रं तु दिवा यो जपति प्रिये ।
स दुर्गतिमवाप्नोति जपस्तस्य निरर्थक: ॥ १६ ॥

शक्ति[3]स्त्रीमन्त्रजप्येषु रुद्राक्षैर्न दिवा जपेत् ।
पूर्वाम्नाये स्फाटिकजैर्दक्षिणे रुद्रनेत्रजैः ॥ १७ ॥

प्रवालैर्मौक्तिकैर्देवि पश्चिमाम्नायदेवताः ।
उत्तराम्नायदेवानां महाशङ्खाख्यमालिका[4] ॥ १८ ॥

मणिभिः पुत्रजीवोत्थै[5]र्न जपेदुत्तरेश्वरीम् ।
कुण्डलीमालिका देवि भैरव्यां[6] परिकीर्तिता ॥ १९ ॥

ऊर्ध्वाम्नाये स्वयम्भूः स्यात्[7] पाताले रत्नसम्भवः ।
तत्रापि कालिकाताराविद्यायां शङ्खसंभवा[8] ॥ २० ॥

शङ्खमालां विधायाऽथ यस्तारां[9] कालिकां जपेत् ।
मन्त्रक्षोभोऽथवा भूयाद्विद्यासिद्धिर्न वै भवेत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २१ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे मालानिर्णयो नाम षट्पञ्चाशतिः पटल: ।

[1] B वाट°; D जवा° । [2] U °रू° । [3] D °क्तौ । [4] U °लया । [5] D पूर्वपूर्वावै° ।
B °वी; D °व्याः । [7] B भूयात् । [8] D शाम्भवि । [9] U तारां वा; D तारिणीं ।

## सप्तपंचाशतिः पटलः ।

**श्रीदेव्युवाच ।**

पूर्वोक्तसर्वमालानां फलं भवति किं वद ।
कियत्काले च[1] देवेश तदद्य कथ्यतां त्वया ॥ १ ॥

**श्रीशिव[2] उवाच ।**

रहस्यातिरहस्यञ्च कथ्यते शृणु सादरम् ।
रुद्राक्षमालाजापे तु[3] दशवर्षेण वै फलम्[4] ॥ २ ॥

स्फाटिके रुद्रवर्षेण मुक्तायां नंदवर्षतः ।
प्रवाले सूर्यवर्षेण पद्माक्षे परमेश्वरि ॥ ३ ॥

कामवर्षेण देवेशि पुत्रजीव्यां शृणु प्रिये ।
भूतवर्षेण फलदा गुंजाख्ये वसुवर्षतः ॥ ४ ॥

रक्तचन्दनजायां तु सप्तवर्षात् फलं भवेत् ।
रौप्ये तु युग्म[5]वर्षेण स्वर्णे वर्षैस्त्रिवेदिकैः ॥ ५ ॥

पञ्चविंशतिवर्षेण ताम्राख्ये फलमीरितम् ।
अकस्मादीप्सिता सिद्धिर्महाशंखाख्यमालया ॥ ६ ॥

महाशंखेऽप्यशक्तश्चेत् स्फाटिक्या मालया जपेत् ।
दन्ताक्ष[6]मालया देवि दशाहेन फलं स्मृतम् ॥ ७ ॥

अङ्गुलिपर्वमालायां सप्ताहेन फलं लभेत् ।
महाशंखाख्यमालायां सूर्याहेन फलं ध्रुवम्[7] ॥ ८ ॥

भद्राक्षैः षोडशाहेन[8] माहेन्द्राक्षेऽपि पूर्ववत् ।
माणिक्ये पञ्चवर्षेण रत्ने वर्षाष्टकेन च ॥ ९ ॥

अस्थिभिः पक्षमात्रेण फलं भवति पार्वति ।
चण्डघण्टाविधौ देवि नरास्थिमालिका स्मृता ॥ १० ॥

एकाक्षरी छिन्नमस्ता चण्डघण्टा प्रकीर्तिता ।
न रुद्राक्षैर्न पद्माक्षैश्चण्डघण्टाविधौ शिवे ॥ ११ ॥

इतोऽप्युग्रा नान्यविद्या न कदाचिद्[9] भविष्यति ।
सिद्धिर्वा मृत्युरपि वा[10] द्वयोरेकतरं भवेत् ॥ १२ ॥

ताराबीजं तथा काल्याः शक्तिश्छिन्नामनुर्भवेत् ।
बीजदैवतयोगेन अधिप्रत्यधियोगतः ॥ १३ ॥

अधिष्ठात्री महेशानि तथा प्रत्यधियोगतः ।
नरास्थिमालिका शक्तिः[11] सर्वकार्यकरी स्मृता[12] ॥ १४ ॥

[1] U °न । [2] D ईश्वर । [3] B °न । [4] D सुन्दरि । [5] B याम° । [6] D तदाख्य° ।
[7] ध्रुवं लभेत् । [8] U °ब्देन । [9] BU किञ्चिधै । [10] D व्यावर्त्तते वापि । [11] BU शक्ता ।
[12] D मता ।

त्रिशक्तिमन्त्रं रुद्राक्षैर्न दिवा प्रजपेच्छिवे ।
स दुर्गतिमवाप्नोति जा[1]पस्तस्य निरर्थकः ॥ १९ ॥

शक्तौ स्त्रीषु च मन्त्रेषु रुद्राक्षैर्न जपेद् बुधः ।
पीताक्षै[2] रसवर्षेण फलं भवति पार्वति ॥ १६ ॥

कुण्डलीमालिका देवि भैरव्यां[3] परिकीर्तिता ।
स्वयम्भूमालिका देवि स्वजातक्रमयोगतः ॥ १७ ॥

या प्राप्ता विधिना देवि पञ्चाहेन फलप्रदा ।
खरदन्तैर्वेदवर्षैर्गजदन्तैर्द्विवेदतः ॥ १८ ॥

राजदन्तेऽप्य[4]शक्तश्चेद् गजदन्तेन वै जपेत् ।
कुलवृक्षस्य बीजैश्च मासाद्भवति वै फलम् ॥ १९ ॥

कुशग्रन्थ्या वर्ष[5]युग्मैः फलमत्र प्रकीर्तितम् ।
नारिकेलमयी माला प्रोक्ता कापालिनी[6]विधौ ॥ २० ॥

प्रत्यक्षमुण्डमालेयं षण्मा[7]सेन फलप्रदा ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २१ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे मालाफलप्रकथनं नाम सप्तपंचाशतिः पटलः ।

[1] D ज° । [2] U शी° । [3] B °वो । [4] B °न्तैर° । [5] B सूर्य° । [6] D °नां ।
[7] B रामा° ।

## अष्टपंचाशतिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि स्त्रीणां दीक्षावि[1]निर्णयम् ।
स्त्रीणां दीक्षा कथं देया केन वा परमेश्वर ॥ १ ॥

**ईश्वर उवाच ।**

पुत्रेण मातुर्दीक्षा वै देया[2] भक्तिवशेन[3] तु ।
भक्तियोगे द्रढीयान्वै[4] मन्त्रशास्त्रे महेश्वरि ॥ २ ॥
ऐक्य[5]सम्भावनाद्देवि देवत्वमुपजायते ।
मन्त्ररू[6]पो भवेद्देवो देवरूपो गुरुः स्मृतः ॥ ३ ॥
गुरुरूपो भवेदात्मा चात्मरूपो मनुर्भवेत् ।
मन्त्रश्चै[7]तन्य इत्युक्तश्चैतन्यं गुरुरूपकम् ॥ ४ ॥
मन्त्रो देवो गुरुरिति त्वेकपर्यायवाचकः ।
एतदभ्यासयोगेन तद्रूपरूपको[8] भवेत् ॥ ५ ॥
ताद्रूप्यरूपकं नाम तत्र त्वात्मैक[9]विग्रहम् ।
ताद्रूप्ये तु समापन्ने शिवयोगी स जायते ॥ ६ ॥
अयं मानसिको धर्मः कारणं मन एव[10] हि ।
मात्रा[11] दीक्षा प्रदेया वै स्त्रीणां नान्येन[12] शाम्भवि ॥ ७ ॥
देवीपरम्पराप्राप्ता दीक्षा स्त्रीणां शुभा मता ।
[13]देवीपरम्परायां तु विशेषं शृणु पार्वति[14] ॥ ८ ॥
देवीपरम्परोद्दिष्ट[15]पारम्पर्यक्रमागता ।
स्त्रीणां दीक्षा परं जाता दीक्षा देवि शुभा मता ॥ ९ ॥
तत्परम्परया प्राप्ता दीक्षा सिद्धिप्रदा मता ।
पुरुषाणां तत्सकाशाद्दीक्षा जाता परम्परा ॥ १० ॥
मुख्यं शृणु महादेवि स्त्रीणां न नियमो मतः ।
नियमः पुरुषे ज्ञे[16]यो न योषित्सु कथञ्चन ॥ ११ ॥
इदं पशुपरं बोध्यं नहि वीरपरं शिवे[17] ।
वीराणां देवदेवेशि सर्वत्र दीक्षणं वरम् ॥ १२ ॥
देवीपारम्पर्यवरे[18] स्त्रीणां दीक्षा तु या मता ।
तेन दीक्षणयोगेन त्रैलोक्यविजया सती[19] ॥ १३ ॥
तत्समानैव सा[20] स्त्री स्यात् नान्यथा शांकरं वचः ।
तस्या मुखोद्गता विद्या सिद्धविद्या प्रकीर्तिता ॥ १४ ॥

[1] B °दि° । [2] U चेद्देया । [3] D °रसेन । [4] D दृदेनैव । [5] B एवं । [6] B °भू° ।
[7] U °चै° । [8] D तद्रूप्यरूपकं । [9] D एकत्वमेक° । [10] D मानसैव । [11] D मातु° । [12] D सत्त्येत्र ।
[13] B omits three lines. [14] D सादरं । [15] D °रादिष्टं । [16] D दे° । [17] D शुभं ।
[18] BD add मार्गः । [19] U रुतां । [20] D समानेनैव या ।

सा विद्या बालसंस्कारे रसनायां विलिख्यते ।
त्रिवर्षादूर्ध्वतो देवि त्रैलोक्यविजयी कविः ॥ १५ ॥
शाक्ते विकल्पसहिते कथं दीक्षा भवेत् प्रिये ।
गुरोः सकाशाच्चेद्देया[1] तदा सा भगिनी मता ॥ १६ ॥
स्वयं वै यदि चेद्देया तदा कन्या प्रकीर्तिता ।
अन्यतो दापनीया चेन्मार्गभ्रष्टा तदा भवेत् ॥ १७ ॥

श्रीदेव्युवाच ।

मन्त्रशास्त्रे बहुविधा मार्गा देव पुरोदिताः[2] ।
तदर्थं शङ्क्यते चित्तं किं कार्यं वद शङ्कर ॥ १८ ॥

श्रीशिव उवाच ।

स्वसम्प्रदाये यः श्रेष्ठस्तत्सकाशात्तु दीक्षणम् ।
शुभं प्रोक्तं महादेवि ह्यभावे शृणु सादरम् ॥ १९ ॥
त्रयोदश्यां कृष्णपक्षे चन्द्रवासर[3]संयुते ।
ताडपत्रे मनुं लिख्य संस्कारदशकं चरेत् ॥ २० ॥
दशसंस्कारयोगेन सिद्धो मन्त्रो भविष्यति ।
तद्दिने पायसं कृत्वा दक्षिणामूर्तिसन्निधौ ॥ २१ ॥
पायसाद्यं[4] निवेद्याऽथ बिल्वैः संपूज्य शङ्करम् ।
शतं कृत्वा वाचनीय[5]मष्टोत्तरसहस्रकम् ॥ २२ ॥
संजप्य होमयेद्देवि तत्र तंत्रोक्तवर्त्मना ।
वाचने नास्ति चेच्छक्तिस्तदा किं वा विधीयते[6] ॥ २३ ॥
पुत्रद्वारा वाचनीयं स पुत्रो गुरुरेव तु ।
एवं गृहीतमन्त्रस्तु सिद्धिदो भवति प्रिये ॥ २४ ॥
अथवा तादृशी कार्या शास्त्रवाचनतत्परा ।
धर्मशास्त्रं तु सम्पाद्य चार्णवानां च विंशतिः ॥ २५ ॥
शास्त्रज्ञां[7] कारयित्वा तु समयाचारतत्पराम्[8] ।
शास्त्रसंवाचनपरां कारयित्वा महेश्वरि ॥ २६ ॥
ततः[9] पूर्वोक्तविधिना वाचनीयो मनुः प्रिये ।
एवं गृहीतविधिना देवीरूपैव सा मता ॥ २७ ॥

श्रीदेव्युवाच ।

देवदेव महादेव सर्वसिद्धिप्रदायक ।
पूर्वं प्रोक्तं त्वया देव स्त्रीणां नात्राधिकारिता ॥ २८ ॥
दक्षिणामुर्तिघोरादौ पञ्चाक्षर्य्यां महेश्वर ।
प्रणवाद्येषु मन्त्रेषु स्त्रीणां नात्राधिकारिता ॥ २९ ॥

[1] D °द् या देया । [2] D सुगोपिताः । [3] B चन्द्रे वा शर° । [4] B पापसाध्यं; D पायसाज्ये । [5] D जपेन्नित्य° । [6] B °तां । [7] D शास्त्रादीन् । [8] B °रः । [9] D एतत् ।

विशेषाद्दक्षिणामुर्तौ स्त्रीणां वै नाधिकारिता ।
त्वया प्रोक्तं महादेव सम्प्राप्तेऽपि ध्रुवं त्यजेत्[1] ॥ ३० ॥
इत्याद्युक्तं महादेव कथं ग्राह्यो मनुस्तथा[2] ।
शूद्राणां तु यथा यज्ञो नोक्तः प्रत्यक्षतस्त्वया ॥ ३१ ॥
वेदादौ तु महादेव शूद्राणां नाधिकारिता ।
तैर्यज्ञश्च कथं कार्यस्तथा स्त्रीणां महेश्वर ॥ ३२ ॥
उपासनायां देवेश यस्य वै नाधिकारिता ।
तस्य ध्यानं कथं कार्यं[3] तत्सकाशात्कथं मनुः ॥ ३३ ॥
ग्राह्यो वै देवदेवेश यथा वै सू[4]तकद्वये ।
उपस्थानाधिकारो न[5] तस्य पूजा कथं मता ॥ ३४ ॥

**श्रीशिव उवाच ।**

अध्यातास्तु[6] क्रियाः कार्या नोपस्थानं समाचरेत् ।
तथा वै देवदेवेशि स्त्रीणां वै नाधिकारिता ॥ ३५ ॥
पूर्णाभिषेकयुक्तानां सूतकाद्यं न च[7] स्मृतम् ।
स्नानं दानं तथा सन्ध्या पूजाद्यं कारयेच्छिवे ॥ ३६ ॥
यस्य दर्शनमात्रेण पापिष्ठाः पुण्यरूपिणः[8] ।
तस्य पापं[9] कुतो देवि[10] वर्तते वद सत्वरम् ॥ ३७ ॥
स एव पुण्यराशिर्वै नास्त्यत्र संशयः शिवे ।
अन्यदीक्षादिभिर्युक्तास्तेषां वै सुतकं नहि ॥ ३८ ॥

**श्रीदेव्युवाच ।**

एकं तु सुतकं देव वर्तते तस्य देवते ।
मन्त्रस्य च तथा होमस्यास्ति देव न चेतरम्[11] ॥ ३९ ॥
[12]जन्मसूतकमादौ स्यात्तदन्ते मृतसूतकम् ।
दक्षिणामुर्तितो देव गृहीते[13] मन्त्रत्रयके ॥ ४० ॥
गुरुः को वा तत्र पूज्यः का वा तत्र परम्परा ।

**श्रीशिव उवाच ।**

ध्यात्वा श्रीदक्षिणामुर्तिं विहाय प्रणवं प्रिये[14] ॥ ४१ ॥
मन्त्रो ग्राह्यो महेशानि गुरुः श्रीदक्षिणेश्वरः ।
महाविद्याविधौ देवि दक्षिणेशपरम्परा ॥ ४२ ॥
तत्परम्परया पूजा[15] गुरोः[16] कार्या महेश्वरि ।
यथा शूद्रेण देवेशि यज्ञमुख्याः क्रियाः शुभाः ॥ ४३ ॥

[1] D चरेत् । [2] U °स्तव । [3] B सिद्धिं; D क्वापि । [4] B श° । [5] U °रेण; D °रोऽस्ति । [6] B अर्ध्यास्तौंस्तु । [7] D च यत्° । [8] U कर्मणः । [9] B ° तः । [10] D सुरेशानि । [11] U चोत्तरं; D चैतरं । [12] U omits this line. [13] B गर्हिते; D नहि तं । [14] B °यं । [15] D °ज्या । [16] B °रौ ।

कार्य्यं ते चान्यद्वारेण तथाऽत्र प्रणवं[1] [2]त्यजेत्
इयं दीक्षा पशूनां वै पाशबन्धप्रदायिनी ॥ ४४ ॥

अथवाऽन्यप्रकारेण दीक्षणं शृणु साम्प्रतम् ।
नद्यां समुद्रगामिन्यां शुभलग्ने शुभे दिने ॥ ४५ ॥

सम्प्रदायं पुरा[3] पृष्ट्वा श्रीसूर्यमण्डलं लिखेत् ।
साङ्गं सावरणं सूर्यं सम्पूज्य प्राणवल्लभे ॥ ४६ ॥

ताडपत्रे[4] मनुं लिख्य वाचयेत्तत्प्रकाशतः ।
शताष्टवारं संवाच्यं चा[5]ङ्कानां वामतो गतिः ॥ ४७ ॥

तत्र सूर्यं गुरुं पूज्य सर्वसिद्धीश्वरो भवेत् ।
वी[6]राणां कौलिकानां तु भर्ता दीक्षणमाचरेत् ॥ ४८ ॥

इदं पशुपरं प्रोक्तं नहि[7] दक्षिणदीक्षणम् ।
स्वस्वकल्पोक्तविधिना संजप्य[8] परमेश्वरि ॥ ४९ ॥

पुरश्चर्यां प्रकुर्वीत य[9]थोक्तेन तु वर्त्मना ।
इति प्रोक्तं महादेवि किमन्यच्छ्रोतुमिच्छसि ॥ ५० ॥

**श्रीदेव्युवाच ।**

[10]पूर्वं संसूचितं देव न मह्यं वै प्रकाशितम् ।
तदद्य कथ्यतां देव यद्यहं तव वल्लभा ॥ ५१ ॥

**श्रीशिव उवाच ।**

अथ तेऽहं प्रवक्ष्यामि पूर्वं संगोपितं मया ।
दुर्गां कालीं शूलिनीं तु[11] विहाय सिद्धिमिच्छति ॥ ५२ ॥
दध्योदनं परित्यज्य दृषद्भक्षणमिच्छति ।
दुर्गा काली शूलिनी तु सर्वसिद्धिप्रदा मता ॥ ५३ ॥
महाविद्या कलौ देवि न देया यस्य कस्यचित् ।
प्रमादाद्यदि वा दद्यात् नहि सिध्यति सर्वथा[12] ॥ ५४ ॥
तत्रापि सुन्दरी काली न देया सर्वथा प्रिये ।
शाक्ते[13] स्वायम्भुवे बौद्धे वैष्णवे सौरचान्द्रयोः ॥ ५५ ॥
गाणपे चीनकौलेषु तथा पाशुपतक्रमे ।
शाबरे केरले दिव्ये मन्त्रमात्रे महेश्वरि ॥ ५६ ॥
वरदानाधिकारो हि कालिकायां प्रकीर्तितः ।
मन्त्रमात्रे प्रसादस्तु[14] कालिकायाः प्रकीर्तितः ॥ ५७ ॥

[1] D °वक्रं । [2] B य° । [3] U द्दृ°; D स्पृ° । [4] B तारेरेफो । [5] UD °स्त्वं° ।
[6] B वा° । [7] D तदा । [8] D °पूज्य । [9] B त° । [10] D omits four lines.
[11] U शूलशम्भुं । [12] B °तः । [13] B शक्तिः । [14] D °द तु ।

शैवशाक्ताद्यागमेषु कालिका वरदायिनी ।
एकस्मिन्समये पूर्वं त्रिपुरा[1]जय[2]धानहम् ॥ ५८ ॥
पञ्चाशल्लक्षजापं तु कृतं तु शम्भुना शिवे ।
प्रसन्ना वै तदा जाता सुन्दरी भक्तवत्सला ॥ ५९ ॥
कालिकाग्रे त्वया गत्वा ग्राह्यं तु वरदानकम् ।
शिवेनोक्तं महादेवि कोटिब्रह्माण्डनायिके ॥ ६० ॥
राजराजेश्वरी त्वं हि मया कुत्र[3] प्रगम्यते ।
आद्या श्री दक्षिणा काली अनिरुद्धसरस्वती ॥ ६१ ॥
मम प्रकृतिभूता तु सैव विद्या महेश्वरी ।
अन्या वि[4]कृतयः सर्वा विकृतौ नहि मुख्यता ॥ ६२ ॥

श्रीदेव्युवाच ।

अहं तु दक्षिणाकाली द्वितीया प्रकृतिर्वरा ।
ब्रह्मसम्मोहनार्थाय प्रपञ्चार्थं महेश्वर ॥ ६३ ॥
जाता तदाज्ञया देव साहं ज्येष्ठा महेश्वर ।
तत्र गत्वा वरो ग्राह्यः सैवाहं नात्र संशयः ॥ ६४ ॥
वरदानं मन्त्रमात्रे काल्या एव प्रकीर्तितम् ।
एवमन्ये महामन्त्राः संजपन्ति महेश्वर ॥ ६५ ॥
महामन्त्रैः कालिकाग्रे गत्वा सम्प्रोच्यते[5] च यत्[6] ।
तत्[7] शृणुष्व महादेव महद्गुह्यतरं वचः ॥ ६६ ॥
कालकाली महाकाली विद्याराज्ञी महोदया ।
सिद्धिनाथेश्वरी प्राणप्रिये सर्ववरप्रदे ॥ ६७ ॥
उपासकप्रसादाख्यं वरदानं कृतं शिवे ।
तत्रस्थं जायतां देवि त्विदं याचे तवाग्रतः ॥ ६८ ॥
महामन्त्रादयो मन्त्रा यूयं गच्छन्तु मे गृहम् ।
[8]तथैव क्रियतेऽस्माभिर्यथाकर्मानुसारतः ॥ ६९ ॥
भगवत्याः प्रसादेत्युक्ते वै सुन्दरीं प्रति ।
सुन्दर्या तु तथा प्रोक्तं प्रसादा[9]त्परमेव च[10] ॥ ७० ॥
अहं प्रपञ्चभूतास्मि सा तु निर्गुणरूपिणी ।
यया यत्क्रियते सर्वं तंत्र जातु विधीयते ॥ ७१ ॥
त्वया यत्क्रियते शम्भो तन्मया क्रियतेऽद्य तु[11] ।
[12]क्रियाद्येषु च देवेश अधिष्ठात्री तु कालिका ॥ ७२ ॥
[13]सा शैवमूर्त्तिरित्युक्ता चाहं शक्तिस्वरूपिणी ।
अहं शिवब्रह्मरूपा शक्तिरिति प्रकीर्तिता ॥ ७३ ॥

[1] D °री° । [2] U सप्त°; D जप्त° । [3] D देवि । [4] DU प्र° । [5] B °र्प्रापितं ।
[6] D तत्त्वतः । [7] B ततः । [8] D omits four lines. [9] U दो° । [10] U ह्यहमेव तु ।
[11] U विभो; D °धुना । [12] B omits this line. [13] B omits three lines

श्रीमत्पाशुपताद्येषु अधिष्ठात्री तु कालिका ।
उभयोरन्तरं देव प्रपञ्चार्थं प्रकीर्तितम् ॥ ७४ ॥

श्रीशिव उवाच ।

कालीसुन्दर्यन्तरं तु यः पश्यति महेश्वरि ।
स पापिष्ठो महादुःखी रौरवं नरकं व्रजेत् ॥ ७५ ॥
तस्य दर्शनजं पापं को दूरीकर्तुमिच्छति ।
प्रमादाद्दर्शनं चेत्स्यात्[1] पुनर्दीक्षां समाचरेत् ॥ ७६ ॥
पूर्णाभिषेकदीक्षा तु पुनः कार्या महेश्वरि ।
पुनर्दीक्षाविधानेन विद्या सिध्यति नान्यथा ॥ ७७ ॥
नान्यथा ह्यधिकारोऽस्ति कादिहादिमते शिवे ।
काद्यं[2] मतं तन्त्रराजं[3] खण्ड[4]ष्टकमिती[5]रितम् ॥ ७८ ॥
तत्र कादिमते देवि मतद्वयमुदीरितम् ।
पूर्वार्धं चोत्तरार्धं तु हादिकादिमतद्वयम् ॥ ७९ ॥
वर्णसाम्यान्मन्त्रसाम्यात्[6] कादिहादिमतं महत् ।
कहेत्येवं महामन्त्रस्तूत्तराम्नायगोचरः ॥ ८० ॥
ककाराद् ब्रह्मरूपत्वं तत्कादिमतमीरितम् ।
हकारात् शिवरूपत्वं तद्धादिमतमीरितम् ॥ ८१ ॥
काद्यं काली[7]मतं देवि हाद्यं श्रीसुन्दरीमतम् ।
द्वयं मिलित्वा कहाख्यं कादिहादिमतद्वयम् ॥ ८२ ॥
सौन्दर्ये तु प्रपञ्चोऽस्ति सौन्दर्यव्यतिरिक्तके ।
न प्रपञ्चोऽस्ति देवेश सौन्दर्यं सर्वदर्शकम् ॥ ८३ ॥
ब्रह्मसन्दर्शनं[8] देवि ह्यसौन्दर्यं महेश्वरि ।
एतद्रहस्यमाख्यातं कालीमुखविनिर्गतम् ॥ ८४ ॥
ग्रन्थेषु सुन्दरी काली सदा तिष्ठति शङ्करि[9] ।
द्वयोः प्रियकरो ग्रन्थः पूजयेद् गोपयेच्छिवे ॥ ८५ ॥
रहस्यातिरहस्ये च रहस्यातिरहस्यकम् ।
गोपनीयं गोपनीयं गोपनीयं स्वयोनिवत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ८६ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे कालीविवरणं नामाष्टचत्वारिंशः[10] पटलः ।

[1] B तद्दृश्य । [2] D काल्यां । [3] B °जा । [4] U षडा° । [5] D समी° । [6] B °म्यः । [7] U °दि । [8] B °न्देशकं । [9] D सुन्दरी । [10] B ऊनषष्ठितमः ।

## एकोनषष्टिः पटलः ॥

[1]श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।

श्रीशिव उवाच ।

कालीयोगरहस्यं च रहस्यातिरहस्यकम् ॥ १ ॥
कथ्यते त[2]व देवेशि शृणु सावहिता भव ।
स्त्रीनामा[3] कालिकारूपा[4] महाकालस्तु पुं भवेत् ॥ २ ॥

शिवशक्त्यात्मकं ब्रह्म यत्किञ्चिज्जगतीगतम् ।
[5]त्रयोऽग्नयस्त्रयो ग्रामाः गुणवेदाख्यतत्त्वकैः ॥ ३ ॥
नाडीत्रयं च त्रैलोक्यं त्रितयं व्योमपञ्चकम् ।
षट्चक्रषोडशाधारं शक्तयो रसयोस्तथा ॥ ४ ॥
[6]त्रितारस्त्रीविशेषत्वं[7] यत्किञ्चिज्जगतीगतम् ।
सर्वं शक्तिमयं वि[8]द्धि * * * च तिष्ठति ॥ ५ ॥
पर्जन्यः[9] सकलो देवो लक्षणं[10] शृणु पार्वति ।
धूम्रवर्णो वायुकरः[11] करभाकारसन्निभः ॥ ६ ॥
कृष्णवर्णो धूसरश्च[12] वात्यापादः पृथुः[13] स्मृतः ।
अग्नि[14]वक्त्रोऽग्निनेत्रश्च वडवाहृदयः स्मृतः ॥ ७ ॥
[15]जलशाम्भवशक्त्या तु यन्त्रितः क्षणभङ्गुरः ।
संयोगशब्दाद्देवेशि मेघ[16]गर्जनमीरितम् ॥ ८ ॥
शब्दशक्त्या सन्निपत्य ध्वनिवाग्विनियोजितः ।
कृष्णपीतरक्तश्वेतधूम्रपिङ्गलवर्णतः ॥ ९ ॥
यथाकाशो भवेद्देवि तथा तारुण्य[17]भूमिका ।
* * * योगकालान्तं[18] विपरीतं[19] प्रकीर्त्तितम् ॥ १० ॥
विद्युत्पातो हि बीजान्ताद्विदला[20]मुपलत्वके[21] (?) ।
ज[22]लपूर्णमहीत्वं[23] च विपरीतं प्रकीर्तितम् ॥ ११ ॥
स्त्रीरूपो वायुवेगी[24] च सर्वदेवमयः स्मृतः ।
अदृश्य[25]जलशक्त्या तु संयुतः पुरुषार्थदः ॥ १२ ॥

[1] After a long lacunæ A resumes at this point. Readings of the MS A are recorded hereafter. [2] B ए° । [3] B °मात्रा°; D मात्रका; A त्रिमात्रा । [4] B स्यात् । [5] ABD omit three lines. [6] AD omit this line. [7] B° शिष्टत्वं । [8] D सि° । [9] B पर्य्यासः । [10] MSS स्तलक्षं । [11] D कोणः । [12] D धूमवर्णो । [13] A पशुः । [14] B अति° । [15] A omits this line. [16] B इह । [17] B °श्रा° । [18] B °भू । [19] D त्रिविधं । [20] U बिन्दुना । [21] U °त्कं; A °त्के; B °लालके । [22] B न° । [23] B सहित्वं; A नहित्वं । [24] A °गेन । [25] U °श्ये ।

सर्वदेवमयत्वं च सर्वशक्तित्वमेव च ।
पर्जन्ये[1] देवदेवेशि सदा तिष्ठति निश्चितम् ॥ १३ ॥

स पर्जन्यः * * * * माश्रित्य तिष्ठति ।
* * त्रितयमाश्रित्य नाडी[2]रूपेण तिष्ठति ॥ १४ ॥

अधोवह्नि[3]र्दक्षिणे तु सूर्यस्तिष्ठति पार्वति ।
वामे चन्द्रो[4] मध्यभागे समस्तं पद्मगोलकम् ॥ १५ ॥

परितः सकला देवाः सिद्धयः किन्नरादयः ।
* * समासाद्य सर्वे तिष्ठन्ति पार्वति ॥ १६ ॥

जलं शक्तिर्मध्यभागे वाडवः कुरु[5]रूपधृ[6]क् ।
वायूर्ध्वजगतः प्रोक्तः परितः कृष्णवर्णकः ॥ १७ ॥

* * महेशानि पर्जन्यः सर्वदास्ति च ।
अविनाशी सदा स्थायी विनाशी व्योमगोचरः ॥ १८ ॥

पर्जन्यः * * च भूमिमध्ये प्रतिष्ठति ।
[7]अन्यत्र व्योमगः प्रोक्तो भूमिरन्यत्र पार्वति ॥ १९ ॥

* * पुरुषगं[8] प्रोक्तं * * शक्तिगतं प्रिये ।
फलं तत्र स्वेच्छया तु[9] स्वशक्तया परिनिष्ठितम् ॥ २० ॥

तत्र वर्षति पर्जन्यः शक्तिसङ्गमतोद्भुतः[10] ।
ब्रह्मानन्दस्वरूपोऽयम[11]ऽमृतत्वप्रदायकः ॥ २१ ॥

अमृतं च विषं[12] देवि शक्तौ सर्वं च तिष्ठति ।
योगाभ्यासेन पुरुषे सर्वं तिष्ठति पार्वति ॥ २२ ॥

* * योगक्षणे देवि सर्वं तिष्ठति पार्वति ।
अञ्जनं खड्गवेतालयक्षिणीपादुकागणम् ॥ २३ ॥

गुटिका तिलको गुप्तिरदृश्यत्वं च खेगतिः ।
परकायप्रवेशश्च चराचरपुरी गतिः ॥ २४ ॥

समस्ताः सिद्धयो देवि देहनाडी[13]प्रयोगतः ।
पुरुषाणां भवेद्देवि योगाभ्यासप्रकारतः[14] ॥ २५ ॥

* * योगेन देवेशि परस्यापि प्रजायते ।
चित्रमेतन्महेशानि रहस्यातिरहस्यकम् ॥ २६ ॥

1 A तर्जन्यां । 2 D नद°; A वर°; B नात्र । 3 U °ह्नि° । 4 D रामचन्द्रो । 5 D कद्रु । 6 U द्द° । 7 D omits three lines. 8 B °गतं । 9 B A स्वेष्टमाह । 10 A °जन्ममवोधयत् ; D चाद्भुतः । 11 B° पाय अ° । 12 A वषट् ; B विशद्दे° । 13 D °राग°; A °पुण्य° । 14 A °सोऽत्र कारणं ।

अत एव भवेत् कालीयोगरूपाः स्त्रियः स्मृताः[1] ।
कालीरूपाः स्त्रियः सर्वाः समस्तं[2] कालिकामयम् ॥ २७ ॥

अज्ञानादपि देवेशि फलमेव प्रयच्छति ।
फलपाकविधानेन किं तद्यन्न करे स्थितम् ॥ २८ ॥

* * तत्त्वसंस्पर्शाच्छक्तिपातकरो भवेत् ।
कौमारवयमा[3]रभ्य यौवनान्तं महेश्वरि ॥ २९ ॥

आमूलान्तं च विज्ञाय साधयेत्सिद्धिसाधनम् ।
अभावे तु कुमारीं च पूजयेत् परमेश्वरि ॥ ३० ॥

कुमार्यै मञ्जलं दत्तं तञ्जलं सागरोपमम् ।
कुमार्यै चार्पितं पुष्पं मलया[4]द्रिसमं भवेत् ॥ ३१ ॥

यद्यद्दत्तं कुमार्यै तु तदनन्तफलप्रदम् ।
न कुमारीसमं भाग्यं न कुमारीसमं तपः ॥ ३२ ॥

न कुमारीसमा विद्या न कुमारीसमं धनम् ।
न कुमारीसमं भाग्यं न राज्यमपि पार्वति ॥ ३३ ॥

न कुमारीसमं तीर्थं न कुमारीसमः क्रतुः ।
न कुमारीसमो योगो न भूतो न भविष्यति ॥ ३४ ॥

यदन्नमर्पितं तस्यै[5] भवेद् ब्रह्माण्डसन्निभम् ।
अहो धन्यवतां मध्ये कुमारीपूजकः कलौ ॥ ३५ ॥

कुमारी देवता प्रोक्ता कुमारी प्राणरूपिणी ।
कुमारी भूषणं[6] भूषा कुमारी स्पर्श[7]रूपिणी ॥ ३६ ॥

तद्धस्तसम्भवं पुष्पं तद्धस्तसम्भवं जलम् ।
तद्धस्तरचितं भोज्यं देवताभ्यो निवेदयेत् ॥ ३७ ॥

तासां प्रहारद्वेषं[8] च सर्वथा परिवर्जयेत् ।
स शक्ति[9]शिवसम्पूज्यो गाणपः सर्वसात्कृतिः[10] ॥ ३८ ॥

स योगी स च संन्यासी[11] स मेधाषट्कसंयुतः ।
स वेदवित्[12] सर्ववित् स्यात् कुमारीपूजकः स्मृतः ॥ ३९ ॥

अहो धन्यवतां मध्ये कुमारीपूजकः कलौ ।
तत्रापि धन्यो देवेशि शक्तिपूजापरायणः ॥ ४० ॥

तत्रापि धन्यो देवेशि * * पूजापरायणः ।
* * वंशसमुद्भूतां कुमारीं भोज्य यत्नतः ॥ ४१ ॥

1 A स्त्रीरूपता । 2 A श्मशानं । 3 B आ° । 4 D अञ्जना° । 5 B यद्यच्चैवार्पितं तस्य ।
6 A °णा । 7 B स्पर्ध° । 8 D निन्दां । 9 D शाक्तः । 10 D स च सत्कृती ।
11 A सर्वसन्त्यागी । 12 U देववत् ।

त्रैलोक्यविजयी भूयात्कालीरूपः कलौ सुधी[1] ।
तस्यां तिष्ठति सा काली या कलौ शीघ्रसिद्धिदा ॥ ४२ ॥

दर्शनात्स्पर्शनाद्भोज्याद्दानाद् ध्यानादपि प्रिये ।
सिद्धिर्भवति देवेशि नात्र कार्या विचारणा ॥ ४३ ॥

रहस्यातिरहस्यं च रहस्यातिरहस्यकम् ।
गोपनीयं गोपनीयं स्वयोनिरपरा यथा ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ४४ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे योगनिर्णयो नामैकोनषष्टिः पटलः ।

[1] U प्रिये ।

## षष्टिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।

**श्रीशिव उवाच ।**

तद्रहस्यं महेशानि गोप्याद्गोप्यतरं महत्[1] ॥ १ ॥
तथापि तव सद्भक्त्या कथ्यते श्रृणु साम्प्रतम्[2] ।
[3]तारायां कालिकायां च छिन्नायामपि पार्वति ॥ २ ॥
मण्डूकादिभवं पीठमाधारादिकमेव वा[4] ।
तत्रापि दश[5]शक्त्या तु त्रिधा भिन्नं[6] महेश्वरि ॥ ३ ॥
* * तथा शक्तौ यत्किञ्चित्पीठमर्चयेत् ।
* * वस्त्रासनं देवि सू[7]त्रान्तं[8] परिकीर्तितम् ॥ ४ ॥
मुण्डासनं तु भङ्गान्तं[9] तथा शवासनं शिवे ।
* * सनं जपान्तञ्च[10] * * सनमेव च ॥ ५ ॥
मृदुकोमलचूडादि[11] चूडान्तं[12] परिकीर्तितम् ।
तथा वीरासनं देवि समानीय प्रयत्नतः ॥ ६ ॥
हृन्मलं[13] दूरतस्त्यक्त्वा हृदय शोधये[14]त्पुनः ।
वस्त्राच्छन्नं[15] भूमयं च कृत्वा स्थित्वा जपं चरेत् ॥ ७ ॥
नरचर्मासनं देवि गजचर्मासनं तथा ।
वस्त्रा[16]सनं * * सलोमान्तं नृकेसरीम्[17] ॥ ८ ॥
कपीन्द्राख्यं मृगाजाख्यं तूर्णाख्यं [18]त्राणनांतकम् ।
* * त्वगासनं देवि सलोमान्तं महेश्वरि ॥ ९ ॥
* * सनं सजीवान्तं[19] पातान्तं[20] * * सनम् ।
* * सनं देवि तत्पातान्तं[21] प्रकीर्तितम् ॥ १० ॥
[22]जिह्वास्पर्शासनं देवि तत्तत्त्रान्तं प्रकीर्तितम् ।
तदन्ते सन्त्यजेद्देवि जघन्यं चोत्तरोत्तरम् ॥ ११ ॥
विष्टरासनकं देवि यदनन्तं प्रकीर्तितम् ।
क्रमात्सिद्धिप्रदं देवि सर्वकार्यकरं[23] भुवि ॥ १२ ॥
व्याघ्रासनं सलोमान्तं केचिद्भङ्गान्त[24]मम्बिके ।
इति संक्षेपतः प्रोक्तं फलसंख्यां श्रृणु प्रिये ॥ १३ ॥

[1] U गोप्यं परात्परं; D परं; A °परायणं । [2] AU सादरं । [3] A omits this line. [4] D क्रमेण च । [5] D कुल° । [6] D °न्ना । [7] D मू° । [8] B °न्ते । [9] A मातङ्ग्यां; D संगान्तं । [10] A जपं पंच । [11] B दीपादि° । [12] B चरणान्तं । [13] B तन्मन्त्रं । [14] A °न्न । [15] A ब्रह्माद्यं । [16] A ब्रह्मा° । [17] D महेश्वरि । [18] D द्रो° । [19] D °त्र । [20] D °ल° । [21] D पातेति । [22] AD omit three lines. [23] D सिद्धिप्रदा । [24] AU °भृङ्गी त° ।

* * सनं देवि त्रिदिनात्[1] त्रिगुणाकृतिः ।
* * वस्त्रासनं देवि त्रिमासात्फलदायकम् ॥ १४ ॥

मुण्डासनं तु षण्मासैर्दिनान्तं[2] तु शवासनम् ।
नर[3]चर्मासनं[4] देवि त्रिमासात्फलमुच्यते ॥ १५ ॥

* * सने द्विमासेन फलं भवति सुन्दरि ।
* * सने महेशानि पक्षान्ते तु[5] फलं भवेत् ॥ १६ ॥

मृद्वासने तु मासेन कोमले तत्त्वसंख्यया ।
अचूडके विष्णुतत्त्वे वीरे यामत्रयेण च ॥ १७ ॥

वस्त्रासने पञ्चवर्षैः सिंहासनेऽपि मासकैः[6] ।
मृगाख्ये वेदवर्षैश्च ऊ[7]र्णाख्ये दशवर्षतः ॥ १८ ॥

* * त्वगासने देवि सप्ताहेन फलं भवेत् ।
* * सने सपक्षान्तं * * ख्ये दिनाष्टकम् ॥ १९ ॥

विपरीते षट्दिनैश्च जिह्वास्पर्शे द्विवेदकैः ।
सप्त * * देवि[8] सप्ताहेन फलं लभेत्[9] ॥ २० ॥

विष्टरे मासषट्कैश्च फलं भवति पार्वति ।
इति संक्षेपतः प्रोक्तं नित्यनैमित्तके शृणु ॥ २१ ॥

नित्यलोपो न कर्तव्यो नित्यं तु सर्वकालिकम् ।
रात्रिर्भवति चेद्देवि[10] पितृतर्पणकं न च[11] ॥ २२ ॥

सन्ध्यालोपनिमित्ते च गायत्रीं मूलमेव वा ।
जपेदष्टोत्तरं देवि सहस्रं यत्नतः शिवे ॥ २३ ॥

तथा मध्याह्निकं कार्यं रात्रिकृत्यं ततश्चरेत्[12] ।
जपादिस्तोत्रपाठान्तं सर्वमेतत्स[13]माचरेत् ॥ २४ ॥

तदन्ते पूजनं कार्यं[14] ततो नैमित्तिकं चरेत् ।
अत्र केचित्समिच्छन्ति नित्ये पञ्चोपचारिका[15] ॥ २५ ॥

ततो नैमित्तिकं काम्यं कारयेत्परमेश्वरि ।
इति संक्षेपतः प्रोक्तं सोपानं शृणु पार्वति ॥ २६ ॥

नवसोपानसंयुक्तं ताराकालीस्थिते पदम्[16] ।
पादाष्टक[17]समायुक्तं शस्त्रा[18]ष्टकसमुज्ज्वलम् ॥ २७ ॥

[1] D °रात्रात । [2] A °नेन । [3] U ख° । [4] D °ने । [5] A तत् । [6] B पंचयामकेः । [7] A जी° । [8] B दिव्ये । [9] B भवेत् । [10] B देवेशि । [11] A °णकेन वा; U तथा । [12] B °रन् । [13] U °व स° । [14] DU कर्म । [15] U °रका । [16] B ग्रहं; A°दां । [17] U °षट्क° । [18] D शरा° ।

दैवताषोडशाक्रान्तं पीठं[1] पीठविदो विदुः ।
[2]धर्माष्टकसमाक्रान्तं प्रेता[3]ष्टक[4]समुज्ज्वलम् ॥ २८ ॥

धर्माद्यनैश्वर्यान्तं च ब्रह्मादीश्वरतः शिवे ।
ऋग्यजुःसामनिगमं चतुर्वेदसमुज्ज्वलम् ॥ २९ ॥

इति संक्षेपतः प्रोक्तं किमन्यद् बहु[5]विस्तरैः ।
शक्तिसङ्गमयोस्तन्त्रं तत्र संक्षेपतो मतम् ॥ ३० ॥

तदेव भूयो देवेशि ध्याननाम्ना प्रकथ्यते ।
रक्तवर्णं स्मरेद्धर्मं वृष[6]रूपं समुज्ज्वलम् ॥ ३१ ॥

त्रिशूलह[7]स्तकं शृङ्गद्वययुक्तं च पङ्कजम् ।
सिंहरूपं स्मरेद्ज्ञानं श्यामवर्णं पुरातनम् ॥ ३२ ॥

श्वेतच्छटा[8]समायुक्तं पुच्छं तन्म[9]स्तकोपरि ।
कृष्णवर्णो यदा सिंहस्तदा श्वेतच्छटा[10] भवेत् ॥ ३३ ॥

कृष्णच्छ[11]टो श्वेतवर्णो कालीविद्याविधौ हरिः ।
वैराग्यं पीतवर्णं च हंसाकारं निरंकुशम् ॥ ३४ ॥

उत्तानहस्तं सन्ध्याये[12]त्स्थापिते सिंहविष्टरे ।
ऐश्वर्यं कृष्णवर्णाढ्यं द्विरदाकारमद्भुतम् ॥ ३५ ॥

पंकजं बिभ्रतं दण्डं[13] संस्मरेत् परमेश्वरि ।
अधर्मं पुरुषाकारं विचित्रा[14]म्बरभूषितम् ॥ ३६ ॥

सर्वावयवसंयुक्तं उ[15]त्फुल्ल[16]पङ्कजे स्थितम् ।
अज्ञानं पुरुषाकारं विचित्रं[17] नरदैवतम् ॥ ३७ ॥

तत्त्व[18]मुद्राधरं[19] शान्तं संस्मरेत्परमेश्वरि ।
अवैराग्यं स्मरेद्दिव्यं नानावर्णसमुज्ज्वलम् ॥ ३८ ॥

विचित्रवर्ण[20]भूषाढ्यं वामनाकृति[21]कं शुभम् ।
अनैश्वर्यं चित्रवर्णं नानारत्नाकृतिं परम् ॥ ३९ ॥

[1] A पिण्डं । [2] D अध° । [3] A प्रोक्ता° । [4] B °त्मक° । [5] A स्तोत्र° ।
[6] B त्रिषु । [7] BD °म° । [8] U °जटा । [9] A °त्तु° । [10] U °जटा । [11] U °ज° ।
[12] A °य° । [13] D कुण्डे । [14] B °भिन्ना° । [15] U प्र° । [16] A तद्रूपं । [17] B विधिनं;
A विचिन्त्य । [18] AD °त्तद्° । [19] A धनुर्धरं । [20] UD °त्राम्बर° ।
[21] B °वृत्ति° ।

| | | |
|---|---|---|
| ऋक् | अ. अवैराग्य ७ | यजु ३<br>युग १२ |
| २ ज्ञान<br>ईश्वर | | वैराग्य ३<br>साम ३<br>अथर्वण ३<br>अनैश्वर्य ८ |
| ६ अज्ञान<br>३ रुद्र | | ऐश्वर्य ४ |
| धर्म<br>२ विष्णु | अधर्म ९ | ब्रह्मा ८ |

ब्रह्मा हंससमारूढश्चतुर्वक्त्रश्चतुर्भुजः ।
दण्ड[1]पद्माक्षसूत्रं च दधतं चारुरूपिणम् ॥ ४० ॥
चतुर्वक्त्रं त्रिनेत्रं तु ब्रह्मकूर्चं च पङ्कजम् ।
बिभ्रतं संस्मरद्दिव्यं स्वर्णवर्णमहोज्ज्वलम् ॥ ४१ ॥
जटाजूट[2]धरं वृद्धं **ब्रह्माणं** परदैवतम्[3] ।
चतुर्भुजं महाविष्णुं श्यामं गरुडवाहनम् ॥ ४२ ॥
नानालङ्कारशोभा[4]ढ्यं सर्वावयवशोभितम्[5] ।
शङ्खचक्रगदापद्मैः क्रमात्संबिभ्रतं स्मरेत् ॥ ४३ ॥
**महेश्वरं** वृषारूढं शुक्लवर्णं त्रिलोचनम् ।
कपालं डमरुं चैव वरदाभयशूलकम् ॥ ४४ ॥
टङ्कं संबिभ्रतं देवं व्याघ्राजिनवरा[6]म्बरम् ।
दिगम्बरं वा देवेशि स्वेच्छया[7] रुद्रभावना[8] ॥ ४५ ॥
**ईश्वरं** रक्त[9]वर्णञ्च व्याघ्रसिंहासन[10]स्थितम् ।
चतुर्भुजं त्रिनयनं सर्वविद्याविशारदम् ॥ ४६ ॥
खड्गखेटकमुण्डं[11] च वरं[12] संबिभ्रतं स्मरेत् ।
**ऋग्वेदं** श्वेतवर्णञ्च स्रुक्स्रुवौ[13] बिभ्रतं विभुम् ॥ ४७ ॥
**यजुर्वेदं** रक्तवर्णं याग[14]साधनतत्परम् ।
अध्वर्युकर्मनिरतं संस्मरेत्सिंहविष्टरे ॥ ४८ ॥

[1] A चन्द्र°; U इदं । [2] B °चूड° । [3] U °मेश्वरं । [4] A भूषा° । [5] A °वरण भूषितं । [6] D °कृता° । [7] B स्वरूपा । [8] D रुद्रस्य भावना मता । [9] B चक्र° । [10] U °ने । [11] D मुद्गरं । [12] D वेदं । [13] B °चं । [14] A विद्या; DU पात्रा° ।

सामवेदं पीतवर्णं गान[1]शक्तिपरायणम् ।
द्विभुजं तालमानाढ्यं[2] सर्वदेवनमस्कृतम् ॥ ४९ ॥

अथर्वणं चित्रवर्णं कृष्णवर्णं च वा प्रिये ।
द्विभुजं पुस्तकधरं द्वितीये कर्षणं परम् ॥ ५० ॥

पञ्चाशद्भि महापद्मं पुस्तकं कर[3]शोभितम् ।
दिक्विदिक्क्रमयोगेन देवताः परिकीर्तिताः ॥ ५१ ॥

स्थापने देवताः प्रोक्ताः पीठस्य परमेश्वरि ।
सिंहासनस्था देवाश्च[4] कीर्तिताः परमेश्वरि ॥ ५२ ॥

चर[5]स्थिरप्रभेदेन सर्वं संक्षेपतो मतम् ।
चरे ध[6]र्मादिपीठं च स्थिरे तु धर्मशम्भुयुक् ॥ ५३ ॥

इति संक्षेपतः प्रोक्तं शक्तियोगं समभ्यसेत् ।
सुन्दरीं तरुणीं श्यामां[7] चार्वङ्गीं चारुहासिनीम् ॥ ५४ ॥

चतुरां * * सदा * * * * * ।
षोडशाब्दां[8] मन्त्रमयीं[9] मृगशावकलोचनाम् ॥ ५५ ॥

स्वकीयां परकीयां वा विधिवत्प्रार्थयेत्सुधीः ।
प्रातःकृत्यं समाप्यादौ नित्यकृत्यविधानतः ॥ ५६ ॥

कृत्वा शक्तिं समानीय शक्तिन्यासपूरःसरम् ।
**सोमवती[10]न्यासे शक्ति[11]न्यासेऽपि पार्वति ॥ ५७ ॥

कृत्वा सर्वं प्रयत्नेन शक्तिं * * * प्रयत्नतः ।
स्वयं * * * स्तत्र भूत्वा शक्तिजाप[12]परायणः ॥ ५८ ॥

प्रसूनमञ्चे संस्थाप्य मञ्चे वा परमेश्वरि ।
* * * * * * कृत्वा पञ्चतत्त्वपरायणः ॥ ५९ ॥

सुधानन्दमयो भूत्वा स्वयं * * * * भवेत् ।
* * * * * * * * * * * * * * * ॥ ६० ॥

सप्त**मासाद्य स्पर्शषट्कासनं चरेत् ।
स्वयं **समो भूत्वा ता[13]मा**परायणाम् ॥ ६१ ॥

कृत्वा यत्नेन देवेशि शुद्धमन्त्रौषधेन च ।
* * * * * * कुर्यात्[14] कालीजापपरायणः ॥ ६२ ॥

तावत्कुर्यान्महेशानि याव**विलोपनम्[15] ।
वारं वारं पुनः[16] कुर्याद्याव** शांकरि[17] ॥ ६३ ॥

1 B प्राण° । 2 U तानानादाढ्यं । 3 A पुस्तं करेण; U पुस्तकागार° । 4 A दिव्याश्च । 5 B °न्द्र° । 6 B °द्ध° । 7 U रम्यां । 8 B °दि° । 9 B °पंक्तिं; A °युक्तिं; U °युक्तां । 10 B इति; A रस°; U रति° । 11 B शैव° । 12 B °व्य° । 13 U त°; A ना° । 14A कृत्वा । 15 B °पितं; D °कनं । 16 A स्वरं च निपुणं । 17 B शङ्कर; D शङ्कया ।

यावन्निश्चेष्टितो भूयात्तावत्कुर्यान्महेश्वरि ।
ततो बिन्द्वैकं[1] संग्राह्य अर्घ्यार्थि[2] परमेश्वरि ॥ ६४ ॥

[3]त्रिपञ्च[4]नवशक्तीनामेवं कृत्वा महेश्वरि ।
**लोपं समासाद्य * * * * च वा[5] ॥ ६५ ॥

एवमा[6]सनमासाद्य खञ्जरीटासनं तथा ।
चन्द्रबिम्बं सर्पिणीञ्च[7] सूर्यं[8] च तिलपुष्पकम् ॥ ६६ ॥

चामरं पर्वतौ[9] सूत्रं तथैव च सरोरुहम्[10] ।
वीक्ष्य यत्नेन देवेशि कालीपूजनमारभेत्[11] ॥ ६७ ॥

कालीं तारां तथा छिन्नां सुन्दरीं बगलामुखीम् ।
पूजयेत्परमेशानि तामन्यां[12] वा महेश्वरि ॥ ६८ ॥

प्रसूनमंचे[13] संस्थाप्य पूर्ववत्सर्वमाचरेत् ।
पूर्वशक्तिर्यदा देवि तदा तस्या न शोधनम् ॥ ६९ ॥

अन्यां संशोध्य यत्नेन * * * * प्रयत्नतः ।
सिन्दूरतिलको वापि देवतातिलकान्वितः[14] ॥ ७० ॥

कज्जलं नेत्रयोर्दद्यात्स्त्रीवेषं च समाचरेत् ।
खगहस्तो मुक्तकेशः पुष्पतैलविभूषितः ॥ ७१ ॥

नानासौगन्ध्यसंयुक्तो धूपगेह[15]समास्थितः ।
ताम्बूलरागो वदने परितः शक्तयः शुभाः ॥ ७२ ॥

**सने नरः[16] स्थित्वा[17] पात्रासादनसंयुतः ।
**मध्ये मूलयन्त्रं विचिन्त्य परमेश्वरि ॥ ७३ ॥

यथोक्तवर्त्मना पूज्य सबल्यंतं[18] महेश्वरि ।
यत्र स्थानगता देवी तत्र स्थानं[19] प्रपूजयेत् ॥ ७४ ॥

सम्पूज्य परमेशानि चतुःषष्ट्युपचारकैः ।
आरार्तिकं[20] ततः कृत्वा जपं कुर्यान्महेश्वरि ॥ ७५ ॥

जपं निवेद्य तस्यां तु[21] तयो[22]र्कं तत्समाचरेत् ।
** यत्नं[23] प्रकर्तव्यं स्वयं पूजनमारभेत् ॥ ७६ ॥

* * * * * ।
तदैव कारयेद्देवि चान्यथा नश्यति ध्रुवम् ॥ ७७ ॥

[1] U तत्त्वत्त्वं; A तद्विमल° । [2] A °यै । [3] A omits 17 lines. [4] D पर्व° । [5] D चरेत् । [6] B एवोपा° । [7] D °णां च । [8] B पूर्वं । [9] U वर्तनौ । [10] U °वरं । [11] D °चरेत् । [12] D °राद्यां । [13] B पञ्च । [14] U °ता । [15] B °हे । [16] B रतः । [17] D स्थिता देवा° and adds °स्ततस्थानं च प्रपूजयेत् । सम्पूज्य मानवः स्थित्वा । [18] B कल्पान्तं । [19] U स्थिता दवाः तत्स्थानं च । [20] A °त्रिकं । [21] D वै । [22] AU °थो° । [23] B रमते या ।

उभौ[1]हि तोष्य[2] यत्नेन[3] स्वर्ण[4]रत्नगजादिभिः ।
* * * * * जप्यात्साक्षात्तारासमो[5] भवेत् ॥ ७८ ॥

एतस्य फलबाहुल्यं मया वक्तुं न शक्यते ।
स शिवः स हरिः काली सैव तारा पराम्बिका ॥ ७९ ॥

सैव छिन्ना सुन्दरी तु स एव सुरसुन्दरः ।
सर्वसिद्धीश्वरो भूत्वा कामरुपो[6] बिलांजनः[7] ॥ ८० ॥

खड्गवेतालगुटिका खेचरी तिलकस्तथा ।
रसरसायणं देवि परकायप्रवेशनम् ॥ ८१ ॥

वयःस्थैर्यमथाकर्ष[8]स्तथा मधुमती शिवा[9] ।
पद्मावती भोगवती स्वयं सिध्यति[10] पार्वति ॥ ८२ ॥

वेतालचन्द्रसूर्यादिक[11]रणं जलरूपता ।
अणिमाद्यष्टकं देवि कोटिसिद्धीश्वरत्वकम्[12] ॥ ८३ ॥

तस्य हस्ते भवेद्देवि नात्र कार्या विचारणा ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ८४ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे शक्तिपूजारहस्यकथनं नाम षष्टिः पटलः ।

[1] D °भे । [2] B °भैर्हीनेषु; D हि तेषु । [3] D पानेन । [4] B °र्गं° । [5] A °मयो; D° न्नारायणो । [6] DU °पी । [7] B विलींजना; D विलोचनः । [8] A कूर्चं° । [9] D °वां । [10] B °द्धापि । [11] U का° । [12] D °रो भवेत् ।

## एकषष्टिः पटलः ।

**श्रीदेव्युवाच**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।

**श्रीशिव उवाच**

तव प्रीत्या महेशानि कथ्यते शृणु पार्वति ॥ १ ॥
सुन्दरीं बालिकां रम्यां चार्वङ्गीं चारुहासिनीम् ।
रुद्रवर्षमध्यगतां[1] नववर्षान्महेश्वरि[2] ॥ २ ॥
घृणालज्जाविनिर्मुक्तां भक्तभक्तां सुचञ्चलाम् ।
मनसा[3] दीक्षितां बालां मञ्चके स्थापयेन्नरः ॥ ३ ॥
न्यासान्विधाय तद्देहे चक्रन्यासक्रमेण च ।
तद्देहे देवतां पूज्य सबल्यन्तं महेश्वरि ॥ ४ ॥
सम्पूज्य प्रजपेद्देवि सर्वसिद्धीश्वरो भवेत् ।
* * * * * * * * ॥ ५ ॥
प्रजपेत्परमेशानि वाक्सिद्धिं विविधां लभेत् ।
ब्रह्माण्डगोलके सर्वं यत्किञ्चिज्जगतीगतम् ॥ ६ ॥
सर्वं हस्तगतं भूयान्नात्र कार्या विचारणा ।
शतं पादे शतं नाभौ शतं * * शतं हृदि ॥ ७ ॥
शतद्वयं[4] * * शतमोष्ठे च चक्षुषि ।
शतं मौलौ महेशानि सहस्रेण[5] पुरस्क्रिया ॥ ८ ॥
एवं क्रमं समासाद्य सर्वसिद्धीश्वरो भवेत् ।
मनोरथमयी सिद्धिः कोटिसिद्धीश्वरत्वकम् ॥ ९ ॥
वाक्सिद्धिर्विविधा देवि तस्य हस्तगता भवेत् ।
कलौ युगे तु सम्प्राप्ते शक्तियोगो महान्भवेत्[6] ॥ १० ॥
[7]शक्तियोगः परं योगः शक्तियोगः परं तपः ।
शक्तियोगः परं धाम शक्तियोगः परा कला ॥ ११ ॥
शक्तियोगं विना देवि यः कालीं परिपूजयेत् ।
इह क्षोभमवाप्नोति परत्र नरकं व्रजेत् ॥ १२ ॥
सिद्धिहानिर्भवेद्देवि मन्त्रोच्चारणमात्रतः ।
तत्र [8]बालाभिधो योगः सर्वयोगोत्तमोत्तमः ॥ १३ ॥
सर्वदा कारयेद्देवि सर्वदा पूजयेच्छिवम् ।
न जपैर्न[9] तपस्याभिर्नोपवासव्रतादिभिः ॥ १४ ॥

[1] B गतिः । [2] D reads as रुद्रपर्यङ्कमध्यस्थां नववर्षां महेश्वरि । [3] D अमलां । [4] B °द्वन्द्वं । [5] U °स्त्रारे; D स्रे तु । [6] D लभेत् । [7] This line is supplied by U; A omits 12 lines. [8] D तत्तद्बा° । [9] B °पैन ।

न द्रव्यैर्न कुलद्रव्यैः स्वर्णरत्नादिभिः प्रिये ।
तृप्ता नहि भवेद्देवि शक्तिपूजां विना शिवे ॥ १५ ॥
सर्वांगं[1] विक्षिपेद्देवि महाकामकलान्वितः ।
मुखे बिन्दुं विभाव्याथ सूर्यचन्द्र * * ॥ १६ ॥
चन्द्रं वक्त्रे हरार्धं च * * सम्भाव्य पार्वति ।
मूर्द्धादि[2]नाभिपर्यन्तं ई[3]कारं परिचिन्तयेत् ॥ १७ ॥
एवं रूपं तु कौमार्यां विभाव्य परमेश्वरि ।
पूजयेद्देवताबुध्या सर्वसिद्धीश्वरो भवेत् ॥ १८ ॥
ई[4]कारद्वय[5]संयोगात्कामकामं प्रयोजयेत्[6] ।
वज्रं[7] भवति देवेशि कामद्वन्द्वं[8] कलात्मकम् ॥ १९ ॥
बिन्दुयुग्मं[9] च [10]ऐंकारस्त्वीका[11]रस्तु त्रिबिन्दुतः ।
ईदृग्रूपः शिवः प्रोक्त ईकारात्मा सदाशिवः ॥ २० ॥
निर्गुणस्तु परातीतः शक्तयां संकल्पितः सदा[12] ।
* * * शक्तया सर्वदा सु[13]नियन्त्रितः ॥ २१ ॥
त्रैलोक्यं च त्रिनाडी[14] च त्रितत्त्वं त्रिगुणात्मता[15] ।
त्रिचैतन्यं त्रिलयत्वं[16] त्रितारात्वं[17] त्रिराशिता ॥ २२ ॥
त्रैकाल्यं चैव तार्तीयं वह्नित्रितयतापि[18] च ।
महाकामकलारूपे सर्वदा तिष्ठति प्रिये ॥ २३ ॥
अविनाशी सदास्थायी तारुण्यामृतविग्रहा ।
महाकामकला देवि सर्वदा तिष्ठति प्रिये ॥ २४ ॥
भावनावशतां याता * * * संस्थिता ।
अत एव भकारस्य[19] शिवरूपत्वमेव च ॥ २५ ॥
* * * भकारस्तु त्रिबिन्दुतः ।
अत एव भवेद्वज्रं[20] कामरूपं सनातनम् ॥ २६ ॥
एतज् ज्ञानयुतो देवि कालीरूपो भवेद् ध्रुवम् ।
कूर्चं काली तथा माया ध्रुवबीजक्रमेण च ॥ २७ ॥
त्रिसन्धि[21]क्रमयोगेन सङ्गमः क्रमयोगतः ।
औधा[22]पत्रं त्रिसूत्रं च दूर्वापत्रं द्विसूत्रकम् । २८ ॥
त्रिपुण्ड्रं[23] भवति शिवे कलासप्तक[24]संयुतम् ।
कलापञ्चकयुक्तं वा त्रिपुण्ड्रं सिद्धिदायकम् ॥ २९ ॥

1 B सर्वदा; D सर्वारिं । 2 A °धो । 3 B ह्° । 4 B ह्° । 5 A रूप° । 6 AD °नात् । 7 D वक्त्रं । 8 A रूपं । 9 D °कं । 10 U ए° । 11 A वाका°; U स्त्विका° । 12 B °ल्तिस्तदा । 13 D सं° । 14 A वर्णणावृत्तिं । 15 D °त्मिका । 16 D °नयनां । 17 D बिम्बं च । 18 A °तोपि । 19 D स° । 20 D °कूत्रं । 21 D °न्ध्या° । 22 B औच्चा°; U ओर्ध° । 23 B °सूत्रं । 24 B कल्पसूत्रक° ।

ला[1]प्य यत्नेन देवेशि पूर्वयोगपरायणः ।
कुलवारे कुलतिथौ मासर्त्तु[2]पक्षयोगतः ॥ ३० ॥
ज्ञात्वा सम्पूजयेद्देवि सर्वसिद्धीश्वरो भवेत् ।
प्रतिपल्लेशमात्रेण कलामात्रेण चाष्टमी ॥ ३१ ॥
अमा कलात्रिमात्रा[3] तु षट्क[4]ला तु चतुर्दशी ।
दानाध्ययनकर्मादौ तिथिः प्रोक्ता महेश्वरि ॥ ३२ ॥
सूर्योदयमनुप्राप्य या तिथिश्चोदयं भवेत् ।
[5]सा तिथिः सर्वकार्याणां कर्त्री[6] प्रोक्ता महेश्वरि ॥ ३३ ॥
होमजाप[7]पूजना[8]दौ घटिका त्र्युत्तरा[9] तिथिः ।
महानिशाव्यापिनी तु सा तिथिः शुभदायिका[10] ॥ ३४ ॥
व्रते श्राद्धे चोपवासे द्वितीया तिथिरीरिता[11] ।
परा[12] मध्याह्न[13]संव्याप्या[14] तदा पूर्वैव चाष्टमी ॥ ३५ ॥
जन्माष्टमी निशाव्याप्या नक्षत्रान्ता[15] जयन्तिका ।
दानाध्ययनकर्मादौ परैव परिकीर्त्तिता ॥ ३६ ॥
त्रिनाडीतश्चतुर्थी स्याच्चन्द्रदर्शे[16]ऽपि पार्वति ।
सैव व्रते पूजनादौ संकष्टा वरदायिका ॥ ३७ ॥
चतुर्थी परमेशानि कीर्त्तिता परमेश्वरि[17] ।
अमासोमयु[18]ता या तु सा परैव महेश्वरि ॥ ३८ ॥
अमायुक्ता न कर्तव्या प्रतिपच्चण्डिकार्चने ।
शुक्ला परैव प्रतिपत्तथा यम[19]तिथिः परा ॥ ३९ ॥
भद्रोत्तरं तिथिं व्याप्य तृतीया च[20] तु सा तिथिः ।
गौरीपूजाविधौ शस्ता सर्वदुःखविनाशिनी ॥ ४० ॥
त्रिंशन्नाड़ी सप्तमी स्यात्तदन्ते[21] कालिकातिथिः ।
द्वितीये[22] वेदघटिका वर्धमाना प्रदृ[23]श्यते[24] ॥ ४१ ॥
पूजादौ प्रथमा प्रोक्ता दानाध्ययनकर्मणि ।
व्रते श्राद्धे द्वितीया[25] तु प्रोक्ता श्यामा[26]ष्टमी तिथिः ॥ ४२ ॥
पूर्वाष्टमी कृष्णपक्षे शुक्लपक्षे परा तिथिः ।
श्रावणे सप्तमी कृष्णा शुक्लपक्षे[27] नभेक्षणा[28] ॥ ४३ ॥
अष्टमी रात्रिसंयुक्ता प्रदोषाख्या तिथिस्तु सा ।
शिवपूजाविधौ शस्ता सर्वसिद्धिकरा भुवि ॥ ४४ ॥

[1] A लो°। [2] DU °र्क्ष°। [3] B त्रे°। [4] B °प°। [5] B omits three lines. [6] A किं तत्। [7] U जपे। [8] A कृतमा°। [9] A घटी शक्ततरा। [10] A° नी। [11] D °रन्तिका। [12] D °र°। [13] D तु। [14] D प्य। [15] D या। [16] U °र्शो। [17] B परिकीर्तिता। [18] D °वृ°। [19] B यामा। [20] D या। [21] B समा तु स्यात्तदत्र। [22] U °या। [23] A °दि°। [24] D °दर्श्यते। [25] U तृतीया। [26] D चाष्ट°। [27] U शुक्लाष्टमी। [28] D कला।

कुलवारयुता चेत्स्यात् शक्तिपूजाविधौ तिथिः ।
सा सोमवारसंयुक्ता शिवपूजाविधौ तिथिः ॥ ४५ ॥
शिवं शक्तिं भैरवं च रमां चैव[1] प्रपूजयेत् ।
विशेषफलदा प्रोक्ता रात्रिपूजा महेश्वरि ॥ ४६ ॥
प्रदोषस्त्रिविधो देवि तत्क्रमं शृणु सादरम् ।
सप्तमी शाङ्करीसन्धौ प्रदोषो रजनीमुखे ॥ ४७ ॥
प्रदोषो रजनीवक्त्रे द्वादशी च त्रयोदशी ।
तत्सन्धौ च प्रदोषः स्यात् त्रिविधः शनियुग्वरः ॥ ४८ ॥
चतुर्दश्यपि च परा पूर्वार्द्धे[2] रात्रिसंयुता ।
सप्तमी सोमसंयुक्ता श्रावणे कृष्णपक्षजा ॥ ४९ ॥
अष्टमी रात्रिसंविद्धा सा तिथिः शिवशक्तिजा ।
शिवं प्रदोषे सम्पूज्य शक्तिं रात्रौ प्रपूजयेत् ॥ ५० ॥
अष्टमी रससंव्यापी द्वितीया दृश्यते यदि ।
भौमयुक्ता पूर्वयोगाद् भौमाक्ता चाष्टमी तु या ॥ ५१ ॥
सा तिथिः सर्वकार्याणां कर्त्री प्रोक्ता महेश्वरि ।
अष्टम्यां अष्टमीपूजा नवम्यां  नवमी तथा ॥ ५२ ॥
योगे पूजा शुभा देवि पूजा प्रोक्ता महेश्वरि ।
नवम्यां मङ्गलदिने पूर्ववेधे प्रपूजयेत् ॥ ५३ ॥
अष्टमी नवमीसन्धौ पूजनात्फलदायिनी ।
एकोद्दिष्टं तु पूर्वाह्णे त्वपराह्णे तु पार्वणम्[3] ॥ ५४ ॥
समयोगे परा ग्राह्या पञ्चधा भागयोगतः ।
प्रथमं प्रहरं त्यक्त्वा तृतीय[4]प्रहरावधि ॥ ५५ ॥
प्रजपेद् यामयुग्मेन शिवां भक्त[5]वरप्रदाम् ।
प्रथमप्रहरो[6] देवि शिवस्य परिकीर्तितः ॥ ५६ ॥
परश्चम्भोर्द्वितीयस्तु तृतीयः शक्तिगोचरः ।
रुद्रविष्णुब्रह्मणस्तु[7] मुहूर्ता[8]स्त्रयश्चतुर्थकः ॥ ५७ ॥
शिवशक्त्यभिधो योगो मध्ययामयुगे भवेत् ।
तत्र यद्यत्कृतं कर्म तदनन्तफलप्रदम् ॥ ५८ ॥
मध्ययामद्वये देवि पूजयेद्धोमयेज्जपेत् ।
तर्पयेद्भोजयेच्छक्तिं सर्वसिद्धिं स विन्दति ॥ ५९ ॥
सन्ध्यायां शम्भुपूजा स्यान्मध्यरात्रौ तु कालिकी[9] ।
प्रथमप्रहरे देवि पूजासाधनमाचरेत्[10] ॥ ६० ॥

1 D रात्रावेव । 2 U °र्धे । 3 B °णा । 4 U तार्तीय° । 5 U °क्ति° । 6 B °रे ।
7 U °श्च । 8 D °मुहूर्त्ता° । 9 DU °कां । 10 D °रभेत्° ।

द्वितीयप्रहरे पूज्य द्विविधं जपमाचरेत् ।
तदन्ते योगकृच्छक्तौ[1] शिवतुल्यो नरो भवेत् ॥ ६१ ॥
महानिशा स्थिता[2] नित्या[3] तिथिपूजाविधौ स्मृता ।
अमाभौमसमायुक्ता पूर्ववि[4]द्धा तु या तिथिः ॥ ६२ ॥
सा तिथिर्बलिदानादौ साधने प्रथमा स्मृता ।
योपवासे तिथिर्देवि सा तिथिः शिवपूजने ॥ ६३ ॥
कृष्णाष्टम्यां दिवा भुक्त्वा रात्रौ भुक्त्वा च पार्वति ।
एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ॥ ६४ ॥
पूर्वेद्युरपरे[5]द्युश्च या तिथिः सम[6]रूपिणी ।
पूर्वोपोषणकार्यार्थं[7] परान्ते भोजनं चरेत् ॥ ६५ ॥
श्राद्धे[8] चापि पराह्णाख्या तिथिश्चो[9]क्ता महेश्वरि ।
मातृश्राद्धं तु पूर्वाह्णे पितृ[10]श्राद्धं पराह्णिकम् ॥ ६६ ॥
प्रथमे चा[11]पराह्णाख्या द्वितीये कामनाह्निका ।
हेमन्ते पूर्वाह्णाख्या च क्रमेण पार्वणं भवेत् ॥ ६७ ॥
ज्येष्ठपूर्वाह्णयोगाख्या क्रमेण पूर्ववत्तिथौ ।
पार्वणं भैरवमते कौलश्राद्धं[12] प्रकीर्तितम् ॥ ६८ ॥
कलानाड्यु[13]त्तरं देवि तिथिरस्ति यदा शिवे ।
परैव श्राद्धकालादौ तिथिः प्रोक्ता महेश्वरि ॥ ६९ ॥
सूर्योदयमनुव्याप्य तिथि[14] व्याप्ता तिथिस्तु या ।
सा तिथिः स्नानदानादौ तीर्थश्राद्धे तु केवला[15] ॥ ७० ॥
अष्टादशघटीभूता तिथिरस्ति यदा शिवे ।
तदन्ते[16] सा यदा देवि परैव श्राद्धकर्मणि ॥ ७१ ॥
चैत्रीया नवमी शुक्ला[17] मध्याह्नव्यापिनी तिथिः ।
अष्टमी नवमीयुक्ता[18] शुक्लपक्षे तिथिः शुभा ॥ ७२ ॥
कौलश्राद्धं तत्र कुर्यात्कुलपूजार्थमेव च ।
तदुद्देशेन संकल्पस्त्वधिवासादिकं भवेत् ॥ ७३ ॥
तत्तिथौ स्नानदानादि कार्यं[19] भवति पार्वति ।
अमा च पौर्णिमा देवि परास्नानविधौ तिथिः ॥ ७४ ॥
चतुर्दशीं समारभ्य नवम्यन्तं महेश्वरि ।
रात्रिविद्धा तिथिः सर्वा शुभदा परमेश्वरि ॥ ७५ ॥

1 B °क्तः । 2 D स्मृता । 3 B सूत्र । 4 U सि° । 5 D परमे° । 6 D शिव° । 7 U °र्थं । 8 U अर्घे । 9 U प्रो° । 10 D° तुः । 11 B °मश्वा° । 12 D °द्धे । 13 D °मु° । 14 D तीर्थे । 15 D कारणं । 16 D °त्र । 17 B भुक्ता । 18 U शुक्ला; D स्याद्वा । 19 B कथं ।

तथैव ग्रहणे देवि तिथिः परैव [1]कीर्तिता ।
चक्षुषा दर्शनं राहोर्यत्तद्ग्रहणमुच्यते ॥ ७६ ॥

चक्षुषा द[2]र्शनं राहोर्मुक्तिर्ग्रहणमोचने[3] ।
पुरश्चरणकार्ये तु सूर्यचन्द्रग्रहस्त्वयम् ॥ ७७ ॥

इति संक्षेपतः प्रोक्तं विशेषं शृणु सादरम् ।
देवश्च[4]न्द्रो यस्य भवेत् स देवश्चन्द्र ईरितः[5] ॥ ७८ ॥

देवस्य चन्द्र इत्युक्तः सदेवश्चन्द्र इत्यपि ।
वाक्येऽपि ध्वनिसादृश्याद्दे[6]वि चन्द्रेषु[7] मुख्यता ॥ ७९ ॥

चक्षुषा दर्शनं राहोरित्यत्र मुख्यता तथा ।
चन्द्रोदयव्यापिनी तु स्नाने[8] स्यात्कालरात्रिका ॥ ८० ॥

देवतादर्शनार्थञ्च मध्ययामद्वया तिथिः[9] ।
प्रथमं प्रहरं त्यक्त्वा तृतीयप्रहरावधि ॥ ८१ ॥

आद्यः[10] शैवा[11]भिधो योगो द्वितीया शाक्तसंज्ञिका ।
द्वयं मिलित्वा देवेशि योगः स्वाराज्यवाचकः ॥ ८२ ॥

स्वाराज्ययोगो देवेशि यत्किञ्चिज्जगतीगतम्[12] ।
स्वाराज्ययोगे देवेशि क्रीडन्ति कालिकागणाः ॥ ८३ ॥

तत्र यद्यत्कृतं देवि शृणोति[13] देवता स्वयम् ।
न वीरसाधनैर्देवि न शक्तिपूजनादिभिः ॥ ८४ ॥

स्वयम्भूकुसुमाद्यैर्वा न तथा वरदा भवेत् ।
यथा स्वाराज्ययोगेन क्षणात्सिध्यति पार्वति ॥ ८५ ॥

न धनैर्न तपस्याभिर्न च तीर्थव्रतादिभिः ।
स्वाराज्ययोगमात्रेण देवता वरदा[14] ध्रुवम् ॥ ८६ ॥

स्वयम्भूकुसुमं याति वीरसाधनसिद्धयः ।
क्रूरा पुर[15]स्क्रिया भूयाद् योगः पूर्वं तु सूचितः ॥ ८७ ॥

भाग्येन प्राप्यते नित्यं स एव देवता स्वयम् ।
आद्यस्य घटिकावेदं[16] वर्जयित्वा महेश्वरि ॥ ८८ ॥

द्वितीयस्यां तु नाडीनां[17] चतुष्कं संत्यजेच्छिवे ।
मध्यार्द्धयामयोगोऽयं देवानामपि दुर्लभः ॥ ८९ ॥

कालीयोगाभिधो योगः सर्वयोगोत्तमोत्तमः ।
कुलवारर्क्ष[18]संयोगात्काम[19]वीराभिधो भवेत् ॥ ९० ॥

1 U °रेव प्र° । 2 तुष्णाद्द° । 3 U मुच्यते । 4 U च° । 5 D श्चन्द्रदैवतः ।
6 U ध्वनिसादृश्यतो दे° । 7 U चन्द्रदेवेषु । 8 D सा न । 9 D °वधि । 10 D ग्राह्यः ।
11 D शिवा° । 12 U °तले । 13 U °ण्वन्ति । 14 U सिध्यति । 15 D तप° ।
16 U देव । 17 B तिथीनां । 18 B °क्षा° । 19 U °ळ° ।

पूर्वयोगात्क लवीरो द्वितीयः काममोह[1]नः ।
तत्र यद्यत्कृतं देवि देवतादर्शनप्रदम् ॥ ९१ ॥
तद्योगे परमेशानि[2] कुमारीं तु सुलक्षणाम् ।
चारुनेत्रां सुचतुरां बालां गानपरायणाम् ॥ ९२ ॥
सिंहासने तु[4] संस्थाप्य देवी[5]वत् परिपूजयेत् ।
ध्यात्वा कामकलां तत्र स्वस्मिन्नपि महेश्वरि ॥ ९३ ॥
सर्वसिद्धीश्वरो भूयाद्देवताभावतत्परः ।
तया यदुक्तं देवेशि तदेव भवति ध्रुवम् ॥ ९४ ॥
विभाव्य परितो[6] यन्त्रं यन्त्रबिन्दौ कुमारिकाम् ।
सम्पूजयेन्महेशानि ततश्चावरणं भजेत् ॥ ९५ ॥
ध्यानोक्तदेवताभावस्तत्र चेद्भाग्ययोगतः ।
तदै[7]व सिद्धिमाप्नोति सा देवी भवति ध्रुवम् ॥ ९६ ॥
एतस्याभ्यासमात्रेण पृथिवीसत्त्वमाभयात् ।
विविधां सुन्दरीं पृथ्वीं य[8]त्रैव कर्तुमिच्छति[9] ॥ ९७ ॥
तत्रैव क्षणमात्रेण सम्भवन्ति महेश्वरि ।
सा पृथ्वी बहुभारार्ता क्लिश्यमाना पुराऽभवत् ॥ ९८ ॥
तदा स्तम्भ[10]चतुष्कं च दत्तं[11] श्रीकालिकाम्बया ।
धर्मो ज्ञानं च वैराग्यमैश्वर्यं तदनन्तरम् ॥ ९९ ॥
धर्मस्तम्भो भवेदाद्यो वृषरूपः सुचारुधृक् ।
चतुष्पदसमायुक्तः पृथिवीं पा[12]ति भेदतः ॥ १०० ॥
रक्तवर्णः सुन्दरस्तु धर्मस्तम्भः प्रकीर्तितः ।
ज्ञानस्तम्भो द्वितीयः स्यात्सर्वं यत्करगं क्षणात् ॥ १०१ ॥
ब्रह्माण्डगोलकं ज्ञानं चिद्घनानन्दतत्परम् ।
स स्तम्भस्तु द्वितीयः स्यात्तद्रूपं शृणु पार्वति ॥ १०२ ॥
सिंह[13]रूपः कृष्णवर्णश्छटया श्वेतया युतः ।
पुच्छं च मस्तके प्रोक्तं कटिः सूक्ष्मा महेश्वरि ॥ १०३ ॥
वैराग्यं तु तृतीयं स्याद् हंसरूपं[14] पुरातनम् ।
निर्वाणदीक्षया युक्तं चतुश्चरणदीक्षया ॥ १०४ ॥
सर्वं निर्मुक्तया शक्त्या युक्तं वैराग्यमुच्यते ।
ऐश्वर्यं च चतुर्थं स्याद्गजरूपं पुरातनम् ॥ १०५ ॥
गजसिद्धिबलेनैव पूर्वं संसाधितेन च ।
या सिद्धिर्गजरूपेऽथ साररूपा महोज्ज्वला ॥ १०६ ॥

1 B °च° । 2 U °गं तु महेशानि । 3 B° वेशं । 4 U °षु । 5 D °व° । 6 B °रतो
7 D °दे° । 8 U त° । 9 U °सि । 10 B °म्ब° । 11 B °त्ता । 12 D जा°; U या°
13 B शिव° । 14 B बृहद्रूपं ।

यत्रैव दृश्यते देवि तत्रैव गजनाथता ।
वृक्षाणां प्रस्तराणाञ्च कीटादीनां[1] च पार्वति ॥ १०७ ॥
तावन्नाथत्वतां देवि यद्दृष्ट्वा जायते सह ।
ऐश्वर्यरूपं कृत्वा तु भाराणां[2] तु चतुष्टयम् ॥ १०८ ॥
नाथसंस्थापिता पृथ्वी चतुरस्रा महोज्वला[3] ।
बीजाङ्कुरन्याययोगादत्र चैते भवन्ति च ॥ १०९ ॥
विष्णुपूर्वं चतुष्कं च चतुर्वेदास्तथैव च ।
अथर्ववेदच्छायया तु चत्वारो गुण[4]राशयः ॥ ११० ॥
वाक्चतुष्कं च राजादि[5]चतुष्कं च त्रिकालता ।
महावाक् सिद्धिरपरा चतुर्थी परमेश्वरि ॥ १११ ॥
आधारानन्तमा[6]रभ्य[7] पृथिवीशब्दतः शिवे ।
ततस्तु पृथिवी देवी सुधाब्धिस्तत्र तिष्ठति ॥ ११२ ॥
मूलाधारं पीतवर्णं चतुरस्रं महोज्वलम् ।
पृथिव्याभ्यासयोगेन पृथिवी[8]जयमाप्नुयात् ॥ ११३ ॥
पृथिवीं तु जले नीत्वा सुधाम्भोधौ[9] निधाय च ।
स्वाधिष्ठाने षट्दले तु सुधाम्भोधिः प्रतिष्ठति ॥ ११४ ॥
जलं वह्नौ ततो नीत्वा पञ्च[10]वायौ प्रवेशयेत् ।
तमा[11]काशे समानीय चो[12]न्मन्यां लयमाचरेत् ॥ ११५ ॥
हंसपीठ ततो नीत्वा परशम्भौ निवेदयेत् ।
शिवस्वरूपो भवति शिवता तस्य जायते ॥ ११६ ॥
[13]एवं योगः समाख्यातः किमन्यच्छ्रोतुमिच्छसि ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यं परमं शुभम् ॥ ११७ ॥

**श्रीशिव उवाच ।**

किं तद्रहस्यं देवेशि संशयं वद सत्वरम् ।

**श्रीदेव्युवाच ।**

शिवशम्भो प्राणनाथ सर्वाकर्षणकारक ॥ ११८ ॥
वाञ्छा[14]कल्पलतानाम्नीं बालां मे वद सत्वरम् ।

**श्रीशिव उवाच ।**

वाञ्छा[15]कल्पलतायोगः सर्वयोगोत्तमोत्तमः ॥ ११९ ॥

1 B कीर्तिदानां । 2 B मारणां; D भावनां । 3 D महाचला । 4 B °ह° । 5 D गजाग्रा°; B जाग्रा° । 6 B तत्तदा° । 7 D °लभ्य । 8 U °व्यां । 9 D °सिन्धौ । 10 D तं च । 11 B नभा° । 12 B चि° । 13 A resumes at this point. 14 U दीक्षा° । 15 U °ला° ।

पूर्वां कुमारी[1]मानीय नखाग्रान्तां प्रवीक्षयेत् ।
शतं भाले शतं केशे शतं सिन्दूरमण्डले ॥ १२० ॥

शतद्वयं * * शतं * * शतं * * ।
शतं नेत्रे शतं नाभौ[2] सहस्रेण पुरस्क्रिया ॥ १२१ ॥

एवं क्रमेण देवेशि वाञ्छा[3]कल्पलता भवेत् ।
शतं पादे शतं नाभौ रोमावल्यां शतं भवेत् ॥ १२२ ॥

शतं हृदि शतं नेत्रे शतमात्रं[4] कपोलयो: ।
शतं भाले च शतकं वदने प्रजपेच्छिवे ॥ १२३ ॥

स्पृश्यावलोक्य प्रजपेत् त्रैलोक्यविजयी भवेत् ।
राजा भवति देवेशि कामिनीसिद्धिमाप्नुयात् ॥ १२४ ॥

वश्याकर्षणसम्मोहो वय:स्तम्भरसायनम् ।
रसं खड्गं पादुकाञ्च वे[5]तालं यक्षिणीगणम्[6] ॥ १२५ ॥

खेचरी परकायं[7] च मृतसंजीवनी तथा ।
गोपनीयं गोपनीयं किमन्यच्छ्रोतुमिच्छसि ॥ १२६ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे योगकथनं नामैकषष्टिः पटलः ।

[1] D पूर्वाब्दां नारी° । [2] U मौलौ । [3] A विद्या । [4] A °मन्त्र । [5] B वै° ।
[6] A °णौ । [7] B °यां ।

## द्विषष्टिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।

**श्रीशिव उवाच ।**

रहस्यातिरहस्यं च गोप्याद्गोप्यं परात्परम् ॥ १ ॥

ब्रह्मराजाभिधं योगं सर्वयोगोत्तमोत्तमम् ।
कथ्यते परमेशानि श्रृणु सावहिता भव ॥ २ ॥

सुन्दरीं चञ्चलां बालां चार्वङ्गीं शोभनेक्षणाम् ।
चतुरां कामलीलादिज्ञानयुक्तां विनोदिनीम् ॥ ३ ॥

प्रथमाब्दं समारभ्य नववर्षान्तमीश्वरि ।
नवदुर्गेति विख्याता तदनन्तरगां श्रृणु ॥ ४ ॥

[1]नववर्षोत्तरं देवि कामवर्षान्तमेव च ।
तावद्बालेति विख्याता सर्वसिद्धिपरा मता ॥ ५ ॥

त्रयोदशं समारभ्य षोडशान्तं महेश्वरि ।
तावत् श्यामेति विख्याता श्यामा षोडशवार्षिकी ॥ ६ ॥

षोडशोर्ध्वं विंशत्यन्तं[2] तरुणी परिकीर्त्तिता ।
विंशोत्तरं त्रिंशदन्तं[3] महातारुण्यकौमुदी ॥ ७ ॥

चत्वारिंशोत्तरं देवि प्रोक्ता गतवयाभिधा ।
जाप्याष्ट[4]कसमायुक्तां कुलाकुलसमुद्भवाम् ॥ ८ ॥

पञ्चक्रम[5]समुद्भूतां षट्त्रिंशजातिगोचराम्[6] ।
पञ्चाशत्तीर्थसम्भूतां बालामानीय पार्वति ॥ ९ ॥

तां * * * कृत्वा[7] वयःसन्धिपरां शिवे ।
निष्कलां समनुज्ञात्वा न्यासजालं प्रविन्यसेत् ॥ १० ॥

न्यासान् विधाय तद्देहे कामसोमशिवात्मकान्[8] ।
प्रसूनमञ्चे संस्थाप्य * * * * * * ॥ ११ ॥

वस्त्रालङ्करणं दत्त्वा * * देवीं प्रपूजयेत् ।
यन्त्रं विभाव्य परि[9]तो मध्यबिन्दौ महेश्वरि ॥ १२ ॥

कुमारीं देवतारूपां देवतारूपविग्रहाम् ।
ध्यात्वा सम्पूजयेद्देवीं सर्वावयव[10]संयुताम् ॥ १३ ॥

1 B omits three lines. 2 B °तितं; D °तान्तं । 3 B °कालं; D °ता तं । 4 U °ज्येष्ठ°; D °त्यष्ट° । 5 U °चक्र° । 6 B °गां च वा । 7 B दृष्ट्वा । 8 B °कौ । 9 U °र° । 10 D °वरण° ।

चक्रे वा पूजयेद्देवि सर्वावरणसंयुताम् ।
देवतां पूजयेद्रात्रौ सर्वा[1]वरणसंयुताम् ॥ १४ ॥

सबल्यन्तं च संसाध्य जपध्यानपरायणः ।
ध्यात्वा * * तां देवीं यथाध्यानोक्तविग्रहाम् ॥ १९ ॥

जपं तत्र समाप्यादौ तदुक्तं वा समाचरेत् ।
* * * * * * * * * * * *॥ १६ ॥

त्रिकालज्ञो नरो भूयात्कामं[2] सर्वमयं भवेत् ।
अश्रुतान्यपि शास्त्रानि वेदादीन् पाठयेच्छिवे ॥ १७ ॥

अनधीतगतां विद्यां यां काञ्चिज्जगतीगताम् ।
सर्वं वेत्ति पाठयति नात्र[3] कार्या विचारणा ॥ १८ ॥

तस्याः सर्वाङ्गमालोक्य संस्पृश्य परमेश्वरि ।
तया यदुक्तं देवेशि तदेव कारयेत्प्रिये ॥ १९ ॥

अन्यच्च कुरुते यस्तु तस्य नाशो भविष्यति ।
तां बालां तु समादाय[4] दश[5]वर्षोत्तरां शिवे ॥ २० ॥

प्रसूनमञ्चे संस्थाप्य सर्वसौगन्ध[6]भूषितः ।
सर्वानन्दमयः शान्तः शक्ति * * * * ॥ २१ ॥

शक्तिं स्वाभिमुखीं कृत्वा बालां वा परमेश्वरी ।
* * * * * * प्रजपेत्कालिकाम्बिकाम् ॥ २२ ॥

लक्षमात्रं[7] जपेद्देवि सर्वज्ञः साधको भवेत् ।
कुमार्यश्च शक्तयश्च पूजिताः कोटि[8]कोटिशः ॥ २३ ॥

एका चेत्पूजिता बाला समस्तं पूजितं भवेत् ।
* * वंशसमुद्भूतां समानीय कुमारिकाम् ॥ २४ ॥

सर्वावयवमालोक्य पूजयेन्मूल[9]देवताम् ।
सा[10]नन्दामथ संवीक्ष्य * * परमेश्वरि ॥ २९ ॥

सर्वाङ्गं वीक्ष्य देवेशि स्पृष्ट्वाऽपि परमेश्वरि ।
लक्षं जपेन्महेशानि त्रैलोक्यविजयी[11] कविः ॥ २६ ॥

* * वंशस[12]म्भूतां बालामानीय पार्वति ।
घृणालज्जाविनिर्मुक्तां चञ्चलां * * चारिणीम्[13] ।
नवोत्तरां * * मध्यां प्रसूनमञ्चकेऽर्चयेत् ॥ २७ ॥

[1] DU सांगा° । [2] B °व्य । [3] A सर्ववत् पठिता तत्र । [4] U °नीय । [5] B पर°; U नव° । [6] B °साधन° । [7] B °नं । [8] D °यः पूज्या संस्पृश्य । [9] B °त्पर° । [10] AB स्त्रा° । [11] B °यो । [12] B °मु° । [13] B ताडिनीं; U पीडितां ।

* * * * * * जपेत् सदा ।
* * * * * * * * * * ॥ २८ ॥

* * * * * * * * * * ।
महाश्रुतिधरो भूयादिच्छासिद्धिं लभे[1] तु सः[2] ॥ २९ ॥

* * हृदम्भोजे जपात् कालीसमः क्षितौ ।
इति प्रोक्तं रहस्यञ्च किमन्यच्छ्रोतुमिच्छसि ॥ ३० ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे ब्रह्मराजयोगो नाम द्विषष्टिः पटलः ।

1 A भवे° । 2 U °क्षर; D °त्सदा

## त्रयःषष्टिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश[1] श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।
यन्न कस्यापि सम्प्रोक्तं तन्मे कथय साम्प्रतम् ॥ १ ॥

**श्रीशिव उवाच ।**

रहस्ययोगं तं दे[2]वि कथ्यते श्रृणु साम्प्रतम् ।
बालामानीय[3] कौमारीं देवीवत् पूजयेत् प्रिये[4] ॥ २ ॥

* * स्वशिरो दत्त्वा जपात्कालीमयो भवेत् ।
बालामानीय चार्वङ्गीं तस्या दुग्धं प्रपाय[5]येत् ॥ ३ ॥

लक्षं जपेन्महेशानि सिद्धिः[6] स्थिरमयी भवेत् ।
बालामानीय चपलां तस्याः * * * ॥ ४ ॥

लक्षं जपेन्महेशानि कामरूपत्वमाप्नुयात् ।
बालामानीय चपलां तस्यास्तोषादिकं चरेत् ॥ ५ ॥

लक्षमात्रं जपेद्देवि त्रैलोक्यविजयी भवेत् ।
बालामानीय ललितां[7] तया वार्तां समाचरन्[8] ॥ ६ ॥

लक्षं जपेन्महेशानि काव्यकर्ता भवेद् ध्रुवम् ।
कुमारीपूजनं स्वर्गे बालापूजा तु मानवे ॥ ७ ॥

शक्तिपूजा च पाताले पाता[9]ले त्रिविधा गतिः ।
वासुकिः स्वर्गलोकेऽस्ति कर्कोटो मानवे भवेत् ॥ ८ ॥

शेषः[10] पाताललोकेऽपि रहस्यं गोप्यतां शिवे ।
इति संक्षेपतः प्रोक्तं कुलदर्भं श्रृणु प्रिये ॥ ९ ॥

त्रिविधः कुलदर्भोऽपि सूचितः[11] कालशम्भुना ।
कथ्यते तत्र देवेशि गोपनीयं कुलेश्वरि ॥ १० ॥

कुलचक्रोपरि गताः कुलदर्भाः सुखे[12]च्छदाः ।
कर्षार्थं कर्षमंत्रं[13] वा पवित्राय प्रकल्पयेत् ॥ ११ ॥

तर्जन्यां रजतं धार्यं स्वर्णं धार्यमनामयोः[14] ।
एष एव कुशः प्रोक्तो न कुशो वनसम्भवः ॥ १२ ॥

कूर्चानां पञ्चकं लिख्य परितो वृत[15]मेखलाम् ।
शूलं कपालमालि[16]ख्य ब्रह्मकूर्चः प्रकीर्तितः ॥ १३ ॥

[1] B देवो वा । [2] A तद्दे° । [3] A °मार्तव° । [4] AU च्छिवे । [5] U °दाप° ।
[6] A °द्ध° । [7] B °लनां । [8] B ° रेत् । [9] B प्रता°; A वाता° । [10] U शङ्खः ।
[11] B स नित्यः ; A गदितः ; D कथितः । [12] U खा° । [13] B °मात्रं । [14] D °या ।
[15] D गुरु° । [16] U तल्लि°; D संलि° ।

एतस्य धारणादेव वाञ्छाकार्यमवाप्नुयात् ।
त्रिधा दर्भः प्रकथितः कालिकागम[1]वर्त्मनि[2] ॥ १४ ॥

गोपनीयमिदं भद्रे सारात्सारतरं महत् ।
कपालं च तथा खड्गं स्त्रीर्बीजानि च पञ्च च[3] ॥ १५ ॥

अना[4]मायामिदं धार्यं स्वर्णवर्णं शुभावहम् ।
कूर्चाद्यं[5] कालिका तारा सप्ततारायमेव च ॥ १६ ॥

सर्वबीजा[6]द्यरूपं[7] च कुलदर्भं वि[8]धारयेत् ।
विद्याश्रीःकीर्तिजननं[9] शक्तिदं[10] सर्वसिद्धिदम् ॥ १७ ॥

सर्वसौन्दर्यदं भद्रे वाञ्छा[11]सिद्धिप्रदर्शकम् ।
इति संक्षेपतः प्रोक्तं ध्यानभेदक्रमं शृणु ॥ १८ ॥

खड्गमुण्डवराभीतिर्मालामार्गेण कारयेत् ।
[12]खड्गमुण्डवराभीत्यः पंक्तिमार्गेण धारयेत् ॥ १९ ॥

दक्षहस्तक्रमेणैव खड्गमुण्डवराभयान् ।
भावयेत्परमेशानि ध्यानमेवं त्रिधा भवेत् ॥ २० ॥

इति संक्षेपतः प्रोक्तं मुद्राभेदान् शृणु प्रिये ।
मुद्राः पञ्चविधाः प्रोक्तास्तानहं[13] वच्मि संशृणु ॥ २१ ॥

प्रसून[14]मध्ये संलिख्य[15] कुर्चानां तु त्रयोदश ।
त्रैलोक्यविजयी[16] मुद्रा चतुरस्रद्वये शिवे ॥ २२ ॥

मध्ये त्रीं[17] परितो ह्रीं च स्पर्शाद्दारिद्र्यनाशिनी ।
अङ्क[18]मुद्रा बीजमुद्रा बीजकाख्या तथा परा ॥ २३ ॥

यन्त्ररूपा नामरूपा[19] मुद्राः पञ्चविधाः स्मृताः ।
रामवानरलापाख्यस्तथा लक्ष्मणवारणौ[20] ॥ २४ ॥

एतास्त्वङ्काभिधा मुद्रा साम्राज्याख्या महोत्तमा ।
त्रिकोणवृत्त[21]वेदत्रिबाणाख्यदलरूपकम् ॥ २५ ॥

षट्दलं च तथा कोणमष्टास्रं कोणरूपकम् ।
दशविद्या बीजरूपा सङ्ख्या तार[22]क्रमेण च ॥ २६ ॥

मूलं वेष्ट्य लिखेन्मुद्रां सर्वसिद्धिप्रदा मता ।
त्रिपञ्चसप्ततारस्य शतबीजस्य योगतः ॥ २७ ॥

1 B °र्भं° । 2 A °ना । 3 D पार्वति; A °धा । 4 A °नि° । 5 A °र्च्च 6 B चित्रा°; D स्वर्णजात्ये° । 7 A स्वरूपं; D °वरूप्यं । 8 A °र्भाव° । 9 A कालिकायन्त्रं । 10 A साक्षिदं; U शान्तिदं । 11 D दीक्षा° । 12 B omits this line. 13 U °हो । 14 B °सीद°; U °सीन° । 15 B °प्य । 16 B °यं । 17 B त्रि° । 18 U °म्बा° । 19 U °मयी । 20 B °वारणः । 21 U °णाष्टान्त° । 22 B °वत्° ।

आद्यसम्पुटयोगेन नाममुद्रा भवेच्छिवे ।
बीजस्वरूपमुच्चार्य प्रसीदेति पदद्वयम् ॥ २८ ॥
मुद्रायां[1] विलिखेद्देवि दशविद्याक्रमः स्मृतः ।
बीजस्वरूपञ्च वरं देहियुग्मात्प[2]रा भवेत् ॥ २९ ॥
बीजस्वरूपां[3] जपति भजे वन्देति चोच्चरेत् ।
मुद्रा परा महेशानि देवमात्राविधौ भवेत् ॥ ३० ॥
नामपर्यायभेदेन यथायोगेन योजयेत् ।
सर्वसिद्धिमवाप्नोति कोटिसिद्धीश्वरो भवेत् ॥ ३१ ॥
एतस्य धारणाद्देवि किं तद्यन्न करे स्थितम् ।
इति संक्षेपतः प्रोक्तं त[4]न्मुद्राधारणं शृणु ॥ ३२ ॥
अङ्गुलीयोगभेदेन पादांगुल[5]क्रमेण च ।
रत्नभेदे तथा स्वर्णे कामना पूर्ववद्भवेत् ॥ ३३ ॥
अष्टास्रं चैव पञ्चास्रं वेदास्रं च त्रिकोणकम् ।
वृत्ताष्टदलकं[6] देवि वृत्तभूपुरमेव च ॥ ३४ ॥
यन्त्राण्येतानि देवेशि कोष्ठ[7]यन्त्राणि पूर्ववत् ।
अष्टास्रमालिखेद्यन्त्रं समरेखं च सुन्दरम् ॥ ३५ ॥
प्रसिद्धप्राच्यां[8] प्रणवं कामाख्यं परिवर्तते ।
तदधो वारुणं बीजं श्रीबीजं च ततोपरि ॥ ३६ ॥
अमृतं यन्त्रमेतद्धि त्रितारं वारुणेश्वरम् ।
वेदपत्रे[9] लिखेद्बीजं ब[10]टुकाख्यां तु दीपिनीम् ॥ ३७ ॥
श्री[11]सिद्धीश्वरनामानं पादमूले प्रधार[12]येत् ।
एतस्य धारणाद्देवि[13] सर्वरोगनिवारणम्[14] ॥ ३८ ॥
कल्पा[15]द्यौषधयो यद्वत् तद्वद्यन्त्राणि पादयोः[16] ।
कलाष्टादशविंशच्च द्वाविंशच्च यथाक्रमात् ॥ ३९ ॥
सहस्रत्रिनन्दकोष्ठे कलाकोष्ठे च वा[17] प्रिये ।
प्रस्तार[18]क्रमयोगेन चाङ्क[19]यन्त्राणि पादयोः ॥ ४० ॥
सर्वदीक्षाप्रसिध्यर्थं त्रैलोक्यविजयाय च ।
कोटिसिद्धीश्वरार्थन्तु पादयोर्धारणं मतम् ॥ ४१ ॥
प्रवाले वश्यसिद्ध्यर्थं वैडूर्ये शत्रुनाशनम्[20] ।
मुक्तायां कामिनीप्राप्तिरिन्द्रनीले जयः स्मृतः[21] ॥ ४२ ॥

1 B °स्यां । 2 D °ग्मप° । 3 U °पं । 4 B य° । 5 B पद्करे । 6 B वृत्तपद्दलकं । 7 D °ष्ठे । 8 U °च्य । 9 D वेदाद्दण्डे । 10 U क° । 11 DU अ° । 12 U °दाप° । 13 BD °देव । 14 B °रिणी । 15 D वन्या° । 16 D यन्त्राणि पादयोस्तथा । 17 U नवा; D वरा । 18 D अष्टार° । 19 B लोक°; U वाक्° । 20 B तापनं । 21 B श्रुतः ।

गारुत्मते च गोमेदे हीरके राज्यसिद्धयः ।
कुरुविन्दे पुष्परागे पद्मरागे च रासके ॥ ४३ ॥

स्पर्शरत्ने च माणिक्ये सर्वरत्नेऽपि पार्वति ।
चिन्तामणौ च परिसे पृथिवीसिद्धिरेव च ॥ ४४ ॥

दारिद्र्यनाशनार्थं च[1] हारितं धारयेच्छिवे ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ४५ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे मुद्राविवरणं[2] नाम त्रयःषष्टिः पटलः ।

[1] B तु । [2] B पादमुद्रा ।

# चतुःषष्टिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।

**श्रीशिव उवाच ।**

यन्न कस्यचिदाख्यातं तदेव कथ्यते श्रृणु ॥ १ ॥

दग्धं[1] च स्फुटितं नष्टं यद्वा चौरेण संहृतम्[2] ।
विदीर्णं घृष्ट[3]रेखं च तदुपायं श्रृणु प्रिये ॥ २ ॥

उपोष्य रजनीमेकां हविष्याशी जितेन्द्रियः ।
लक्षमात्रं जपेन्मन्त्रं[4] सम्प्रदायानुसारतः ॥ ३ ॥

दशाष्टपञ्च[5]योगेन सद्भक्त्या गुरुतोषणम् ।
ब्राह्मणान्भोजयेद्यत्नात् कुमारीं तु सुवासिनीम् ॥ ४ ॥

शक्तिपूजा ततः कार्या कुर्यादष्टाष्टकं बुधः ।
पंचपंचककं वापि कालीतारानुसारतः ॥ ५ ॥

अथवा लुप्तचिन्हञ्च[6] स्फुटितादिविदूषितम् ।
भग्नं नष्टं[7] यः करोति तस्य मृत्युस्त्रिमासतः ॥ ६ ॥

तीर्थराजे गिरि[8]गभ समुद्रे सरितां तटे[9] ।
क्षिपेद्यत्नेन देवेशि त्वन्यथा मृत्युमाप्नुयात् ॥ ७ ॥

विद्यामात्रे त्विदं कार्यं विशेषं श्रृणु सादरम् ।
लिङ्गबाणे नर्म्मदोत्थे यवयुग्मं न दूष्यति ॥ ८ ॥

शाले कायादितो भग्ने तदा लिङ्गं न दूष्यति ।
शालि[10]ग्रामशिलामात्रभङ्गे मृत्युकरो भवेत् ॥ ९ ॥

मूर्तौ पादकराघाते नेत्रादिमस्तके शिवे ।
हृदयाघातमापन्ने सर्वं नश्यति पार्वति ॥ १० ॥

तां मूर्तिं विसृजेद्देवि पुनर्मूर्तिं समाचरेत् ।
महाविद्यावि[11]धौ देवि विशेषं श्रृणु सादरम्[12] ॥ ११ ॥

यत्र[13] देवो गतो देवि तद्देशं तत् स्थलं त्यजेत् ।
प्रायश्चित्तं ततः[14] कृत्वा सुखमाप्नोति साधकः ॥ १२ ॥

बालामानीय कौमारीं चार्वङ्गीं चारुचर्चिताम् ।
प्रसूनमञ्चे संस्थाप्य सांगां सावरणां यजेत् ॥ १३ ॥

[1] B आद्यं; U ह्रासं । [2] U ह्यारितं । [3] D मृत° । [4] D °द्रियां । [5] D °ट्ट° ।
[6] U हेन चेत्; D हंन चेत् । [7] B मनष्टम्भः । [8] B गणैः । [9] B °रे । [10] B °ल° ।
[11] B भि° । [12] D पार्वति । [13] B°श्च । [14] B तु तत् ।

देव्याः स्वरूपं देवेशि तद्वत्तस्याः स्वरूपकम् ।
विभाव्य प्रजपे[1]द्देवि सम्प्रदायानुसारतः ॥ १४ ॥

उपवासं प्रकुर्वीत दिनमेकमतन्द्रितः ।
लक्षमात्रं जपेत्तत्र जपतर्पणभेदतः ॥ १५ ॥

कुमार्यामेव संपूज्य सप्तदी[2]पान् समाचरेत् ।
त्रिशक्तिबाल[3]विद्यादौ दीपराजं समाचरेत् ॥ १६ ॥

दीपाग्रे दीपिनीं जप्त्वा दोषहीनो नरो भवेत् ।
वेदाद्या कमला काली वाग्भवा कमलेश्वरी ॥ १७ ॥

एषा तु दीपिनी विद्या कालिकावशकारिणी ।
सिंदूरेण कृतं[4] यंत्रं मूलेनावेष्टितं ततः ॥ १८ ॥

तत्कोणे कुलुकां[5] लिख्य तत्र दीपं समाचरेत् ।
अष्टगन्धेन केनापि गन्धेन घुसृणेन च ॥ १९ ॥

दिव्यवर्णेन देवेशि तेन सिद्धीश्वरो भवेत् ।
अयं च नित्यदीपो हि त्रिशक्तिविषये मतः ॥ २० ॥

प्रायश्चित्तप्रसङ्गेन कीर्तितः परमेश्वरि ।
दीपे[6] स्वदेवीं सम्पूज्य साङ्गां सावरणां शिवे ॥ २१ ॥

पश्चिमाभिमुखं दीपं पात्रं त्रिपलमात्रकम् ।
सौवर्णं राजतं ताम्रं मार्त्तिक्यं धान्यसम्भवम् ॥ २२ ॥

दीपं कृत्वा प्रयत्नेन एकविंशतितन्तुभिः ।
त्रिपञ्चनवरुद्रैश्च वितस्तिवर्तिकां चरेत् ॥ २३ ॥

गोघृतेन पलाष्टे[7]न आज्यपात्रं समाचरेत् ।
चतुरङ्गुलमुच्छ्रायं[8] सार्धाङ्गुलसमन्वि[9]तम् ॥ २४ ॥

रन्ध्रं[10] गुणाङ्गुलं प्रोक्तं कवचं सप्तधा चरेत् ।
एवं क्रमेण देवेशि सिद्धिमाप्नोति साधकः ॥ २५ ॥

बलिदानं ततः कुर्यात्सात्त्विकादिप्रभेदतः ।
आपदुद्धारकं जप्त्वा दोषहीनो नरो भवेत् ॥ २६ ॥

महाविद्याविधौ प्रोक्तं शैववैष्णवयोः शृणु ।
उपोष्य रजनीमेकामघोरक्षेत्र[11]मात्रकम् ॥ २७ ॥

[1] U पूजये° । [2] BD तत्तद्दी° । [3] D °वन° । [4] B तु तं । [5] D यन्त्रकं ।
[6] D °श्रु । [7] B °शे । [8] B °द्रार्धं । [9] B °भुज° । [10] B ऊर्ध्वं; U वधु° ।
[11] D °राख्याख्य° ।

तद्दशांशं होमकर्म दोषहीनस्ततो भवेत् ।
सुदर्शनं[1] वैष्णवे तु सौरे हंसं जपेच्छिवे ॥ २८ ॥

गाणपे श्रीहरिद्राख्यं जप्त्वा सिद्धीश्वरो भवेत् ।
अन्यथा कुरुते यस्तु तस्य पातो[2] भविष्यति ॥ २९ ॥

[3]अयुतत्रयमिच्छन्ति दिव्यौघाश्चात्र पार्वति ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ३० ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे प्रायश्चित्तनिर्णयो नाम चतुःषष्टिः पटलः[4] ।

[1] U °ने । [2] U °पो । [3] This verse is found in D only. [4] The second Khaṇḍa of D ends here, and the continuation is found in the third Khaṇḍa, though it does not run up to the end.

## पञ्चषष्टिः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।

**श्रीशिव उवाच ।**

यन्त्रं नष्टं च स्फुटितं तज्जपः[1] कथ्यते शृणु ॥ १ ॥
कुमारीं च समानीय चार्वङ्गीं चारुहासिनीम् ।
प्रसूनपीठे संस्थाप्य न्यासजालं प्रविन्यसेत् ॥ २ ॥
पात्रासादनमासाद्य तां बालां[2] पूजयेत्ततः ।
नवोत्तरं समारभ्य कामवर्णान्तकं शिवे ॥ ३ ॥
तावद्बालेति गदिता ताराकालीसमा कलौ ।
तां सम्पूज्य महेशानि दोषमुक्तो नरो भवेत् ॥ ४ ॥
मूलाधारान्मस्तकान्तं समालोक्य विभाव्य च ।
ध्यानोक्तदेवतां कृत्वा[3] साङ्गां सपरिवारकाम् ॥ ५ ॥
नवतिर्भोजयेद्देवि साङ्गां सावरणां शिवे ।
स्वदेवीवच्च सम्पूज्य सबल्यन्तं महेश्वरि ॥ ६ ॥
अङ्गं षडङ्गं सम्पूज्य मस्तके गुरुपूजनम् ।
सर्वा[4]वृत्तिं च सर्वाङ्गे मू[5]लदेवीं त्रिपत्रके[6] ॥ ७ ॥
सम्पूज्य परमेशानि रत्नाभरणविस्तरैः ।
ग्रामैर्वस्त्रैर्भोजनाद्यैः लेह्यपेयादिभिः शिवे ॥ ८ ॥
सम्पूजयेन्महेशानि देवताभावतत्परः ।
तया यदुक्तं देवेशि तदेव वरदानकम् ॥ ९ ॥
सा तत्र वरदा चेत्स्या[7]द्देवता वरदा ध्रुवम् ।
तस्या[8] देहे वसेद्देवि नात्र कार्या विचारणा ॥ १० ॥
अविकारेण मनसा पूजयेन्निजदेववत्[9] ।
सर्वाश्चैव महाविद्यास्तत्क्षणात्[10] शक्तिदेहगाः ॥ ११ ॥
सा चेत् क्षुब्धा[11] यदा भूयाद्देवता क्षोभमाप्नुयात् ।
एवं क्रमेण देवेशि सम्पूज्य निजदेवताम् ॥ १२ ॥
यंत्रदोष[12]विनिर्मुक्तः पुनर्यन्त्रं च संग्रहेत् ।
उक्तसंस्कारमासाद्य स्वगुरूक्तेन[13] वर्त्मना ॥ १३ ॥
एकतोलं द्वितोलं वा त्रितोलं पञ्चतोलकम् ।
रसतोलं वेदतोलं सप्ताष्टतोलकं यथा ॥ १४ ॥

1 U जातयः । 2 U ताम्बूलान् । 3 D ध्यात्वा । 4 D °र्पा° । 5 U शू° । 6 B त्रियन्त्रकं । 7 B तत्त्वे । 8 B °स्य । 9 DU °देवतां । 10 B त्तदा चं । 11 B कुद्धा । 12 B °षो । 13 U गुरुवक्त्रेण ।

दशतोलं सूर्यतोलं कलाभुवनतोलकम् ।
वेद[1]तोलं चतुःषष्टितोलकं शत[2]तोलकम् ॥ १९ ॥

यथा मनोज्ञं सुखदं सुरेखं पीठमुत्तमम् ।
ऊर्ध्वरेखं भूमिरेखं मेरुकैलाससन्निभम्[3] ॥ १६ ॥

सबीजं[4] कारयेद्[5] यन्त्रं बालाहस्तात्तु संग्रहेत् ।
तदभावे गुरोर्हस्ताद् गृहीत्वा पूजयेत्सुखम् ॥ १७ ॥

सत्ये कुमारीपूजोक्ता द्वियुगे बालिका मता ।
कलौ शक्तिस्तु सम्प्रोक्ता * * तु बालिका ॥ १८ ॥

कलौ बालैव स[6]म्प्रोक्ता यन्त्रसिद्धिस्ततो ध्रुवम् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ १९ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे यन्त्रशुद्धिर्नाम पंचषष्टिः पटलः ।

[1] B रस°; U दश° । [2] U दश° । [3] D °सम्भवं । [4] D सर्वं; B एवं ।
[5] B प्रकाशये° । [6] B °रस° ।

## षट्षष्टिः पटलः ।

### श्रीदेव्युवाच

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।

### श्रीशिव उवाच

अथोच्यते महायन्त्रसंस्कारः सर्वसिद्धिदः ॥ १ ॥
शुभेऽह्नि स्नानमाचर्य शुभे लग्ने शुभे क्षणे ।
कृतनित्यक्रियो मन्त्री प्राङ्मुखो वाप्युदङ्मुखः ॥ २ ॥
भूतशुद्ध्यादिकं कृत्वा कल्पोक्तं न्यासमाचरेत् ।
सु[1]वर्णं राजतं ताम्रं श्रेष्ठं मध्यं तथाधमम् ॥ ३ ॥
ताम्रे शतगुणं प्रोक्तं रौप्यं कोटिगुणं भवेत् ।
स्वर्णे चा[2]नन्तफलदं स्फाटिकेऽपि तथा भवेत्[3] ॥ ४ ॥
स्फाटिके वा मरकते नियमो नास्ति मानकम्[4] ।
एकतोलं द्वितोलं वा त्रितोलं वेदतोलकम् ॥ ५ ॥
पञ्चतोलं रस[5]तोलं सप्ताष्टतोलकं तथा ।
साधकस्य मनोज्ञं वा कृत्वा पीठं[6] सुसाधयेत्[7] ॥ ६ ॥
पूर्वोक्तधातुद्रव्यैश्च सुन्दरं सुमनोहरम् ।
ताम्रे द्वादशवर्षाणि धारणे न तु पूज[8]णे ॥ ७ ॥
ताम्रार्घ्ये ताम्रयन्त्रे च देवता सर्वदा स्थिता ।
सुरेखं शुभदं यन्त्रं लेखयित्वा विधानतः ॥ ८ ॥
प्रतिष्ठां च ततः कुर्यात् यथाशास्त्र[9]प्रमाणतः ।
पुण्यक्षेत्रे[10] पुण्यकाले शैलादिविहिते स्थले ॥ ९ ॥
मन्त्री कल्पानुसारेण पूर्वेद्युरधिवासयेत् ।
सायं संकल्प्य विधिवत् घटस्थापनपूर्वकम् ॥ १० ॥
गणेशादीन्समभ्यर्च्य दिक्पालान्परिपूजयेत्[11] ।
[12]मद्यं मांसं तथा मत्स्यं मुद्रां मैथुनमेव च ॥ ११ ॥
यन्त्रसंस्कारकर्मादौ द्रव्यमेतन्मयेरितम् ।
यथाशक्त्युपचाराद्यैः पूजयेन्मूलदेवताम् ॥ १२ ॥
सुगन्धतैलगन्धाद्यैर्द्रव्यैस्तमधिवासयेत् ।
चन्द्रेत्या[13]दि तु मन्त्रेण जपेद्दोषपुरःसरम् ॥ १३ ॥
इत्यधिवासनं[14] कृत्वा संयतो विजितेन्द्रियः ।
प्रातःकृत्यं तु निर्वर्त्य कृत्वा योग[15]स्थले विशेत् ॥ १४ ॥

1 D सौ° । 2 U सुवर्णं° । 3 B स्फाटिकादि तथा समं । 4 B °के । 5 D षट् ; B सप्त° ।
6 U °ठे । 7 U कः । 8 B °र° । 9 U शक्ति° । 10 B यागपक्षे; D शुक्लपक्षे° ।
11 D पूजयेत्ततः । 12 B omits 19 lines. 13 U इत्या° । 14 U °सितं । 15 U कृते यावत् ।

पताकाध्वजसंकीर्णे दिव्यमण्डलमण्डिते ।
वितानचामरच्छत्रपुष्पमालाविराजिते ॥ १५ ॥
मङ्गलाङ्कुरपत्राद्यैः[1] कलशैः परिभूषिते ।
मण्डलं सर्वतोभद्रं[2] रेखा[3]सहस्रसंयुतम् ॥ १६ ॥
सामान्यभद्रं वा देवि वेद्या उपरितो लिखेत्[4] ।
प्राङ्मुखो वाग्यतो भूत्वा सङ्कल्पाभीष्टसिद्धये ॥ १७ ॥
पंच[5]शुद्धिं समाचर्य्य कूर्च[6]मक्षतसंयुतम् ।
संस्थाप्य मण्डले तत्र यजेदाधारशक्तितः ॥ १८ ॥
पीठमन्त्रान् समास्तीर्य स्थापयेत् कलशं बुधः ।
दीक्षाक्रमोक्त[7]विधिनाभिषेककलशं तथा ॥ १९ ॥
पंचगव्यं तथा कुर्यात् शिवमन्त्रैर्विशोधयेत्[8]
तेन सुस्ना[9]पयेन्मन्त्री यन्त्रे वा प्रणवं जपेत् ॥ २० ॥
पञ्चामृतेन हविषा दध्ना च पयसा क्रमात् ।
तत उद्वर्तणं कृत्वा जलेन स्नापयेदपि ॥ २१ ॥
पञ्चगव्यं समानीय तत्र यन्त्रं समाहितः ।
जप्तं क्षिपेत्सुवर्णादि देव[10]मूलपुरःसरम् ॥ २२ ॥
तत उद्धृत्य स्वर्णादि पात्रे संस्थाप्य मन्त्रवित् ।
पञ्चामृतेन तीर्थेन शीतलेन जलेन च ॥ २३ ॥
सहस्रशीर्षामन्त्रेण मूलमन्त्रपुरःसरम् ।
सुस्नाप्य पावमानेन कर्पूरागुरुनीरतः ॥ २४ ॥
सर्वौषधिजलैर्गन्धजलैर्यत्नेन मज्जनम्[11] ।
ततः शुद्धदुकूलेन जलमुत्सार्य साधकः ॥ २५ ॥
परिधाय दुकूले द्वे स्वर्णनिर्मितदोलया ।
मण्डले तं[12] समानीय नृत्यगीतैर्जयस्वनैः ॥ २६ ॥
कुंकुमाद्यैर्विले[13]प्याथ पूज्य सर्वोपचारकैः ।
पीठपूजां ततः कुर्यात् स्वसङ्कल्पोक्तमानतः[14] ॥ २७ ॥
कुशैः कुलीनैर्देवेशि[15] शतमष्टोत्तरं जपेत् ।
प्रणवं यन्त्रराजाय विद्महे पदमुद्धरेत् ॥ २८ ॥
महायन्त्राय श्रीरूपं लिखेत्ततो महीति च ।
तन्नो यन्त्रं प्रचोरूपं दयादेषा प्रकीर्तिता ॥ २९ ॥
इमां यन्त्रस्य गायत्रीं जप्त्वा देवत्वमाप्नुयात् ।
अथेष्टदेवतां ध्यात्वा मुद्रयाऽवा[16]हयेत्ततः ॥ ३० ॥

[1] U °कुरुविन्दादि । [2] D °द्रे । [3] D रक्षा° । [4] D वेद्योपरि विलेखितं । [5] U यव° । [6] U °मं° । [7] U °मेण । [8] U °मन्त्रं विशोधितं । [9] U °खा° । [10] B वेद° । [11] B °ने । [12] B तां । [13] U °लि° । [14] U स्वकल्पोक्तवर्त्मना । [15] B ° र्वा देवि । [16] B °राध° ।

जीवन्यासं ततः कुर्यात् पूजयेदिष्टदेवताम् ।
नृत्यगीतैश्च वादित्रैः पञ्चघोषपुरःसरम् ॥ ३१ ॥
ततो जपेदिष्टमन्त्रं अष्टोत्तरसहस्रकम् ।
कुण्डे वा स्थंडिले मन्त्री हविषा संस्कृतेऽनले ॥ ३२ ॥
यथाविधिविधानेन स्रुचा[1] होमं समाचरेत् ।
ग्रासप्रमाणं चरुकं मूलेनावृत्य मन्त्रवित् ॥ ३३ ॥
घृतस्रुवं ततो दत्त्वा जुहुयादग्निसंमुखे ।
पञ्चविंशतितत्त्वैश्च तत्त्वन्यासपरायणः ॥ ३४ ॥
वरुणं दिक्पतिं चैव दद्यात्पूर्वोदितं बलिम् ।
तत आवृति[2]देवेभ्यो घृतेनाहुतिमाचरेत् ॥ ३५ ॥
तदन्ते देवीमन्त्रेण हुनेदष्टोत्तरं शतम् ।
मातृकायुक्तमन्त्रं तु जपन् जयजयस्वनैः[3] ॥ ३६ ॥
गत्वा होमसमीपे तु दत्त्वा पूर्णाहुतिं ततः ।
इष्टसिध्यै बलिं दद्यात्[4] प्रणमेच्चक्रमुत्तमम् ॥ ३७ ॥
तोषयेत्स्वर्णवस्त्रा[5]द्यैः प्रदद्याद्दक्षिणामपि ।
मकारैः पञ्चभिर्देवि वीर[6]पूजां समाचरेत् ॥ ३८ ॥
शक्तिं कुमारिकां[7] बालां पूजयेत्पञ्चपञ्चकम् ।
कुर्यादष्टाष्टकं वापि कुलद्रव्यसमाक्तकैः ॥ ३९ ॥
त्रैलोक्यनाथो भवति यन्त्र[8]पूजनयोगतः ।
रहस्यातिरहस्यं च मुण्डयन्त्रविशोधनम् ॥ ४० ॥
गोपनीयं गोपनीयं गोपनीयं स्वयोनिवत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ४१ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे द्वितीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे यन्त्रसंस्करणं[9] नाम षट्षष्टिः पटलः ।

1 U °वा° । 2 U °त्ति° । 3 A जपनसत्तरैः । 4 B दत्त्वा । 5 U °मुद्रा° । 6 A रत° । 7 B °कीं । 8 AB परा° । 9 AB °ग्रहणं ।

# सप्तषष्टिः पटलः ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।
मुण्डादिवीरपर्यन्तं संस्कारसाधनं वद ॥ १ ॥

श्रीशिव उवाच

रहस्यातिरहस्यं च न कुत्रापि मयेरितम् ।
तव प्रीत्या महेशानि कथ्यते शृणु साम्प्रतम् ॥ २ ॥

मृद्वासनं भवेदादौ द्वितीयं स्याद्[1]चूडकम् ।
कोमलं च तृतीयं स्यान्मुण्डं प्रोक्तं चतुर्थकम् ॥ ३ ॥

मृतासनं पञ्चमं च षष्ठं वीरासनं मतम् ।
महावीरासनं देवि सप्तमं[2] परिकीर्तितम् ॥ ४ ॥

सप्तानां साधना देवि मालापात्रविशोधने[3] ।
यंत्रसंशोधनस्यैव[4] सर्वं संकथितं मया[5] ॥ ५ ॥

इदानीमासनानां च साधनां शृणु पार्वति ।
अर्वाक् षण्मासतो गर्भच्युतमाहुर्मृदुर्बुधाः ॥ ६ ॥

चूडोपनयनै[6]र्हीनं मृतं वाचूडकं विदुः ।
निवृ[7]त्तचूडको बालो हीनोपनयनः शिवे ॥ ७ ॥

यो मृतः पञ्चमे वर्षे तमेव कोमलं विदुः ।
सामान्यमरणं प्राप्ते प्रोक्तं देवि मृतासनम् ॥ ८ ॥

वीरक्रमेण[8] संजा[9]तं तच्च[10] वीरासनं विदुः ।
आवेशशूलपाशादि महावीरासनं युतम् ॥ ९ ॥

अखण्डाङ्गं शवं देवि सखण्डं मस्तकेन यत् ।
तन्मुण्डं[11] यन्त्रमालादिपात्रकर्मणि कीर्तितम् ॥ १० ॥

शवमानीय देवेशि गर्भजं यदि[12] वा शवम् ।
सप्तमाष्टममासीनं[13] चूडकं वाप्यकोमलम् ॥ ११ ॥

स्थानं संशोध्य यत्नेन वीरवेषो मुदान्वितः ।
ततः संस्कारमाचर्य संस्थाप्य विमले स्थले[14] ॥ १२ ॥

गन्धाष्टकं समादाय प्रोक्षयेत्प्रथमं ततः ।
पञ्चामृतैः पञ्चगव्यैः कोण[15]पञ्चसमन्वितैः ॥ १३ ॥

[1] B °श्चाद्द । [2] A संगमं । [3] B °नं । [4] U °नं देवि । [5] A परं; U पुरा । [6] B °नं । [7] U °वृं° । [8] B कार्येण; A रूपेण । [9] A °पा° । [10] B तं च । [11] B तन्मूल° । [12] A गर्भं तं परि । [13] A सप्ताष्टमसमासीनं; U °मासानां । [14] A °श्वरं । [15] U कर्ण° ।

मूलेन स्थापयेत्तत्र पीठचक्रे धरण्यधः ।
त्रिकोणे[1] बिन्दुमाये[2] च चतुरस्रं त्रिकोणके ॥ १४ ॥
त्रिकोणं तस्य बाह्ये तु पद्ममष्टदलं लिखेत् ।
षोडशारं च तद्बाह्ये त्रिवृत्ते[3] त्रिगुणान्वितम् ॥ १५ ॥
मूलदेवीं च तन्मध्ये मूलेन परिपूजयेत् ।
वृत्तं[4] च त्रिगुणं चैव आदिमाद्येन यो[5]जयेत् ॥ १६ ॥
पद्मां वा[6] कमलां तत्र वर्णादौ[7] सर्वकर्मसु ।
वह्नेर्दशकलां तत्र कोणे चाष्टदलं तथा ॥ १७ ॥
षोडशारे त्रिवृत्ते च[8] कलां सोमस्य पूजयेत् ।
तत्रैव स्थापयेद्वीरं मृद्वाख्यं वा प्रयत्नतः ॥ १८ ॥
स्वयं तु[9] विलिखेत्तत्र साधारशक्तिपूर्वकम् ।
सुधासिन्धुर्मणिद्वीपं चिंतामणिगृहं तथा ॥ १९ ॥
श्मशानपारिजातं च तन्मूले शववेदिकाम् ।
धर्मो ज्ञानं च वैराग्यं ऐश्वर्यं तदनन्तरम् ॥ २० ॥
अधर्मादि ततो मन्त्राः पाणिपादे च युग्मकम् ।
अकारादि क्षकारान्तं मातृकान्याससरूपकम् ॥ २१ ॥
तस्थानं[10] पूजयेन्मन्त्री हृदि न्यासादि पूजयेत् ।
करन्यासं ततो मन्त्री कराभ्यां पूजयेत्ततः ॥ २२ ॥
अधोमुखं तु तं कृत्वा तन्मुखे म[11]धुरं वदेत्[12] ।
हे वीर परमानन्द देविपर्यंक शंकर ॥ २३ ॥
अष्टसिद्धिं च मे देहि मम शांतिं सदा कुरु ।
एतद् ब्रूहि च वीरेन्द्र सुवर्णं च मुखे[13] क्षिपेत् ॥ २४ ॥
एलालवंगजाती च फलताम्बूलसंयुतम् ।
खदिरार्द्रकगुडं च[14] कर्पूरं[15] रक्ततंतुना ॥ २५ ॥
मूलेन[16] भावयेत्तत्र जुटिकां दृढमुष्टिकाम् ।
अर्केन्दु[17]सितवाताल[18]निर्मितां दीपवर्तिकाम्[19] ॥ २६ ॥
निमंत्रयेत्ततः शाक्तः सप्तवाराण्यनुक्रमात् ।
चंदनागुरुपुष्पाद्यैर्मूर्ध्नि[20] देवीं प्रपूजयेत् ॥ २७ ॥
जीव[21]न्यासं ततो मन्त्री प्राणमन्त्रेण शोधयेत् ।
* * * तथा नाभौ ह्यु[22]दरे गुह्यदेशके ॥ २८ ॥

1 A °णं । 2 A बिन्दुमायां । 3 A °पत्रे । 4 A दत्तं । 5 B भो° । 6 AU वाञ्छाया । 7 A यवर्गं । 8 U °त्तैश्च । 9 U स्वयन्त्रं; B न । 10 A °ने । 11 A °खैर्म° । 12 A °दन् । 13 AB सुवर्णं मुण्डवत् । 14 A च अगुरु° । 15 U गुडं च । 16 A भूलक्षे; B मूले ते । 17 A अंकक° । 18 A °त° । 19 B °की; A °नी । 20 U °रह्निँ° । 21 U बीज° । 22 B तू° ।

ऊरू जानु तथा जंघा गुल्फ[1]पादं ज[2]लेन च ।
शीर्षे[3] कण्ठे नासिकायां चक्षुषोः कर्णयोरपि ॥ २९ ॥
शिखाकवचगण्डेषु ऊर्ध्वाधो वाष्टके तथा ।
दन्तयोश्चैव[4] जिह्वायां शिरःपृष्ठे च पाद[5]यो ॥ ३० ॥
हृदादिके च बाहुभ्यां पादयोश्च तथैव च ।
सर्वाङ्गे विन्यसेद्देवि[6] पीठन्यासमनुत्तमम् ॥ ३१ ॥
सूर्यस्य मण्डले[7] तत्र जपन् याति[8] कलात्मकम् ।
मृतकाय शवायात्र नमश्चांतेपदं ततः ॥ ३२ ॥
स्नापयेन्मूलमन्त्रेण पूजितेनोष्ण[9]वारिणा ।
सूर्यसोमात्मकं पीठं अग्नि[10]रूपं प्रकल्पयेत् ॥ ३३ ॥
मेरुपृष्ठऋषिच्छन्दो भूतलं तदनन्तरम् ।
कूर्म्मोदरस्ततः[11] पश्चाद् धर्मार्थं साधये[12]त्ततः ॥ ३४ ॥
मोक्षो हि मानसश्चैव सिद्ध्यर्थं परिकीर्तितम् ।
मुद्रां कौर्मीं दर्शयित्वा अस्त्रावगुण्ठयेत्ततः ॥ ३५ ॥
शक्तियोनिं मत्स्यमुद्रां धेनुमुद्रां ततः शिवे ।
प्रदर्शयेच्छोटिकां च चतुरस्रां प्रदर्शयेत् ॥ ३६ ॥
[13]धृत्वा विमर्शये[14]न्मूलं पृथ्वी त्वयेति वै क्रमात् ।
ततो वक्त्रोदकेत्यादि मनुभिः कामसंख्यकैः ॥ ३७ ॥
प्रणवं पूर्वमुद्धृत्य सहस्रारपदं ततः[15] ।
हुं फट् स्वाहा तदन्ते च रक्ष रक्ष ततो[16] वदेत् ॥ ३८ ॥
महाप्रतिसरे सर्वविघ्नान्छेदययुग्वदेत् ।
हुं फडन्तं समुद्धृत्य वह्निजायां समुच्चरेत् ॥ ३९ ॥
दिक्पालयजनं कार्यं इन्द्रादिक्रमयोगतः ।
धीरार्गलाघोर[17]मन्त्रैस्तथा पाशुपतै[18]रपि ॥ ४० ॥
महामण्डलमन्त्रैर्वा दिग्बन्धस्तत्र कारयेत् ।
शिवाबलिं तत्र दद्याद् गुरोरादा[19]वपि प्रिये[20] ॥ ४१ ॥
आदौ मध्ये तथा चांते त्रिवारां तु शिवाबलिम् ।
मुण्डग्रहणकाले तु सर्वथा तु शिवाबलिः ॥ ४२ ॥
शिवं शक्तिं च वा पूज्य दिक्पालान्बलिसंयुतान् ।
पूजयेत्परमेशानि आयुधानि यथाक्रमम् ॥ ४३ ॥

[1] A उरु° । [2] A त° । [3] B शिरे; A कुरे । [4] AB दशश्चैव च । [5] A °श्वं° । [6] A °देवं; B °द्देवं । [7] B °लं । [8] B जपिन्यादि; A जपन्यादि । [9] B °नाष्ट° । [10] U सम° । [11] B कूर्मो देवस्ततः; U कूर्मे च देवतां । [12] A °ने त° । [13] U कृ° । [14] °य° । [15] A सदैवतः । [16] A अक्षराक्षरतो । [17] A परं । [18] U °ते° । [19] U गृहाणादा । [20] A °स्तरणदानपि ।

